# काश्यपशिल्पसम्बन्धि निवेदनम् ।

अयि भो गीर्वाणवाणीरसिकाः प्राचीनविद्यारहस्याभिज्ञा अत एव तत्र दृढबद्धादराः प्राच्यार्वाचीनविद्याविशारदा आनन्दाश्रमसंस्कृतग्रन्थावलीप्रकाशितग्रन्थग्राहकमहाशयाः शृणुतेदानीं निवेदनीयमस्ति किंचित् । अतोऽवधानं दीयमानमाशास्से । काश्यपशिल्पनामा शिल्पशास्त्रीयग्रन्थोऽद्यावधि देवनागर्यां लिपौ क्वाप्यमुद्रितोऽत्र मुद्रणालये मुद्रणायोपक्रान्तः । उपक्रान्तस्य च तस्य दश द्वादश वा मासाः संवृत्ताः । सम्प्रति परिसमाप्तमुद्रणोऽयं ग्रन्थो विदुषां दृष्टिपथमवतरतीति प्रमोदावहमेतत् । काश्यपशिल्पेति नाम्नैवास्य ग्रन्थस्य विषयः कर्ता चावगतो भवति । कलाकौशल्यादिकं कर्म शिल्पमित्युच्यते । तदुक्तममरसिंहेनामरकोशे द्वितीयकाण्डे शूद्रवर्गे—शिल्पं कर्म कलादिकमिति । आदिशब्देन सुवर्णकारगृहकारादीनां कर्म ग्राह्यमिति तट्टीकायामुक्तम् । तादृशं शिल्पमधिकृत्य प्रणीतं शास्त्रमपि लक्षणया शिल्पशब्देनोच्यते । यथा वासवदत्तामधिकृत्य कृताऽऽख्यायिकाऽप्यभेदोपचाराद्वासवदत्तेत्युच्यते तद्वत् । तच्च शिल्पं तक्षणं वास्तुविज्ञानमलंकारकरणं तन्तूनां वयनं माल्यग्रन्थनं काचवलयादिकरणमालेख्यकरणं ताम्रनहनं गीतं नृत्तं चेत्याद्यनेकभेदभिन्नम् । तथा तत्प्रतिपादकं शास्त्रमप्यनेकभेदभिन्नम् । तत्र शिवविष्णुब्रह्मस्कन्दगणेशपार्वतीलक्ष्मीसरस्वत्यादिमूर्तिनिर्माणसहिततत्तद्देवतालयप्रासादहर्म्यगृहशालाद्यनेकप्रकारकवास्तुनिर्माणप्रकारप्रतिपादनमिदं शास्त्रम् । *अर्थाद्वास्तुशास्त्रमिति विशेषणमस्य फलति ।* वसन्ति प्राणिनोऽत्रेति वास्तुशब्दव्युत्पत्तिः । प्रासादहर्म्यादिकं गृहं तदर्थः । गृहं च सर्वसुखोपभोगस्य मुख्यं साधनम् । तदुक्तम्—

स्त्रीपुत्रादिकभोगसौख्यजननं धर्मार्थकामप्रदम् ।
जन्तूनां लयनं सुखास्पदमिदं शीताम्बुघर्मापहम् ॥
वापीदेवगृहादिपुण्यमखिलं गेहात्समुत्पद्यते ।
गेहं पूर्वमुशन्ति तेन विबुधाः श्रीविश्वकर्मादयः ॥ इति ।

अस्य च कर्ता कश्यप ऋषिः । तत्र काश्यपेति विशेषणात् । कश्यपेन प्रोक्तं काश्यपं तच्च तच्छिल्पं चेति । अथ श्रीविष्णोर्नाभिकमलात्समुद्भूतस्य

ब्रह्मणो नप्ता यज्ञे सोमरसपानात्कश्यपेत्यभिधान प्रापतान । तदुक्त मार्कण्डेय-पुराणे—

> ब्रह्मणस्तनयो योऽभून्मरीचिरिति विश्रुत ।
> कश्यपस्तस्य पुत्रोऽभूत्कश्यपानात्स कश्यप ॥ इति ।

कश्य सोमादिरस पिबतीति कश्यप इति तद्व्युत्पत्ति । कर्ता च य खलु य कश्चिदर्थविशेष प्रतिपादयितु स्वातन्त्र्येण पदवाक्यसन्दर्भमारचयति स उच्यते लोके । एव च व्यासेन प्रोक्त वैयासिक भारतमित्यादौ भारतस्य व्यास इवास्य शिल्पशास्त्रस्य कश्यपेन प्रोक्तत्वात्कश्यप कर्ता सिध्यति । नन्वय शिल्पशास्त्रार्थ किं कश्यपस्य तप प्रभावादिना स्वयभात किमुत केनाचिदुपदिष्ट स्यात् । स्वयभातश्चेदुच्यते कश्यपस्यैतच्छिल्पशास्त्रकर्तृत्वम् । अन्येन केनापि उपदिष्टश्चेद्य एवोपदेष्टा स एवास्य शास्त्रस्य कर्ता भवेन्न कश्यप । यतो यादृशानुपूर्वीघटितवाक्यसन्दर्भोऽन्येनोच्चारितस्त तथैवाहमुच्चारयामीति मनसि कृत्वा य निश्चोच्चारयति नासौ कर्ता लोके प्रोच्यते, किं त्वनुवादक स भवति । तत्र स्वयभात इत्येतद्विषये न किंचित्प्रमाणमुपलभ्यते । उपलभ्यते त्वन्येनोपदिष्ट इत्यर्थे प्रमाणम् । यत किल अन्योपक्रम एव श्रूयते—

> प्रणम्य देवचरणमेव ब्रूयात्स कश्यप ।
> महार्थगल्पग्रन्थ च कर्षणाद्यर्चनान्तकम् ॥
> अशुमन्तमहातन्त्राद्यत्त्वयोक्त पुरार्थकम् ।
> तन्त्र तद्वद् देवाना रुद्राणामधिकारिणाम् ॥
> अल्पायुष्यादिधर्माणा नराणा त्वधिकारिणाम् ।
> अनुग्रहार्थं त्वेतेषा सक्षेपाद्वद मे प्रभो ॥ इति ।

एव च सर्वप्राणिसुखसाधनमेतद्वास्तुशास्त्र कश्यपेन महर्षिणा लोकोपकारार्थं देवाधिदेवाय श्रीशकराय पृष्ट ततश्च चराचरगुरुणा परमेश्वरेण पार्वतीरमणेन सर्वविद्यानामीशानेन जिज्ञासवे कश्यपनाम्ने महर्षये उपदिष्टमिति गम्यते । ततश्च महेश्वर एवास्य कर्ता कश्यपस्तु केवल प्रकाशक इति कथ कश्यपस्यैतद्वास्तुशास्त्रकर्तृत्व साम्प्रत इति चेदुच्यते । यद्भगवता श्रीकृष्णेन शिष्योत्तमाय पार्थाय गीताशास्त्रमुप-

दिष्टमपि न तावता गीताया कर्ता श्रीकृष्ण उच्यते किंतु वेदव्यास एव तत्कर्ता स्मर्यते लोके । अत एवोक्त भगवद्गीताशांकरभाष्ये आचार्यचरणै -त धर्मं भगवता यथोपदिष्टं वेदव्यास सर्वज्ञो भगवान्गीताख्यै सप्तभि श्लोकशतै रुपनिबबन्धेति । तद्वदेतच्छिल्पशास्त्रार्थो भगवता महेश्वरेणोदीरितोऽपि न तावताऽस्य शिल्पशास्त्रस्य महेश्वर कर्ता भवितुमर्हति किंतु लोकप्रसिद्ध्या कश्यप एव कर्तेत्युच्यते । प्रतिपटलसमाप्तौ च काश्यपशिल्पे, इत्युल्लेखदर्शनेनापि तथैवानुमीयते । अत एवास्य शास्त्रस्य काश्यपसंहिता काश्यपशिल्पमिति च व्यवहरन्ति तज्ज्ञा । किंच योऽयं शिल्पशास्त्रार्थो महेश्वरेण कश्यपायोदीरित सो तिसंक्षिप्तयैव गीर्वाणवाण्योपदिष्ट इति मन्ये । संक्षिप्तत्व च बहुलार्थकत्वसि शिष्टसंकुचितपदवाक्यघटितत्वम् । वचनार्थकशब्दसमभिव्याहारे संक्षेपशब्दस्य तादृशार्थकत्वस्यैव बहुशो दृष्टत्वात् । तादृशी च वाणी सूत्ररूपा । तथाच श्रूयते—

अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदु ॥ इति ।

एवं च सूत्रीभूतभाषया शिल्पशास्त्रार्थो महेश्वरेणोदीरित । युज्यते चैषा कल्पना । यत —महार्थमल्पग्रन्थं च संक्षेपाद्वद मे प्रभो, इति ग्रन्थारम्भे ग्रन्थकारेण स्वयमेवोक्तत्वात् । ततश्च संक्षिप्तपदवाक्यघटितात्सूत्रीयात्कुशाग्रधिषणानर षोद्धुं । यद्यपि निःसंदिग्धतया सुलभतया च यथावदर्थावबोध संजायेत तथाऽपि मन्दमतीनां तेषां तस्मात्तथाऽर्थावबोधो न स्यादित्यनुसंधाय लोकोपकृतये कश्यपमहर्षिणा तादृशार्थानुग्राहिता सुबोधपदवाक्यघटिता सुविस्तृताऽनुष्टुप्छन्दोमयी गीर्वाणवाणी व्यरचीत्यमुष्य शिल्पशास्त्रस्य कर्तृत्व कश्यपे स्थिरी भवति ।

अथेदमिदानीं चिन्त्यते कदाऽस्य शिल्पशास्त्रस्यास्मिञ्जगति प्रवृत्तिरभूदिति । तत्र अल्पायुष्यादिधर्माणां नराणामित्युक्तत्वान्मुख्यतो मनुष्यप्राणिनां सुखसाधनमिदं शास्त्रम् । अनुभवश्चात्र साक्षीति न कश्चिद्विवाद । यद्यप्येतच्छास्त्रप्रतिपाद्यो वास्तुरूपोऽर्थ पशुपक्ष्यादीनां तिरश्चामपि सुखसाधनं भवितुमर्हति तथाऽपि न तेषां सुखसाधनत्वेन नियत । यतस्तेऽयत्नसिद्धतरुगुल्मवृक्षजालगिरिकन्दर्यादि

संश्रयणेनापि वर्णोत्कर्षं निवारयन्ति । न चैते शास्त्रार्थावगमक्षममनुष्य । नैव वा
तादृशशिल्पकरणे कदाऽपि शक्ता । तस्मान्मनुष्यप्राणिसृष्ट्युत्तरकालमस्य शास्त्र
स्य जगति प्रवृत्ति सिध्यति ।

अथ मनुष्यप्राणिसृष्टि सृष्टिक्रमेण कदाऽभूत्किं तिर्यक्प्राणिसृष्ट्युत्तरं मनुष्य
प्राणिसृष्टिरथवा मनुष्यप्राणिसृष्ट्युत्तर तिर्यक्प्राणिसृष्टिरिति विचार्यते । तत्र
कार्यकरणसंघातस्य देहस्य भौतिकत्वान्महाभूतोत्पत्त्यनन्तर प्राणिसृष्टिरिति ताव
न्निर्विवादम् । यद्यपि सृष्टिप्रतिपादकश्रुतिषु पञ्चमहाभूतोत्पत्तिविषये—आत्मन
आकाश सभूत । आकाशाद्वायु । वायोरग्नि, इत्यादिना क्रम श्रूयते
तथाऽपि भौतिकसृष्टिविषये विशेषत प्राणिसृष्टिविषये न श्रुतौ क्रम स्पष्ट
प्रतीयत इति ब्रुवाणास्तूष्णीमासते । नवीनास्तु युक्तिमालम्ब्य तिर्यक्सृष्ट्युत्तर
तत्रापि वानरसृष्ट्युत्तर मनुष्यसृष्टिं प्रतिपादयन्ति । तदित्थम्—प्राणिषु गण्डूपद
मारभ्योत्तरोत्तर क्रमेण महत्सु अधिकाधिक बुद्धितारतम्यमनुभूयते । तारतम्यस्य
परा काष्ठा च मनुष्येषु । यद्यपि केचित्पशव सिंहव्याघ्रगजादयो मनुष्यापेक्ष
याऽपि स्थूला सल्लक्ष्यन्ते तथाऽपि तदपेक्षया मनुष्या एव महान्त । यतस्ते
सिंहव्याघ्रादीन्पराक्रमशालिनोऽपि युक्तिप्रयुक्त्यादिभि स्ववशमानयन्तीति
लोके दृश्यते । एव स्थिते यदा भगवत परमेश्वरस्य बहु स्या प्रजायेयेति
सिसृक्षा समजनि तदा स्वनाभिकमलात्स्रष्टारमुद्भाव्य तमाज्ञापितवान्प्रभु प्रजा
सृजेति । स च विधाता सर्वास्वपि दिक्षु दृष्टिं दत्त्वा सर्जनोपायमन्विष्यमाणो
गिरिनदीसमुद्रादिका सुविशाला पञ्चमहाभूतसृष्टिं विलोक्य बभ्राम । यदा तु न
लेभे सर्जनोपायमथ शोकाकुलो भूत्वा भगवन्त शरणमुपगम्य सर्वथा मूढोऽह
बालकस्ते त्रायस्व मा भ्रान्तमिति प्रणिपत्य व्यजिज्ञपदज्ञोऽह न जाने सर्जन-
मार्गं कथ प्रजा सृजेय तत्प्रसीदतु मह्य भगवानिति । सतुष्ट परमेश्वरस्तस्मै
साङ्गोपाङ्ग वेदराशिं समर्पितवान् । ततस्तदर्थमनुसधाय सृष्टिं विरचयितु प्रथमत
एव प्रवृत्त स्रष्टा न साधीयसीं सृष्टिं निर्मातु शशाक । लोकेऽपि पदार्थान्निर्मातु
प्रवृत्तः कुविन्दादिरभ्यासपाटवाभावात्प्रथमत साधीयस पदार्थानुत्पादयितु शक्नो
तीति दृश्यते । क्रमेण चाभ्यासपाटवातिशयवशात्तत्तत्कार्यविशेषकरणसम-
र्थान्पदार्थान्महार्घान्निर्मिमीते । तथाऽयमपि विधातोत्तरोत्तरमभ्यासपाटवातिशयवशा-
द्वेदशास्त्रेतिहासार्थानुसधानेन तत्प्रतिपाद्यार्थभूतशिल्पाद्यनुष्ठानसमर्था मनुष्यसृष्टिं

चकारेत्यवगम्यते। तत्राभ्यासापाटवावस्थाया या प्राणिसृष्टि सृष्टा सा न समीचीना। यत प्रथमत एवानुष्ठित किंचिदसमीचीनमिव भवति। सा च सृष्टि गण्डूपदादि वानरपर्यन्ता शिल्पशास्त्रार्थज्ञानानुष्ठानाक्षमेति मे मति। कथमन्यथा ता सृष्टिं तिर्यगिति व्यवहरेयुर्लोका विचारशीला। एव क्रमेणेय सृष्टिरुत्क्रान्ता। तदुत्तर च तत्तच्छिल्पविशेषप्रयोगपटीयसी मनुष्यप्राणिसृष्टिरित्यर्थाद्वानरसृष्टयुत्तरमाविरभवन्मनुष्यसृष्टेर्वदन्ति। अत एव वानरजातीयेषु नरसादृश्य दरीदृश्यमानमुपपद्यते। वानरशब्दोऽपि अमुमेवार्थमभिधत्ते। तत्र नरशब्दो मनुष्यवाची। वाशब्दश्च सादृश्यार्थक। नर इव वानर। तथा च मनुष्येषु यादृशो हस्तपादाद्यवयवरचनाकारो दृश्यते तादृश आकारो यत्र स वानरशब्दभाक्। स च वानरो मनुष्यत्वावस्थाया पूर्वावस्थेति च वदन्ति। अत्र युक्तायुक्त त एव जानन्ति।

मनुष्यप्राणिजातिषु मुख्यतश्चत्वारो भेदा श्रूयन्ते ब्राह्मणक्षत्रियवैश्यशूद्रा इति। तत्र ब्राह्मणाख्यवर्णेन वेदशास्त्राध्यापनादिकर्मोपजीविकानिर्वाहकत्वेनोररीकृतम्। क्षत्रियै शौर्यादिना दुष्टनिग्रहसज्जनानुग्रहरूपपृथ्वीपरिपालनादि। वैश्यै क्रयविक्रयादि कर्म। शूद्रै पूर्वोक्तवर्णत्रयशुश्रूषा कारकर्म च जीविकासाधनत्वेनाङ्गीकृतम्। तदुक्त भगवद्गीतायाम्—

चातुर्वर्ण्य मया सृष्ट गुणकर्मविभागश, इति।

तत्र ये कारकर्मोपजीविकासाधनत्वेन परिगृहीत ते शिल्पिन इत्युच्यन्ते। ते च शिल्पानामनेकविधत्वादनेकविधा। तत्र केचित्तत्तच्छिल्पविशेषस्य नियतमङ्गीकरणात्स्थपतिसुवर्णकारकुलालकुविन्दादितत्तज्जातीयत्वेन व्यवह्रियन्ते। तेषा केषाचिल्लक्षणमुत्पत्तिश्च यथा श्रूयते—

वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रम।
दीर्घदर्शी च शूरश्च स्थपति परिकीर्तित॥ इति।

स्थपतिर्मुख्यतक्षा। तथा—

विश्वकर्मा च शूद्राया वीर्याधान चकार स।
ततो बभूवु पुत्राश्च नवैते शिल्पकारिण॥
मालाकार कर्मकार शङ्खकार कुविन्दक।

कुम्भकारः कंसकारः षडेते शिल्पिनां वराः ॥
सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च । इति ।

स्थपतिकुविन्दकंसकारादिनाम्ना प्रसिद्धैस्तैस्तैः शिल्पिभिस्तत्तच्छिल्पविशेषस्य जीविकानिर्वाहकत्वेनाङ्गीकरणात्तत्प्रतिपादकेषु शिल्पशास्त्रीयग्रन्थेषु ब्राह्मणैरुदासितम् । अत एव कारणाद्ब्राह्मणजातीयेषु शिल्पशास्त्राध्ययनाध्यापनप्रचारो लुप्तप्रायोऽभूदिति शिल्पग्रन्था अपि शिल्पिहस्तगता अभवन् । स्थपत्यादयस्ते च शिल्पिनः स्वस्वशिल्पानुष्ठाने यद्यपि कुशलाः संलक्ष्यन्ते तथाऽपि प्रायस्ते गीर्वाणवाणीपराङ्मुखाः । नैतावदेव किंतु स्वनामोल्लेखनपर्याप्ताक्षराणामध्ययनभिज्ञाः । प्रयत्नेन कतिपयाक्षराणि ग्राहितास्तदपि स्वयमपि लिखितं स्वयं न वाचयतीत्याभाणकस्योदाहरणभूता भवन्ति । तत्र तादृशाक्षरार्थाकलनस्य कैव वार्ता । न च ग्रन्थार्थज्ञानेन तेषां किंचित्प्रयोजनम् । तदन्तरेणैव शिल्पप्रयोगकरणे समर्थास्ते । स समय एव तादृश आसीत् । यत्र शिल्पग्रन्थानां पठनपरम्परा तज्जातीयेष्वपि विलयं गताऽभूत् । परन्तु एतावति कालेऽन्यथावत्तद्धस्तगतानां शिल्पग्रन्थानां कीदृशी दुरवस्था संजाता स्यादिति तत्रभवद्भिर्भवद्भिरेव कल्पनीयम् । सम्प्रत्युपलब्धस्य काश्यपशिल्पग्रन्थस्यैकमपि प्रत्यन्तरं महाराष्ट्रदेशे नोपलभ्यते । सौराष्ट्रादिदेशे स्थपतिनामकानां शिल्पिनां समीपे क्वचिदस्तीति श्रूयते । तद्देशादेव एकं वा द्वे वा प्रत्यन्तरे वज्रकुलोत्पन्नैः शिल्पकलानिधिकृष्णरायैः सपाद्य नागरलिप्या विलेख्य मुद्रणार्थमेतन्मुद्रणालये समर्पितम् । तच्चाशुद्धिप्रचुरं स्थले स्थले त्रुटितं वर्णविपर्यासस्य तु परां काष्ठामापन्नम् । तत्रापि विदेशीयलिप्यां येन केनाप्यक्षरस्याप्यनभिज्ञेन हस्तेन लिखितम् । किं वक्तव्यं प्रभाते नक्षत्रसततिरिव लिङ्गवचनसंगतिरपि दुर्दर्शा । अत्र सर्वत्र सन्तुलीकरणे लेखकपरम्परयाऽपि प्रभूतं साहाय्यमाचरितं दृश्यते। संशये तादृशो लेखकः शैशवे शालां प्रविश्य स्थूलाक्षराणि शिक्षितो वा न वेति । मन्ये नैतादृशस्य बहुलाशुद्धिस्थलसंकीर्णस्य सर्वात्मना विपर्यासं गतस्यास्य संशोधनं वर्षाकालेनात्यन्तकलुषपयःपूरपतितार्थस्येव दुष्करम् । तर्कयामि यः कोऽपि अन्यः सहायभूतानि त्रिचतुराणि प्रत्यन्तराण्यन्तरा नार्हति संशोधनं यथा तथाऽयमपि सहायभूतास्त्रिचतुरास्तज्ज्ञान्संशोधकान्विना न क्षमः परिशोधयितुमिति । एवं च मुद्रणपथाद्विगलितोऽपि यन्थो मुद्रणाय नोपक्रम्येत चेदुत्तरोत्तरं लेखकपरम्पराऽविरा-

धिकमेव विपार्यासभावं गतः स्यात् । तथा च महर्षिकश्यपप्रणीतस्यास्य लोकोपयुक्तस्य शिल्पग्रन्थस्य विलय एव जायेत । इत्यालोच्य प्राचीनसंस्कृतग्रन्थोद्धारबद्धपरिकरैरेतत्संस्थाध्यक्षैस्तदुद्धारार्थोऽयं प्रयत्नोऽङ्गीकृतः । स्थपतिसंज्ञकैश्च कर्मकरैरप्युपकृतं मन्ये यैर्यादृशतादृशाक्षरैरुल्लिख्यायं मनोरञ्जकः शिल्पशास्त्रीयग्रन्थः संगृहीतः । येनैतादृग्दुरवस्थो ग्रन्थो विदुषामग्रे संस्थाधिपतिभिः प्रस्थापितोऽभूत् । तदेनं ग्रन्थमुद्दिधीर्षवः प्राच्यार्वाचीनशिल्पशास्त्रविशारदाः पण्डिताः सादरं विलोक्य त्रिचतुराद्यशुद्धिस्थलपरिमार्जनसंसूचनेनाशंतोऽप्येतद्ग्रन्थोद्धारजनितश्रेयोभागिनो भवन्त्विति प्रार्थयते श्रीसच्चिदानन्दचरणकमलयोः—

आनन्दाश्रमस्थप्रधानसंस्कृतग्रन्थावलीसंशोधनकर्ता—
मारुलकरोपाह्वः शंकरशास्त्री ।



# उपोद्घातः ।

–x+x–

अस्ति मानवजातेरुत्पत्तिक्षणादेव शिल्पस्य जन्म । विविधपरिस्थितिषु नानाविधयोजनाभिर्दुःखपरिहारपूर्वकं सुखोत्पादनप्रयत्न एव मनुष्यत्वपशुत्वयोर्विशेषः । न केवलं जगतो भिन्नभागेषु परमेकस्मिन्भागेऽपि विभिन्नकालेषु, तथा चैकस्मिन्कालेऽपि परिस्थितिभेदेषु मनुष्येषु यथा भोगवैचित्र्यं दृश्यते न तथा पशुषु । पूर्वकाले काकवृकादयो यथाऽवर्तन्त तथैव सद्यःकालेऽपि वर्तन्ते । आङ्ग्लदेशस्थिताः काकवृका भरतभूमिस्थितेभ्यः काकवृकेभ्योऽसदृशवेषभोगाः । भरतभूमावपि षट्सु ऋतुषु काकवृकानामेका स्थितिः । तथा कृतयुगकालीनमनुष्याणां स्थितिः कलियुगकालीनमनुष्याणां स्थितेर्भिन्ना । आङ्ग्लदेशस्थितानां मनुष्याणां भोगवेषादयो भरतभूमिस्थितानां मनुष्याणां भोगवेषेभ्यो विसदृशाः । भरतभूमावपि ग्रीष्मशरद्धेमन्तऋतुषु मनुष्याणां भोगवेषा भिन्नाः । एकस्थाने निवसत्सु चैककालीनेषु मनुष्येषु संपन्नविपन्नानां भोगवेषा नैकरूपाः । एष सर्वः शिल्पस्य प्रभावः । अत एव पराशराद्यो महर्षयो मनुष्यसृष्टिं पशुसृष्टेर्भिन्नरूपां मन्यन्ते । स्मर्यते च भृगुसंहितायाम्—

> आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
> अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥
> तस्मिन्विकारः संभूतस्त्वधोगमननामकः ।
> यस्मात्सर्वं च संजातं चराचरमिदं जगत् ॥ इति ।

पराशरीयकृषौ—

> कालद्रव्यगुणैस्तस्मात्त्रिविधः प्रतिसंक्रमः ।
> आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥
> द्वितीयस्त्वहमः सर्गो ज्ञानद्रव्यक्रियात्मकः ।
> भूतसर्गस्तृतीयश्च तन्मात्रो द्रव्यशक्तिमान् ॥
> चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ।
> वैकारिको देवसर्गः पञ्चमो मन्मयं मनः ॥
> षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः सदा ।
> ऊर्ध्वस्रोतः सप्तमस्तु षड्विधस्तथुषां चयः ॥
> तिरश्चामष्टमः सर्गो योऽष्टाविंशतिधा स्मृतः ।
> अर्वाक्स्रोतस्तु नवमः कैकेकरविधो नृणाम् ॥ इति ।

अस्य जगत उत्पत्ते प्रागिदं विश्वं तम प्रायमप्रज्ञातमलक्षणं सर्वत प्रसुप्तमिव शान्तमासीत् । तस्मिन्विकार समूत । अस्य विकारस्य चाधोगमन ( गुरुत्व ) नाम । अस्याऽऽकर्षणात्सर्वं वस्तुजातमधो गच्छति तस्मात्सोऽधोगमननाम्ना ज्ञायते । पदार्थानामध पतनकारणत्वात्स गुरुत्वमित्यप्यभिधीयते ।

अस्य विकारस्य प्रादुर्भावक्षणादेव कालो गण्यते । विष्णोराज्ञया प्रवर्तमानस्याद्य ब्रह्मण इति । दिगपि तदनुसारेण ज्ञायते । श्रूयते च—

दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा , इति । एवं सर्वा दिशोऽपदि शम्त्वधोबिन्दुसापेक्षतयैव ज्ञायन्ते । महदल्पादिगुणा अपि तस्याऽऽकर्षणाद्घनीभूतस्य तत्त्वस्याधिकन्यूनपरिमाणतया मीयन्ते । तारतम्येनानुभूयन्ते च । द्रव्यज्ञानक्रियासु चैके काधिक्यतया पञ्च महाभूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्चगुणग्रहणसमर्थं मनश्च प्रादुर्भूतम् । भूतानि द्रव्यविशेषात्, इन्द्रियाणि क्रियाविशेषात्, मनश्च ज्ञानविशेषात्, इति । भूतादीना समिश्रणेन साशनानशना सृष्टिर्जाता । तथा च श्रूयते पुरुषसूक्ते—

तस्माद्विश्व व्य(तो विष्वङ्व्य)क्रामत्साशनानशने अभि, इति । तयो साशनपदार्थो स्रोतोभेदतस्त्रिविधा । ऊर्ध्वस्रोतसस्तिर्यक्स्रोतसश्चार्वाक्स्रोतस इति । ऊर्ध्वस्रोतसा वनस्पत्योषधिलतादय षट्प्रकारा भवन्ति । तिर्यक्स्रोतसा च पशुपक्षिमत्स्यादयोऽष्टाविंशतिप्रकारा । अर्वाक्स्रोतसस्तु केवल एक एव प्रकारो नृसञ्ज्ञक । अर्वाक्स्रोतस एव कश्चिद् नैमूला इत्यपि कथ्यन्ते । इत्थं विकारप्रादुर्भावपरम्परया चराचरा स्मिकाऽखिला सृष्टिरुत्पन्ना । मनुष्याणामुत्क्रान्तेरनुसारेण शिल्पस्याप्युत्क्रान्तिरिति ।

मनुष्यशब्दो मनस —विचारशक्ते —उष्य—वसतियोग्य स्थानमिति निरुच्यते । शिल्पशब्दस्तु पुन शील समाधौ, इति धातोर्मनस समाधानकारक वस्तुजातमिति व्युत्पद्यते । स्मर्यते च भृगुसंहितायाम्—

नानाविधाना वस्तूना यन्त्राणा कल्पसम्पदाम् ।
धातूना साधनाना च वास्तूना शिल्पसञ्ज्ञितम्, इति ।

शिल्पे नानाविधसाधनानामिममूराच्छादनानामिसर्वस्य वस्तुजातस्य समहो भवतीति भृगुसंहितायाम् । श्रूयते च—

यत्ते शिल्प कश्यप रोचनावद् ।
इन्द्रियावत्पुष्क चित्रभानु ॥
यस्मिन्त्सूर्या अर्पिता सप्त साकम् ।
तस्मिन्राजानमधिविश्रयेनम् ॥

इति तैत्तिरीयसंहितायां कश्यपस्य प्राकारे राज्ञ आश्रयो याचितः । एवं शिल्पं जगतः प्रारम्भत उत्पन्नं दृश्यते । विद्यमानग्रन्थास्तु कदा केन वा ग्रथिता इति स्पष्टं न ज्ञायते । कश्यपसंहिता तु भगवता कश्यपेन स्वपुत्राय नैध्रुवय उपदिष्टा भवति ।

भारतवर्षीयाणां धर्मादयः सर्वे पुरुषार्थाः श्रुतिस्मृतिपुराणोक्ताः । श्रुतिषु सर्वेषां शास्त्राणां मूलम् । स्मृतिषु तस्य विस्तारः । पुराणेषु कथोपकथादृष्टान्तैस्तस्य विशदीकरणं भवति । उक्तं च—

' इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ' इति ।

वैदिकमेकं सूक्तं स्मृतिषु प्रकरणरूपमेति । तच्च पुराणेषु ग्रन्थतामायाति । नद्याः प्रवाह इव शास्त्रं विस्तरमुपैति ज्ञानसागरे चःलीयते । शिल्पसंहितायां दश शास्त्राणि द्वात्रिंशद्विशश्चतुष्षष्टिश्च कला भवन्ति । तेषां शास्त्राणां श्रुतिस्मृतिपुराणोक्तत्वं स्वल्पेन स्पष्टी क्रियते । तद्यथा सौरसूक्ते—

१ कृषिशास्त्रम्—शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।
अतो(धो) हारिद्रवेषु मे हरिमाणं निदध्मसि ॥ इति ।

हे सूर्य मम निःश्वासतो निःसृतं हारिमाणसंज्ञकं वायुं त्वं शुकेषु ( वृक्षेषु ) च रोपणाकासु ( लतासु ) च दध्मसि ( निदधासि ) । इत्थं मम हारिमाणेन त्वं वनस्पतीन् हारितद्रव्ययुक्तान्करोषि । वनस्पतिषु यद्धारितं द्रव्यं दृश्यते तत्सूर्यप्रकाशेन हारिमाणवायुतः संभवति । हारितद्रव्यस्योत्पत्तिसामर्थ्यात्स वायुर्हारिमाण( हरितीकुर्वाणः ) इति उच्यते—

( २ ) शुनं नः फाला विकृषन्तु भूमिम् ।
शुनं किनाशा अभियन्तु वाहैः ॥
शुनं पर्जन्यो मधुना पयोभिः ।
शुनासीराः शुनमस्मासु धत्तम् ॥ ( ऋ० ४ । ५७ । ८ ) ।

यजुर्वेदे चाथर्ववेदे च समानार्थको मन्त्रो लभ्यते । फाला अस्माकं भूमिं सुकर्षन्तु, कृषीवला बलीवर्दाननुयान्तु, मेघा मधुराणि पयांसि वर्षन्तु, अस्मासु धनधान्यसमृद्धिर्भवतु ।

( ३ ) अग्निश्रियो मरुतो विश्वकृष्टयः ।
आ त्वेषमुग्र अव ईमहे वयम् ॥

ते स्वानिनो रुद्रिया वर्षनिर्णिज ।
सिंहा न हेषक्रतव सुदानव ॥ ( ऋ० ३ । २६ । ५ )।

ग्रीष्मे सूर्यस्य प्रखरकिरणैस्तप्ता वायव सर्वं रसवस्तु हिमालयादिशीत प्रदेश नयन्ति। ते मेघा स्वरर गर्जन्तो भीषणा जलवर्षणसमर्था वायुभिरन्तिस्प्यन्ते । वय च तन्मे घवृष्टित पुष्पफलजलसमृद्धिं प्राप्नुवाम। इत्यादिषु श्रुतिवाक्येषु कृषिर्व्याख्याता भवति। एवमन्येषामपि शास्त्राणा ज्ञातव्यम् ।

२ जलशास्त्रम्—वातत्विषो मरुतो वर्षनिर्णिजो यमा इव सुसदृश सुपेशस ।
पिशङ्गाश्वा अरुणाश्वा अरेपस प्रत्वक्षसो महिना द्यौरिवोरव ॥
( ऋ० ५ । ५७ । ४ )।

जलवर्षणसमर्था कृष्णवर्णा वायुना नियमाना केचन पिशङ्गरङ्गा केचन रुणरङ्गा अश्वारूढा इव द्यौरिव दानशूरा भवन्ति। यथा द्यौ सर्वत्र प्रकाश ददाति तथा मेघा सर्वत्र जलमिति।

( २ ) या आपो दिव्या उत वा स्रवन्ती खनित्रिमा उत वा या स्वयजा ।
समुद्रार्था या शुचय पावकास्ता आपो देवीरिह मामवन्तु ॥
( ऋ० ७ । ४९ । २ )

या आपो दिव्या दिवश्च्युता वा या भूमौ स्वत स्रवन्त्यो या खनित्रेषु लब्धा वा भू पृष्ठे नि सरन्त्यस्ता सर्वा समुद्रमेव गच्छन्ति। ता आप स्वयशुद्धा अन्यपदार्थांश्शु-द्धान्कुर्वन्ति। ता मा स्तोतार रक्षन्तु ।

( ३ ) श न आपो धन्वन्या शमु सन्त्वनूप्या ।
श न खनित्रिमा आप शमु या कुम्भ आभृता ॥
शिवा न सन्तु वार्षिकी ॥ अथर्व ( १ । ६ । ४ )।

मरुदेशस्थिता बहुजलदेशस्था वा कूपेषु स्थिता वा कुम्भेषु गृहानीता वा वृष्टिषु नभस्त पतिता वा सर्वा आपो न कल्याणाय भवन्तु।

३ खनिशास्त्रम्—अगस्त्य खनमान खनित्रै प्रजामपत्य बलमिच्छमान ।
उभावर्णावृषिरुग्र पुपोष सत्या देवेष्वाशिष आजगाम ॥
( ऋ० १ । १७९ । ६ )

धनधान्यपुत्रादिकमिच्छन्नगस्त्यो बहुधा खनित्रैर्धनानि हरिद्रादीन्वनस्पतीन्रत्न द्यान्यपुत्ररक्षार्थमपुपोष। तेन मत्र्येषु स्थिर कीर्ति च प्राप। खनिभ्यो विविध वस्तु-जात कीर्ति च प्राप्तवानिति।

( २ ) मह्य त्वष्टा वज्रमतक्षदायसम् । ( ऋ० १० । ४८ । ३ )

इन्द्र कथयति–मदर्थं त्वष्टाऽयोलोहस्य वज्रं चकारेति । 'पहार' इति ख्यातमृजु-लोहितं वज्रं भवेत् । तेनेन्द्रेण गिरयो विदीर्णास्तेषामुदरे स्थिता आपः स्रोतोरूपेण मुक्ताश्च ।

४ नौकाशास्त्रम् यमेन ततं परिधिं वयन्तोऽप्सरस उपसेदुर्वसिष्ठाः (ऋ०७।३।३।९)

कर्णधारस्य वशे स्थिता अप्सु सञ्चरन्त्यो नौका धीवरेण स्थापितं जालमाजग्मुः । मत्स्यान्भीषयन्त्य इतस्ततो भ्रमन्त्यो नौका जालमुपससर्पुः (लघु)।

( २ ) सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥
ऋ० १० । ६३ । १०

वातापी ( शिड इति महाराष्ट्रीयभाषाया ख्यातः ) युक्तामाकाशमिव मनोहरां, विस्तारवतीं, अरित्रैः ( वल्हे इति महाराष्ट्रभाषाया ख्याताः ) प्रचोदितां, जलमस्रवन्तीं नौकां वयं स्वकल्याणार्थमारोहाम ।

५ रथशास्त्रम्–( १ ) स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् ।
सुसंस्कृता अभीशवः ॥ ऋ० १ । ३८ । १२ ॥

युष्माकं रथानामश्वाश्चक्राणां नेमयश्च स्थिराः सन्तु । अभीशवो वाजिरश्मयश्चोत्तमाः सत्कारयुक्ता भवन्तु ।

( २ ) रथं ये चक्रुः सुवृतं सुचेतसो विह्वरन्तं मनसस्परि ध्यया ।
ऋ० ३ । ७ । २ । २८

यावश्विनीकुमारौ स्वबुद्धिसामर्थ्यात्सुन्दरं यथेष्टगमनसमर्थं रथं चक्रतुः । तस्मै रथाय वल्याकृतीनि चक्राणि युयुजतुः ।

६ विमानशास्त्रम्–मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ताम् ।
( ऋग्वेद )

घृताच्या घृतसम्रहणयोग्ये कुम्भे मित्रश्च वरुणश्च द्वौ देवौ तेजोयुक्तौ पदार्थौ जायेते । तयोर्मित्रः पूतो दक्षश्च भवति वरुणस्तु रिशादा नीचधातुभक्षणकर्ता भवति । विद्युतो धनऋणसञ्ज्ञकौ द्वौ प्रकारौ । तयोर्धनसञ्ज्ञको मित्र इति ऋणसञ्ज्ञको वरुण इति प्रकीर्त्यते । मित्रावरुणाभ्यां जलस्य प्राणोदानवायुषु पृथक्करणं भवति ।

( २ ) आविद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ॥ ऋ०

विद्युता संपादितेन 'उदान' नाम्ना वायुना पूरितैरर्कफलाकृतिभिर्यानैः कृतेषु रथेषु स्थित्वा यूयं पर्णरूपैरश्वैरधऊर्ध्वगामिभिरायात ।

७ वास्तुशास्त्रम्- इहैव ध्रुवां निमिनोमि शालाम् । क्षेमे तिष्ठतु घृतमुक्षमाणा ।
अश्वावती गोमती सूनृतावती । उच्छ्रयस्व महते सौभगाय ।

अस्मिन्स्थले स्वीयां शालां करोमि । सा मम कल्याणं ददातु । तस्यामश्वा गावो बालकाश्च महदैश्वर्याय भवन्तु ।

८ प्राकारशास्त्रम्-यत्ते शिल्पं कश्यप रोचनावत् । इन्द्रियावत्पुष्कलं चित्रभानु ॥
यस्मिन्सूर्या अर्पिताः सप्त साकम् । तस्मिन्राजानमधिविश्रयेनम् ॥
तैत्तिरीयसंहिता ।

हे कश्यप यत्त्वया निर्मितं सुन्दरं बलिष्ठं विस्तृतं तेजोयुक्तं च शिल्पं प्राकारः तस्मिन्नमुं राजानमाश्रयं यच्छेति ।

कश्यपेन निर्मिते दुर्गे कवचे वा राजाऽऽश्रयमिच्छति । तस्य मन्त्रिण इयं प्रार्थना ।

९ नगररचनाशास्त्रम्-ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति ।
ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहराणि ॥
अथर्व ३ । १५ । २

पृथ्वीजलवायुषु त्रिषु भुवनेषु ये रथगमनयोग्याः पन्थानः सन्ति ते मां तर्पयन्तु । क्रयविक्रययोग्याघृतपयआदिपदार्थान्क्रीत्वाऽहं धनं संपादयामि ।

( २ ) समानीव आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥

युष्माकं हृदयानि, शरीराणि, मनांसि चैकरूपाणि सन्तु । तेन यूयं परस्परं साम-यन्तः क्षेममवाप्स्यथ । आचारविचारव्यवहारेषु ये समाः सन्ति तेषां संगतिः सुखाय भवतीति ।

१० यन्त्रशास्त्रम्-तक्षन्धेनुं सबर्दुघाम् । ऋग्वेद०

विश्वरूपां सबर्दुघां सततम्नाभावयिनीं समर्थां धेनुं निर्ममुः । अनेन कामधेनुनाम्ना प्रसिद्धं विविधमहायन्त्रं भवतीति मन्यामि । विशेषतन्त्रशाखानोः प्रयोगात्तृत्रिमत्वं प्रदर्शने ।

( २ ) पुनर्ये चक्रु पितरो युवाना सनायूपेव जरणा शयाना ।

ये शिल्पिनो जरया जर्जरीकृतान्स्वपितॄन्पुनर्यौवनसपन्नाश्चक्रु । विकलस्थितिं प्राप्तानीन्द्रियाणि कृत्रिमसाधनै पुन कर्मक्षमाणि कृतानीत्यर्थ ।

( ३ ) त्वष्टा दुहित्रे वहतु कृणोति । इतीद विश्व भुवन समेति ।

त्वष्टा स्वदुहितर ताप ददान सूर्य तक्षित्वा स्वीयासमकरोत् । तथाऽपि सूर्य सकल विश्व स्ववश वर्तयति ।

श्रुतिषु त्वष्टा, ऋभु, नासत्यादीना तत्पूर्वकालीनाना शिल्पिना कर्माणि तु अनद्यतनप्रयोगेण वर्णितानि भवन्ति । कश्यप, अगस्त्य, वसिष्ठप्रभृतयस्तत्कालीनशिल्पज्ञाना कार्याणि वर्तमानप्रयोगेण वर्णितानि सन्ति । यथा धर्मशास्त्रे मनुयाज्ञवल्क्यादयो धर्मस्मृतिकारा सन्ति तथा शिल्पशास्त्रे भृग्वादयोऽष्टादश शिल्पस्मृतिकारा भवन्ति । उक्त च—

भृगुरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा ।<br>
नारदो नग्नजिच्चैव विशालाक्ष पुरन्दर ॥<br>
ब्रह्मा कुमारो नन्दीश शौनको गर्ग एव च ।<br>
वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती ॥<br>
अष्टादशैते विख्याता शिल्पशास्त्रोपदेशका ॥

( मत्स्यपुराण अ० २५२ )

भरतवासीयानामध्ययनपद्धतिषु कण्ठज्ञानस्य प्राधान्यम् । तेषामनेके ग्रन्था मुखोद्गता भवन्ति । अध्ययनकाले किमपि ज्ञानस्यापूर्वं मनोहारि वाक्यादि शिष्यै सूत्ररूपेण सगृहीतम् । तैश्च पुनरध्यापनप्रसङ्गेन स्वसूत्राणा भाष्यरूपेण शिष्याणा ग्रहणसामर्थ्यानुरूपो विस्तार कृत । एव प्रायशोऽखिल शास्त्रजात सूत्रभाष्यरूपेण साम्प्रत लभ्यते । तत्तद्देशोत्पन्नाश्मवन्यधातुपाषाणादिपदार्थानुपयुञ्जाना शिल्पज्ञा स्वग्रन्थ राजाष्टादशभि सहिताभि सकुलीकृतवन्त । भरतखण्डस्याष्टादशभागाना परिस्थिति शिल्पग्रन्थानुसारेणात्र कोष्ठे सगृहीता जिज्ञासूना परिचयार्थं विधेये । अष्टादशसु मयाऽद्यतावत्तिस्र सहिता उपलब्धा । तास्तु कश्यपभृगुमयविरचिता एतच्छिल्पसहितात्रयानुसारेण बद्धाना नागरवेसरद्राविडाख्याना त्रयाणा देवालयाना छायाचित्राणि सनिहितानि सन्ति । कश्यपसहिता हिमाद्रिविन्ध्ययोरन्तर उपयुज्यते । भृगुसहिता विन्ध्याद्दक्षिणत कृष्णातुङ्गभद्रापर्यन्तम् । तुङ्गभद्राद्दक्षिणत आसेतु मयसहिताया प्रचार । भरतखण्डस्यैते त्रयो मुख्या विभागा एतास्तिस्र प्रमुखा सहिताश्च । इतरासा सहितानामपि एतादृश एव

संबन्ध स्याद् । एते त्रयो भागा सात्त्विकराजसतामसनामभि प्रसिद्धा । शिल्परत्न कारणामपि सम्मतमेतत् । यथा च—

हिमाद्रिकन्ययोरन्तर्गतो देशस्तु भारत ।
सोऽपि देशस्त्रिधा भिन्नस्तद्देशमचैर्गुणै ॥
यथैव देहिना देहो वातपित्तकफात्मक ।
तथैवेद जगत्सर्वं विज्ञेय त्रिगुणात्मकम् ॥
त्रियुग तत्त्रिवर्णं च त्रिचर च क्रमात्स्मृतम् ।
हिमवद्विन्ध्ययोर्मध्य सात्त्विक भूतल स्मृतम् ॥
विन्ध्यशैलादिकृष्णान्त राजस परिकीर्तितम् ।
पुन कृष्णादिकन्यान्त तामस भूतल भवेत् ॥
नागर सात्त्विको देशो द्राविडो राजसो भवेत् ।
वेसरस्तामसो देश क्रमेण परिकीर्तित ॥ ( शिल्परत्न अ० १६ )
कलि शयानो भवति सजिहानस्तु द्वापर ।
उत्तिष्ठन्त्रेता भवति कृत सपद्यते चरन् ॥ ( ऐतरेयब्राह्मणम् )

भरतवर्ष कृतत्रेताद्वापरेषु त्रिषु युगेषु समुत्पन्नम् । कृतयुगे तु प्रथम कृष्णाया दाक्षिणभागो धरास्वरूपता गत । नूतनो नवीभूतोऽय भूभागोऽतीव चञ्चल आसीत् । प्रथम मेव घनीभूतत्वाच्छायायुक्तोऽय भूभाग । तस्मात्स 'वेसर' सरणशील 'तामस तम प्रधान इति कथ्यते । त्रेतायुगे च बहुभ्यो ज्वालामुखिभ्यो नि सृताद्द्रवरूपपाषाणादिरसाद्विन्ध्यात्कृष्णापर्यन्तो भूभाग सजात । अस्मिन्भागे रजोरूपद्रवस्य च समृद्धि । तस्मादेष भूभागो द्रवीभूतत्वाद्द्राविड इति रजोधारणाद्राजस इति च स्मर्यते । अनन्तर द्वापरयुगे विन्ध्यहिमालययोर्मध्यगतो भूप्रदेश समुद्रतलादुत्थित । अस्मिन्प्रदेशे विशेषेण सत्त्वानामवशेषा लभ्यन्ते । सत्त्वावशेषाधिक्य मात्त सात्त्विक, नागरस्थापनायोग्यत्वान्नागर, गुर्जरवाडवकृपिसमवायाद्गौड इति च कीर्त्यते । अनन्तर कलौ युगे भरतभूमि सुप्ता भवति । एतेषा चतुर्णां युगाना पुनरपि त्रीणि त्रीणि चक्राणि भवन्ति । एषा भूभागाना सामान्यवर्णा अपि भिन्ना सन्ति । सात्त्विकप्रदेश श्वेतप्राय, राजसो लोहितकृष्ण, तामसस्तु पीतश्वेतो भवति । कृतयुगे रत्नचक्र, धातुचक्र, पाषाणचक्र चेति त्रीणि चक्राणि । त्रेताया मणिचक्र, तीक्ष्णचक्र मृच्चक्र चेति त्रीणि चक्राणि ।

तस्मात्तद्देशयोग्या शिल्परचनाऽपि भिन्ना भवितुमर्हति । परिस्थितिभिन्नत्वानुसारेण भारतीयसंस्कृते सर्वेषां भाषाणामष्टादशधा विभागः ।

संहितीकरणादनन्तरं शिल्पविषये ये ग्रन्था जातास्ते शिल्पस्य पुराणग्रन्थाः । तेषां मुख्यानां नामान्यधो लिखितानि सन्ति ।

१ खिस्ताब्दस्यैकादशे शतके भोजनृपतेः संनिधौ वसता समराङ्गणनाम्ना सूत्रधारेण रचितः ' समराङ्गणसूत्रधारः ' ।

२ खिस्ताब्दस्य द्वादशे शतके पैठणस्थितेन सुखानन्दयतिवर्येण विरचितो ' वास्तुशास्त्र ' नामा ग्रन्थः ।

३ खिस्ताब्दस्य द्वादशे शतके कोऽपि ' सूत्रधार ' शिल्पदीपकनामानं ग्रन्थं लिखितवान् ।

४ खिस्ताब्दस्य पञ्चदशे शतके मेवाडदेशे कुम्भे राज्यं शासितरि मण्डनाख्यः सूत्रधारः ' राजवल्लभ, प्रासादमण्डन, वास्तुमण्डन, रूपमण्डन, देवतामण्डनादीन्ग्रन्थान्प्रणीतवान् ।

५ खिस्ताब्दस्य षोडशे शतके ' कुमार ' नामकेन शिल्पज्ञेन शिल्परत्नाख्यो ग्रन्थः कृतः ।

६ अन्येऽपि बहवस्त्वतु शतसंख्याकदेशीया ग्रन्था अस्मिन्विषये लिखिता ज्ञायन्ते । इमे ग्रन्थाः शिल्पि, सूत्रधार, गजधर, स्थपतिनामधारिणां कर्मकाराणां समीपे सर्वत्र विकीर्णा लभ्यन्ते । कर्मकाराणां गीर्वाणभाषानैपुण्याभावात्पठनपाठनपरम्परालोपाच्च विद्यमानेषु शिल्पग्रन्थेषु बहवोऽशुद्धप्रचारा दृश्यन्ते । पद्यरचनानियमबन्धनादपि केचिद्दोषा जाताः । केचित्तु पुनर्लेखकप्रमादादपि संभवन्ति ।

अथ कश्यपसंहिताग्रन्थो नन्दभूपतीनां कालादनन्तरं जातो दृश्यते नन्दशब्दस्य नववाचकप्रयोगेण । भृगुसंहितायां नन्दानामुल्लेखो नास्ति तथाऽपि तस्यां भगवतः कश्यपस्य सन्मानपुरःसरोल्लेखेन भृगुसंहिता कश्यपादनन्तरं जातेति मे मतिः । भगवतः कश्यपस्य शिल्पप्रभावेणेयं वसुधा ' काश्यपी ' इति स्मर्यते । कश्यपस्य श्रुतिष्वपि शिल्पज्ञ इति ख्यातिः । तस्मात्कश्यपः प्राचीनतमः शिल्पज्ञ इति तर्कयामि ।

कश्यपसंहिताया ग्रन्थो मद्रासससंस्कृतपुस्तकालये लभ्यते । गुर्जर, सौराष्ट्र, मालवदेशेष्वपि कर्मकाराणां समीपेऽस्य खण्डा लब्धाः । अस्मिन्मुद्रणे तेषां सर्वेषामुपयोगः कृतः । तस्मात्किंचिद्बृहत्तरीयं संजाता । भारतवासीयानां ग्रन्थानां कालस्थलनिर्णयो

तस्मात्तत्प्रदेशयोग्या शिल्परचनाऽपि भिन्ना भवितुमर्हति । परिस्थितिभिन्नत्वानुसारेण भारतीयसंस्कृते सर्वेषा भागानामष्टादशधा विभाग ।

संहितीकरणादनन्तर शिल्पविषये ये ग्रन्था जातास्ते शिल्पस्य पुराणग्रन्था । तेषा मुख्याना नामान्यधो लिखितानि सन्ति ।

१ खिस्ताब्दस्यैकादशे शतके भोजनृपते सन्निधौ वसता समराङ्गणनाम्ना सूत्रधारेण रचित ' समराङ्गणसूत्रधार ' ।

२ खिस्ताब्दस्य द्वादशे शतके पेठणस्थितेन मुखानन्दयतिवर्येण विरचितो ' वास्तु शास्त्र ' नामा ग्रन्थ ।

३ खिस्ताब्दस्य द्वादशे शतके योऽपि ' सूत्रधार ' शिल्पदीपकनामान ग्रन्थ लिखितवान् ।

४ खिस्ताब्दस्य पञ्चदशे शतके मेवाडदेशे कुम्भे राज्य शासितरि मण्डनाख्य सूत्रधार ' राजवल्लभ, प्रासादम ण्डन, वास्तुमण्डन, रूपमण्डन, कोदण्डमण्डनादीन्ग्रन्थान्स लिखितवान् ।

५ खिस्ताब्दस्य षोडशे शतके ' कुमार ' नामकेन शिल्पज्ञेन शिल्परत्नाख्यो ग्रन्थ कृत ।

६ अन्येऽपि बहवश्चापु शतसख्यादेशीया ग्रन्था अस्मिन्विषये लिखिता ज्ञायन्ते । इमे ग्रन्था शिल्पि, सूत्रधार, गजधर,स्थपतिनामधारिणा कर्मकाराणा समीपे सर्वत्र विकीर्णा लभ्यन्ते । कर्मकाराणा गीर्वाणभाषानैपुण्याभावात्पठनपाठनपरम्परालोपाच्च विद्यमानेषु शिल्पग्रन्थेषु बहवोऽशुद्धप्रकारा दृश्यन्ते । पद्यरचनानियमबन्धनादपि केचि द्दोषा जाता । केचित्तु पुनर्लेखनप्रमादादपि सभवन्ति ।

अथ कश्यपसहिताग्रन्थो नन्दभूपतीना कालादनन्तर जातो दृश्यते नन्दशब्दस्य नवधाचक्रप्रयोगेण ' भृगुसहिताया नन्दानामुल्लेखो नास्ति तथाऽपि तस्या भगवत कश्यपस्य सन्मानपुर सरेणोल्लेखेन भृगुसहिता कश्यपादनन्तर जातेति मे मति । भगवत कश्यपस्य शिल्पप्रभावेणैव वसुधा ' काश्यपी ' इति स्मर्यते । कश्यपस्य श्रुतिष्वपि शिल्पज्ञ इति ख्याति । तस्मात्कश्यप प्राचीनतम शिल्पज्ञ इति तर्कयामि ।

कश्यपसहिताया ग्रन्थो मद्राससस्कृतपुस्तकालये लभ्यते । गुर्जर, सौराष्ट्र, मालवदेशेष्वपि कर्मकाराणा समीपेऽस्य खण्डा लब्धा । अस्मिन्मुद्रणे तेषा सर्वेषामुपयोग कृत । तस्मात्कचिद्वृद्धिरुक्तिरपि सजाता । भारतवासीयाना ग्रन्थाना कालस्यानिर्णयो

दुष्करः । स्वविषयं यद्यदुपलब्धं तत्सर्वमेकत्र सगृह्य लिख्यते कर्मसौकर्यार्थम् । कालान्तरेण पुनर्लेखनप्रसङ्गे तत्सर्वं तस्मिन्ग्रन्थे समाविष्टं भविष्यति । एवं बहुशोऽनेकमतमतान्तराणां संग्रह एकस्मिन्ग्रन्थे लभ्यते । क्वचित्स्थले जीर्णो मूलग्रन्थः पुनर्लिखिता द्वितीयावृत्तिः, सद्यो लिखिता तृतीयावृत्तिरपि वा अन्यस्माद्ग्रन्थादुद्धृतं पत्रस्यैकपार्श्वे लिखितं तद्द्वितीयलेखने ग्रन्थे समाविष्टं तृतीयलेखने त्वन्यदपि नूनं मिश्रितं दृष्टम् । इतरेषामपि ग्रन्थानामेवं स्याद्वा न वा । इति कालस्थलनिर्णये दुस्तरापत्तिः ॥

आनन्दाश्रमसंस्थायाश्चालकानामाश्रयमन्तरेणायं ग्रन्थो मुद्रितुं दुष्करः । मुद्रणं तु केवलं द्रव्यसाध्यम् । श्रीसरस्वत्योः संयोगो दुर्लभः । भगवतो महेश्वरस्य कृपाप्रसादादयमाश्रयो लब्ध इति । अन्येऽपि शिल्पग्रन्था एवमेव मुद्रिताः सन्तु भारतवासीयानां शिल्परचनार्थमलं प्रकटी कुर्वन्तु इति प्रार्थये ।

नाशीक
माघ व ॥ १४ गुरुवासरे
शालिवाहनशकाब्दः १८४७

वझेकुलोत्पन्नो विनायकसूनुः
कृष्णशर्मा शिल्पकलानिधिः ।

ॐ तत्सद्ब्रह्मणे नमः ।

# काश्यपशिल्पम् ।

## प्रथमः पटलः ।

महादेवं शशिधरं सर्वलोकैकनायकम् ।
महेन्द्रपथगं शान्तं पार्वतीसहितं परम् ॥ १ ॥
देवदानवसिद्धाद्यैः सेवितं सुरपूजितम् ।
प्रणम्य देवंचरणमेवं ब्रूयात्स काश्यपः ॥ २ ॥
सुखेश्वरमसद्भावं मसज्ञा( ज्ञ )स्सृष्टिकारणम् ।
जगतामभिवृद्ध्यर्थं योगिनामुपकारकम् ॥ ३ ॥
देवानां च हितार्थाय शिल्पशास्त्रं परं महत् ।
महार्थमल्पग्रन्थं च कर्षणाद्यर्चनान्तकम् ॥ ४ ॥
अंशुमन्तमहातन्त्राद्यथोक्तं हि पुरार्थकम् ।
सर्व्वं तद्वच( द ) देवानां रुद्राणामधिकारिणाम् ॥ ५ ॥
अल्पायुष्यादिधर्माणां नराणां त्वधिकारिणाम् ।
अनुग्रहार्थं त्वेतेषां संक्षेपाद्वद मे प्रभो ॥ ६ ॥
साधु साधु महाविप्र यत्त्वया परिचोदितम् ।
दुर्लभं तदहं वक्ष्ये शृणु चैकाग्रमानसः ॥ ७ ॥
पुष्यमासादिमासा माघमासेतरे शुभाः ।
दक्षिणे चाश्वयुङ्मासः श्रावणः कार्त्तिकस्तथा ॥ ८ ॥
पूजिताः कर्षणादीनां शेषमासा विवर्जिताः ।
पौष्णादित्यमघास्वातीसावित्रत्वाष्ट्रमैत्रकम् । ॥ ९ ॥
श्रवणेनामजाश्वस्तशास्तिष्याश्वि च कर्तृयुक् ।
(स)द्ने पूजिताः सताप्यं (तास्तारा:) प्रतिपत्षष्ठि सप्तमी ॥१०॥
तृतीया पञ्चमी चैव द्वितीया च त्रयोदशी ।
दशमी तिथयः प्रस्ताः शुक्लपक्षे विशेषतः ॥ ११ ॥
प्रतिपत्पौर्णमासी च द्वितीया पञ्चमी तथा ।
द्वितीया मध्यमा ख्याता कृष्णपक्षे विशेषतः ॥ १२ ॥

षष्ठी च दशमी कृष्णे कनिष्ठाऽऽद्या निगृह्यते ।
सितसौम्यौ शशी जीवः परं श्रेष्ठतमाः स्मृताः ॥ १३ ॥
तोयांशोदयो होरा द्रेक्काणश्चैव दर्शिताः ।
शुभदा इति विज्ञेयास्तत्र राश्युदयं विना ॥ १४ ॥
मेषकर्कटकं तौलिं मकरं धनुषीति( च धनर्वि )ना ।
शेषराश्युदयाः शस्ताः सर्वसंपत्समृद्धिदाः ॥ १५ ॥
उच्चस्थानगतश्चन्द्रः सौख्यो वित्तगतस्तथा ।
शत्रुक्षेत्रगतश्चन्द्रो नीचस्थोऽपि धनक्षयम् ॥ १६ ॥
भौमादित्याविन्दुराहू शौरिर्वा लग्नसंस्थिताः ।
आयुष्यं धनधान्यं च कर्तुर्नश्येन्न संशयः ॥ १७ ॥
धनस्थानगताः क्रूरा धनधान्यविनाशनाः ।
तत्रैव चन्द्रसंयुक्ता धनधान्यविवर्धनाः ॥ १८ ॥
भ्रातृस्थानगताः सर्वे सर्वसंपत्समृद्धिदाः ।
बन्धुस्थानगताः पापाः सर्वदुःखभयावहाः ॥ १९ ॥
पुत्रस्थानगताः क्रूरा मृत्युपीडा भविष्यति ।
शत्रुस्थानगताः सर्वे सर्वदुःखभयावहाः ॥ २० ॥
भार्यास्थानगतो जीवश्चन्द्रभार्गवस्तथा ।
आयुष्यं धनधान्यं च सर्ववृद्धिप्रदः सदा ॥ २१ ॥
निधनस्थानगाः सर्वे कर्तुर्निधनमादिशेत् ।
शुभग्रहा न्वम (नव)स्थाने सर्वसौख्यधनावहाः ॥ २२ ॥
कर्मस्थानगताः क्रूराः सवित्तायुःक्षयावहाः ।
शुभग्रहस्तु कर्मस्थः सर्ववित्तविवर्धनः ॥ २३ ॥
अशुभश्च शुभश्चैव लाभस्थानगताः शुभाः ।
द्वादशस्थो बुधो जीवो वित्तवृद्धिं समारभेत् ॥ २४ ॥
नक्षत्रान्ते च मासान्ते पक्षान्ते चेति दक्षिणे ।
व्यतीपाते च शूले च धृतौ वा कालकण्टके ॥ २५ ॥
य(ग)ण्डके च तथा स्तूर्णे(सूर्ये) परिवेषे च दुर्दिने ।
उल्कापाते भवेशे च विष्ये(ष्टयां) च विपनाडिके ॥ २६ ॥
परनीतिमुखे चैव ग्रामदान्ये तथैव च ।
कर्षणादिमनिष्टान्तं सर्वकर्म वि(दि)नाऽऽचरेत् ॥ २७ ॥

मर्त्यानामायुषं कर्तुं कृष्णपक्षे सुचन्द्रवत् ।
तस्माद्यत्नतः शीघ्रं कर्तव्यो धर्मसंग्रहः ॥ २८ ॥
अल्पदोषं गुणाधिक्यं दिनं लग्नं च संग्रहेत् ।
अनेककोटिदोषाढ्यं दिनं वा लग्नमेव वा ॥ २९ ॥
दोषहीनत्वं याति जीवदृष्ट्या द्विजोत्तम ।
अनेककोटिदोषस्तु जीवेकेन विनात्तया(विनश्यति) ॥ ३० ॥
तमोऽपरिमितं रात्रौ रविणैकेन नश्यति ।
तथैव जीवदृष्ट्या तु सर्वदोषसमुद्भवाः ॥ ३१ ॥
एवं परीक्ष्य बहुधा कर्पणादि समाचरेत् ।
तत्रैवं सदनं कुर्यात्तद्देवा(शे) कर्षणं कुरु ॥ ३२ ॥
अष्टदिक्षु च कर्तव्यं ग्रामादिषु शिवालयम् ।
पैशाचिकपदे कुर्यादालयं तु पराङ्मुखम् ॥ ३३ ॥
परिवारस्तु त्रिदण्ड्यादि यावता त्रिंशता(द)न्तकम् ।
तावद्दृष्टपादिदिशि(देशे)षु कर्तव्यं शिवमन्दिरम् ॥ ३४ ॥
परिवाराद्यन्तरे वाऽपि पैशाचिकपदे कुरु ।
मानुषे तु पदे वाऽथ कर्तव्यं शिवमन्दिरम् ॥ ३५ ॥
विप्रक्षत्रियविट्शूद्राश्चानुलोमस्तथैव च ।
समासान्मजि(नु)कर्तारः सर्वप्राणिहिताय वै ॥ ३६ ॥
हस्तमात्रं ततः खात्वा खात्वा तद्भूमिमध्यमे ।
पूरिते तु मृदा ख्या(खा)ते ह्यधिका चोत्तमादिभिः(मही) ॥३७॥
समा सा(सा)मध्यमा ख्याता हीना सा कन्यका स्तु(स्मृ)ता ।
अग्रताच्छो(तश्चो)त्तमा मध्या मार्गहीनाऽन्यसद्मनि ॥ ३८ ॥
श्वेतरक्ता च पीता च कृष्णा पद्मदया(च कपिल)क्रमात् ।
चतुर्विधमपि ख्याता तत्तज्जात्या हता शुभा ॥ ३९ ॥
परेषामपरा शस्ताश्चपरेषु परा विना ।
तत्तदोभ्यामभिग्राह्या मर्त्यानामालयं कुरु ॥ ४० ॥
सर्वामभिमशस्ते तु देवानां तु विशेषतः ।
भूतप्रेतपिशाचेभ्यो दनलं वा बलिं ददेत् ॥ ४१ ॥
अस्त्रेणोच्चाटनादेतत्पश्चात्करणमाचरेत् ।
श्वेतरक्ता च पीता च कृष्णा जात्युक्तौ क्रमात् ॥ ४२ ॥

षष्ठी च दशमी कृष्णे कनिष्ठाऽऽया निगद्यते ।
सितसौम्यौ शशी जीवः परं श्रेष्ठतयाः स्मृताः ॥ १३ ॥
तोषांशोदयो होरा द्रेक्काणश्चैव दर्शिताः ।
शुभदा इति विज्ञेयास्तत्र राश्युदयं विना ॥ १४ ॥
मेषकर्कटकं तौलिं मकरं धनुषीति( च धनुर्वि )ना ।
शेषराश्युदयाः शस्ताः सर्वसंपत्समृद्धिदाः ॥ १५ ॥
उच्चस्थानगतश्चन्द्रः सौम्यो वित्तगतस्तथा ।
शत्रुक्षेत्रगतश्चन्द्रो नीचस्थोऽपि धनक्षयम् ॥ १६ ॥
भौमादित्याविन्दुराहू शौरिर्वा लग्नसंस्थिताः ।
आयुष्यं धनधान्यं च कर्तुर्नश्येन्न संशयः ॥ १७ ॥
धनस्थानगताः क्रूरा धनधान्यविनाशनाः ।
तत्रैव चन्द्रसंयुक्ता धनधान्यविवर्धनाः ॥ १८ ॥
भ्रातृस्थानगताः सर्वे सर्वसंपत्समृद्धिदाः ।
बन्धुस्थानगताः पापाः सर्वदुःखभयावहाः ॥ १९ ॥
पुत्रस्थानगताः क्रूरा मृत्युपीडा भविष्यति ।
शत्रुस्थानगताः सर्वे सर्वदुःखभयावहाः ॥ २० ॥
भार्यास्थानगतो जीवश्चन्द्रभार्गवयुतस्तथा ।
आयुष्यं धनधान्यं च सर्ववृद्धिप्रदः सदा ॥ २१ ॥
निधनस्थानगाः सर्वे कर्तुर्निधनमादिशेत् ।
शुभग्रहा न्वम (नव)स्थाने सर्वसौख्यधनावहाः ॥ २२ ॥
कर्मस्थानगताः क्रूराः सवित्तायुःक्षयावहाः ।
शुभग्रहस्तु कर्मस्थः सर्ववित्तविवर्धनः ॥ २३ ॥
अशुभश्च शुभश्चैव लाभस्थानगताः शुभाः ।
द्वादशस्थो बुधो जीवो वित्तवृद्धिं समारभेत् ॥ २४ ॥
नक्षत्रान्ते च मासान्ते पक्षान्ते चेति दक्षिणे ।
व्यतीपाते च शूले च धृतौ वा कालकण्टके ॥ २५ ॥
ग(ग)ण्डके च तथा स्तूर्णे(सूर्ये) परिवेषे च दुर्दिने ।
उल्कापाते भनेशे च विष्ये(ष्टयां) च विपनादिके ॥ २६ ॥
षडशीतिमुखे चैव मासशून्ये तथैव च ।
कर्षणादिमिनिष्ठान्तं सर्वकर्म वि(हि)नाऽऽचरेत् ॥ २७ ॥

मर्त्यानामायुषं कर्तुं कृष्णपक्षे सुचन्द्रवत् ।
तस्मार्थैर्यस्ततः शीघ्रं कर्तव्यो धर्मसंग्रहः ॥ २८ ॥
अल्पदोषं गुणाधिक्यं दिनं लग्नं च संग्रहेत् ।
अनेककोटिदोषाढ्यं दिनं वा लग्नमेव वा ॥ २९ ॥
दोषहीनतमं याति जीवदृष्ट्या द्विजोत्तम ।
अनेककोटिदोषस्तु जीवेनैकेन विनातथा(विनश्यति)॥ ३० ॥
तमोऽपरिमितं रात्रौ रविणैकेन नश्यति ।
तथैव जीवदृष्ट्या तु सर्वदोषसमुद्भवाः ॥ ३१ ॥
एवं परीक्ष्य बहुधा कर्षणादि समाचरेत् ।
तत्रैवं सदनं कुर्यात्तदेवां(शे) कर्षणं कुरु ॥ ३२ ॥
अष्टदिक्षु च कर्तव्यं ग्रामादिषु शिवालयम् ।
पैशाचिकपदे कुर्यादालयं तु पराङ्मुखम् ॥ ३३ ॥
परिवारस्तु बिदण्ड्यादि यावता त्रिंशता(द)न्तकम् ।
तावद्देष्ट्यादिदिशि(देशे)षु कर्तव्यं शिवमन्दिरम् ॥ ३४ ॥
परिखाऽस्यान्तरे वाऽपि पैशाचिकपदे कुरु ।
मानुषे तु पदे वाऽथ कर्तव्यं शिवमन्दिरम् ॥ ३५ ॥
विप्रक्षत्रियविट्शूद्राश्चानुलोमस्तथैव च ।
समास्ताम्भजि(नु)कर्तारः सर्वप्राणिहिताय वै ॥ ३६ ॥
हस्तमात्रं ततः खात्वा खात्वा तद्भूमिमध्यमे ।
पूरिते ॥ मृदा ख्या(खा)ते ह्यधिका चोत्तमादिभिः(मही) ॥३७॥
समा ता(सा)मध्यमा ख्याता हीना सा कन्यका स्मृ(स्मृ)ता ।
अग्रताच्छो(तश्चो)त्तमा मध्या मार्गहीनाऽन्यसद्मनि ॥ ३८ ॥
श्वेतरक्ता च पीता च कृष्णा पद्मदा(च कपिशा)क्रमात् ।
चतुर्विधमपि ख्याता तत्तज्जात्या हता शुभा ॥ ३९ ॥
परेषामपरा शस्ताश्चपरेषु परा विना ।
तत्तदोभ्यामभिग्राह्या मर्त्यानामालयं कुरु ॥ ४० ॥
सर्वामभिमतास्ते तु देवानां तु विशेषतः ।
भूतप्रेतपिशाचेभ्यो दनलं वा बलिं ददेत् ॥ ४१ ॥
अस्त्रेणोच्चाटनादेतत्पश्चात्करणमाचरेत् ।
श्वेतरक्ता च पीता च कृष्णा जान्युद्दकौ क्रमात् ॥ ४२ ॥

एकरात्रं द्विरात्रं वा यत्नं तत्रैव पूजयेत् ।
शीतम्रगोत्रभेनेश्चात् गोमये मस्रवैरपि ॥ ५८ ॥
प्रस्तरं भूतलं पश्चान्मध्यमेऽस्य(स्म)तलं कुरु ।
गोमयालेपनं कृत्वा दिक्परिच्छेदनं कुरु ॥ ५९ ॥

दिक्परिच्छेदनम्—

शङ्कुं कलाङ्गुलायामं नाहं तत्समुच्यते ।
मूलताराष्टभागैकं हीनमग्रं वि(वि)शालकम् ॥ ६० ॥
सुवृत्तमर्जयेत्स(च्छ)ङ्कुं सारवृक्षं विशेषतः ।
शङ्कुद्विगुणमानेन तन्मध्ये मण्डलं लिखेत् ॥ ६१ ॥
तन्मध्ये स्थापयेच्छङ्कुं चतुर्दिक्षु विशेषतः ।
पूर्वापराह्णयोश्छाय यदि तौ मण्डलान्तगौ ॥ ६२ ॥
छायाग्रमध्यं संलक्ष्यं तथैव त्वपराह्णके ।
बिन्दुद्वयान्तरं सूत्रं पूर्वापारदिगिष्यते ॥ ६३ ॥
तयोर्बिद्वान्तरग्रासाग्रपरानन्पुच्छकम् ।
दक्षिणोत्तरगं सूत्रं तन्मध्ये तु प्रसारयेत् ॥ ६४ ॥
ये मध्यमध्यमार्गौहि अवच्छायाङ्गुलं व्रजेत् ।
मण्डलं कुब्जतालेन अङ्गुलं तु विभाजयेत् ॥ ६५ ॥
भानुर्मीनाष्टविंशांशं सप्तविंशांशयोत्तरे ।
गते त्वजेवनत्युक्ता कन्यायां च तथैव हि ॥ ६६ ॥
मीनेऽष्टविंशादेशं हि भागं मत्स्यधर्मातुरम् ।
वर्धयेन्मिथुने सप्तविंशदेशावसानके ॥ ६७ ॥
ततोत्रि(ति)मात्रं क्षीणं स्याच्चागं प्रति विशेषतः ।
कन्यायां छान्दविंशांशं तद्धारांशं विवर्धनात् ॥ ६८ ॥
छायोऽष्टविंशदं शान्तं ततो ह्रासं तथैव हि ।
छायावृद्धिं क्षयं चैव कुचिकांशं खु(कु)मध्यमम् ॥ ६९ ॥
छायामानं व्रजेन्मध्ये ब्रह्मसूत्रं प्रसारयेत् ।
पूर्वापराह्णयोश्छाया मध्ये मानं च वर्जयेत् ॥ ७० ॥
भागादिपरिदं सूत्रमिष्टमाने तु विन्यसेत् ।
पुण्याहं वाचयेत्पश्चात्खात्वा प्रासादमानतम् ॥ ७१ ॥
स्यात्प्रासादं सविस्तारं एकाशीतिपदं कुरु ।
तत्पदे वास्तुदेवांश्च पूजयित्वा समानतः ॥ ७२ ॥

यौव(युवा)नौ कर्षणापूर्वौ गङ्गाहीनौ बलान्वितौ ।
हेमशृङ्गक(खु)रोपेतकण्ठान्वरन(भरण)संस्पृशौ ॥ ४३ ॥
संपूज्य ऋषिगायत्रीगन्धपुष्पाक्षतैर्बुधैः ।
पूर्वं निवेदनं कृत्वा प्राङ्मुखौ संस्थितौ वृषौ ॥ ४४ ॥
याज्ञावीमैस्पारवृक्षे लक्षणेन युगं हलम् ।
सीतायामतिहस्ताढ्यां नाहं सप्ताङ्गुलं भवेत् ॥ ४५ ॥
वृत्तकुन्दप्रयोपे तु मूले वंशांशमश्वरूपम् ।
मेखलोपमितालं स्याद्विमात्रं तत्स्वनं भवेत् ॥ ४६ ॥
मूलादग्रान्तमासीर्णं किंचित्क्षीणं न मध्यमम् ।
मेखलाधरतुमूले तु तुर्येभवेशनवाङ्गुलम् ॥ ४७ ॥
देवांश्यं(शं द)शाङ्गुलायामं घनमन्त्यार्धमातृकम् ।
चतुर्विंशाङ्गुलायामं घ्राणदीर्घं तु काश्यपः ॥ ४८ ॥
सीसोर्ध्वे घ्राणतुङ्गं तु पञ्चाङ्गुलमुदाहृतम् ।
घ्राणाङ्गुष्ठमुखं कुर्यान्मनुमात्रं तदायतम् ॥ ४९ ॥
शेषं चन्द्रमिति ख्यातं सीसमेखलसंधितौ ।
पञ्चांशं घ्राणविस्तारं घनदेवाङ्गुलं भवेत् ॥ ५० ॥
अग्रसूचिमिवाकारं मनुपूर्वं कृशं भवेत् ।
शिवपञ्चमानमित्युक्तं सीसघ्राणाग्रयोरन्तरम् ॥ ५१ ॥
अयसा हलजिह्वा तु घ्राणाग्रे योजयेद्बुधः ।
सीसायामसमानं च युगं चन्द्रयुगान्वितम् ॥ ५२ ॥
कनिष्ठाङ्गुलिपरी(सं)नाहं गोचर्माङ्किरान्वितम् ।
हृदयं मन्त्रमुच्चार्य युगा युगश्रियौ वृषौ ॥ ५३ ॥
युगमध्ये हलं बद्ध्वा किंचिद्दक्षिणमाश्रितम् ।
शिवमन्त्रं समुच्चार्य प्राङ्मुखो वाऽप्युदङ्मुखः ॥ ५४ ॥
कर्षयेन्मतिमान्विमत्तो(स्त्री)ण्यादीनि व्यपोह्य च ।
तिलसर्षपमुद्गांश्च नेत्रमन्त्रेण वापयेत् ॥ ५५ ॥
आचार्यान्पूजयेत्तस्मै द्विद्विमाहहलौषधौ ।
शिराशिवदगुरश्रेष्ठं वेदराश्रं तु मध्यमम् ॥ ५६ ॥
अधमं भूतराश्रं तु अधमं परिवर्जयेत् ।
अपूपलाजकन्यामाक्ष्या शोधनानि निवेदयेत् ॥ ५७ ॥

एकरात्रं द्विरात्रं वा यद्वा तत्रैव पूजयेत् ।
गोतम्रगेत्रभेनेश्चात् गोमये मस्रवैरपि ॥ ५८ ॥
प्रस्तरं भूतलं पश्चान्मध्यमेऽस्पृ(श्म)तलं कुरु ।
गोमयालेपनं कृत्वा दिक्परिच्छेदनं कुरु ॥ ५९ ॥

दिक्परिच्छेदनम्—

शङ्कुं फलाङ्गुलायामं नाहं तत्समुच्यते ।
मूलताराष्टभागैकं हीनमग्रं ति(वि)शालकम् ॥ ६० ॥
सुवृत्तमजेयेन(च्छ)ङ्कुं सारवृक्षं विशेषतः ।
शङ्कुद्विगुणमानेन तन्मध्ये मण्डलं लिखेत् ॥ ६१ ॥
तन्मध्ये स्थापयेच्छङ्कुं चतुर्दिक्षु विशेषतः ।
पूर्वापराह्णयोश्छाय यदि तौ मण्डलान्तकौ ॥ ६२ ॥
छायाग्रमध्यं संलक्ष्यं तथैव त्वपराह्णके ।
बिन्दुद्वयान्तरं सूत्रं पूर्वापारदिगिष्यते ॥ ६३ ॥
तयोर्विद्वान्तरग्राह्यापरानन्पुच्छकम् ।
दक्षिणोत्तरगं सूत्रं तन्मध्ये तु प्रसारयेत् ॥ ६४ ॥
ये मध्यमध्यमार्धौतु अपरच्छायाङ्गुलं व्रजेत् ।
मण्डलं कुब्जतालेन अङ्गुलं तु विभाजयेत् ॥ ६५ ॥
भानुर्मीनाष्टविंशांशं सप्तविंशांशयोत्तरे ।
गते त्वजैवनत्युक्ता कन्यायां च तथैव हि ॥ ६६ ॥
मीनेऽष्टविंशदेशं हि भागं प्रत्यर्थयातुकम् ।
वर्धयेन्मिथुने सप्तविंशदेशावसानके ॥ ६७ ॥
ततोत्रि(ति)मात्रं क्षीणं स्याद्भागं प्रति विशेषतः ।
कन्यायां छान्दविंशांशं तद्भागांशं विवर्धनात् ॥ ६८ ॥
छायोऽष्टविंशदं शान्तं ततो ह्रासं तथैव हि ।
छायावृद्धिं क्षयं चैव कृत्तिकांशं खु(कु)मध्यमम् ॥ ६९ ॥
छायामानं व्रजेन्मध्ये ब्रह्मसूत्रं प्रसारयेत् ।
पूर्वापराह्णयोश्छाया मध्ये मानं च वर्जयेत् ॥ ७० ॥
प्रागादिपरिदं सूत्रमिष्टमाने तु विन्यसेत् ।
पुण्याहं वाचयेत्पश्चात्खात्वा प्रासादमानतम् ॥ ७१ ॥
स्यात्प्रासादं सविस्तारं एकाशीतिपदं कुरु ।
तत्पदे वास्तुदेवांश्च पूजयित्वा समानतः ॥ ७२ ॥

मध्वाज्यगुडसंमिश्रं देवानां तु बलिं ददेत् ।
प्रणवाद्यांस्तु मध्ये तु स्वाहान्तं बलिमाचरेत् ॥ ७३ ॥
धारतुहोमं तथा कृत्वा मध्ये रा(वा) चोत्तरेऽपि वा ।
धारतुहोमं विना कृत्वा वद्दा स तु विनश्यति ॥ ७४ ॥
पर्यग्निकरणं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः ।
कर्षणं होवमाख्यातं शृणु चाष्टकत्रास्तुकम् ॥ ७५ ॥

इति काश्यपशिल्पे प्रथमः कर्षणपटलः ।

---

अथ द्वितीय पटलः ।

---

अथ वक्ष्ये विशेषेण प्रासादं तु विलक्षणम् ।
प्रासादस्य विशालं तु (लस्यं) नवभागविभाजिते(तम्) ॥ १ ॥
प्रागग्रादिशसूत्रं स्यात्तुदगग्रं तथैव हि ।
एतत्पदनवांशे तु ब्रह्ममध्ये नवांशयुक् ॥ २ ॥
समरी पूर्वभागे तु विवस्वान्दक्षिणे तथा ।
मित्रः पश्चिमभागे तु युत्तरे पृथिवीधरः ॥ ३ ॥
ब्रह्माणं तु निरीक्षितास्थितषट्पद्भागिनः ।
आश्वेवापवन्साश्च (ईश ईशाद्यश्चैव हि)शान्यां दिशिसंस्थितौ ॥४॥
सावित्रश्चैव सावित्राश्चाग्नेय्यां दिशह(श्यव)स्थितौ ।
इन्द्र इन्द्राद्यश्चैव नैर्ऋत्यां दिशिवं(श्यव)स्थितौ ॥ ५ ॥
रुद्रो रुद्राज(द)यश्चैव वायव्यां दिशि संस्थितौ ।
एते द्विःदशोत्कारौ अंशपर्यद्वयं तथा ॥ ६ ॥
ऐशान्यां चैव पर्जन्यो जयन्तश्च महेन्द्रकः ।
आदित्यः सत्यकश्चोवा भ्रमश्चैवान्तरिक्षकाः ॥ ७ ॥
अग्निः पूषा च वितथो (निर्ऋषी) राक्षसश्च यमस्तथा ।
गन्धर्वो भृङ्गराजश्च मृषश्चैव तु दक्षिणे ॥ ८ ॥
निर्ऋतिर्दौवारिकश्चैव सुग्रीवः पुष्पदन्तकः ।
वरुणोऽसुरशोषाश्च पापक्षयविपश्चिमे ॥ ९ ॥
नापूर्नागास्तथा मुख्यो भल्लाटः सोम एव च ।
मृगादित्यदितिश्चैव याम्यस्थकांशभोगिनः ॥ १० ॥

चक(क्र)वीदा(रा) विदारी च पूतना पापराक्षसी ।
ईशानादिषु कोणेषु बाह्यस्थपदवर्जिताः ॥ ११ ॥
एताश्चैकोनपञ्चाशद्देवताः परिकीर्तिताः ।
विंशत्सूत्रेण ते सर्वे बद्ध्वा वै वास्तुमूर्तिनाम् ॥ १२ ॥
अधोमुखं शयित्वा तु नासाग्रपिसितस्थिता ।
वास्तुमूर्तिं त्वया देव बद्ध्वान्तं शाययेत्क्रमम् ॥ १३ ॥
देवासुरमहायुद्धं वर्जयन्तु यथा तथा ।
असुराणां हि तत्कार्यां उग्रः कुर्यान्महत्ततः ॥ १४ ॥
ततस्तु संभृताकारं भूताकारं महाजलः ।
अमर्षाच्च तु संभूता देवैर्युद्धं मवर्तयेत् ॥ १५ ॥
सर्वदेवायुधैर्देवैर्वधनं तु न शक्यते ।
सर्वदेवाश्च तद्भूतं शाययेयुरधोमुखम् ॥ १६ ॥
विंशत्सूत्रैश्च तद्भूतं बद्ध्वा संस्तभ्य संस्थितः ।
स एव वास्तुपुरुषो वास्तुमूर्तिस्तदुच्यते ॥ १७ ॥
तद्भन्यधोमुखो हीनः सर्वेषां दुःखमावहेत् ।
यत्र वास्तुनि चिन(न्य)स्याच्चत्सर्वं वास्तुमूर्तिवत् ॥ १८ ॥
तदुद्धृत्य निवृत्त्यर्थं सर्वदुःखनिवारणम् ।
सर्वसिद्धिकरं तं तु वास्तुहोमं बलिं कुरु ॥ १९ ॥
ब्रह्मादिदेवतानां तु तृप्तिहोमकालिं द्विज ।
तासां तृप्तिकृतं वास्तु पुरुषो रा(वाऽ)थ नश्यति ॥ २० ॥
तस्मात्सर्वप्रयत्नेन दद्याद्ब्रह्मादिनां बलिः ।
वास्तुहोमस्तु कर्तव्यो ब्रह्मादीनां स्वनामतः ॥ २१ ॥
ऐशान्यां तु शिरो न स्याद्दरदोनिरुचिगोचिरे ।
आग्नेयं वायुदिग्भागे कूर्परौ जानुशायिनौ ।
मूर्तिदेवास्थिता देवास्त्वीशाने शिरसि स्थिताः ।
नैरृत्यानादिपर्जन्यो जयन्तादितिकर्णयौ ॥ २३ ॥
आपः कुफाटिकाभ्ये तु आपवस्तथैव च ।
नाभिसूत्रे परौ ब्रह्मावीजाविन्द्रजयन्तिनी ॥ २४ ॥
लिङ्गं इन्द्रजयश्चैव पादयोर्निरृतिस्थितिः ।
समरी पृथिवी चैव स्तनसूत्रोपरि स्थितौ ॥ ३५ ॥

विवस्वास्व(न्स)तु मित्रश्च कुक्षिपार्श्वोपरि स्थितौ ।
उरुहस्ते तलं चैव सावित्रे तु प्रकल्पयेत् ॥ २६ ॥
उरुप्रकोष्ठमध्ये च सावित्रं तु निधापयेत् ।
रुद्रो रुद्रजयश्चैव वामपार्श्वे तु पूर्ववत् ॥ २७ ॥
माहेन्द्रस्यान्तरिक्षान्ताः सव्यभ्वा(स्था)भुवि संस्थिताः ।
तज्जानुकूर्परे विप्रा अग्निमूर्तौ निधापयेत् ॥ २८ ॥
पूर्वाणि नृपपर्यन्तं जङ्घायां दक्षिणे न्यसेत् ।
दौवारीवायवक्ष्मान्ता जङ्घायां दक्षिणेतरे ॥ २९ ॥
वामकूर्परजानुभ्ये ( नूर्ध्वे ) वायुमूर्तौ निधापयेत् ।
नागादिगजपर्यन्तं वामभागे विसंस्थिता ॥ ३० ॥
चरद्विपाश्चतुष्कर्णे कर्णसूत्राग्रकौ स्थितौ ।
श्वेते न्यधोमुखं वास्तु मूर्तिरेव द्विजोत्तमाः ॥ ३१ ॥
मार्गीपे(गिषे)ष बलिं दत्त्वा वास्तु संकल्पयेद्द्विजाः ।
मासादवास्तुरेवं हि वास्तुहोमं ततः परम् ॥ ३२ ॥

इति काश्यपशिल्पे द्वितीयः प्रासादवास्तु पटलः ।

---

## अथ तृतीयः पटलः ।

---

हर्म्ये वाद्यष्टकाकाले लिङ्गं संस्थापयेत्सदा ।
सकलं स्थापने चैव संप्रोक्षं तु तथैव च ॥ १ ॥
बाणलिङ्गप्रतिष्ठायां मण्डपे नृत्तरङ्गके ।
सभायां यागशालायां वास्तुहोमं समाचरेत् ॥ २ ॥
आचार्यो लक्षणोपेतं स्वाचार्यो होममाचरेत् ।
समरीभावमदेवेशा( शे वा )सौम्ये वा ब्राह्मकीपदे ॥ ३ ॥
स्थण्डिलं सिकतैः कुर्याद्धस्तमात्रं प्रविस्तरम् ।
तत्सेधं द्व्यङ्गुलं ज्ञेयं चतुरश्रं समं कुरु ॥ ४ ॥
मेखारसरूप( जलवन्तं न्य )सेदेन्द्रे शालिमध्ये द्विजोत्तमाः ।
गन्धतोयेन संपूज्य हेमतन्त्रे च निक्षिपेत् ॥ ५ ॥
पालाशपत्रपर्णा च तज्जलेषु निधापयेत् ।
गन्धपुष्पादिना पूज्या तज्जले द्वारदेवता ॥ ६ ॥

अग्नि( ग्न्या )धानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
ब्रह्मादिवास्तुदेवांश्च अग्निमध्ये तु मा( आ )वहेत् ॥ ७ ॥
गन्धैः पुष्पैश्च धूपैश्च पूजयेत्स्वस्वनामतः ।
प्रणवादीनां (।दस्वनाम्नां) तु स्वाहान्तं होममाचरेत् ॥ ८ ॥
स्याद्ब्रह्मप्रसमीहेतुः प्रत्येकं होममाचरेत् ।
शतमर्धं तदर्धं वा होमयेद्बोघृतेन तु ॥ ९ ॥
पायसेनैव चरुणा प्रत्येकं तु शताहुतीः ।
जयादिरभ्यातानं च राष्ट्रभृश्च क्रमायु( द्धु )ते ॥ १० ॥
मिन्द्राहुतिं च कूश्माण्डं प्रायश्चित्ताहुतिं चरेत् ।
हव्यवाहेति मन्त्रेण स्विष्टमग्नेति होमयेत् ॥ ११ ॥
यदस्येति च मन्त्रेण होमयेत्तु घृतेन तु ।
परिषेचनं (कं) ततः कृत्वा प्रासादे नतु मन्त्रतः ॥ १२ ॥
परिस्तरणं विधाय आज्यस्योत्पवने (ज्यस्योत्पवने) क्रमात् ।
ब्राह्मणं तु परे दद्याद्वह्नौ सूर्यमण्डले ॥ १३ ॥
प्रणीतायेन ( श्चि ) संप्रोक्ष्य आत्मार्थं पापमानकैः ।
एवं समाप्य होमं तु प्रणिपत्य समापयेत् ॥ १४ ॥
दर्भैः पालाशपत्रैश्च शोषितैश्चन्यसेत्क्रमात् ।
तदग्नौ दीपयित्वा तु तथा प्रासादमण्डपे ॥ १५ ॥
प्राकारे गोपुरस्थाने पर्यग्निकरणं कुरु ।
प्रासे तदग्निमुद्वास्य स्थापिते तु जले बुधः ॥ १६ ॥
सर्वत्र प्रोक्षयेद्विद्वान्वापि( शुची ) वो हव्यमन्त्रतः ।
वासुदेवोद्धतार्थं तु पर्यग्निकरणं कुरु ॥ १७ ॥
वास्तुहोमः समाख्यातः प्रथमे(तोऽथ)ष्टकाया विधिं शृणु ॥१८ ॥

इति काश्यपशिल्पे वास्तुहोमस्तृतीयः पटलः ।

---

अथ चतुर्थः पटलः ।

---

प्रथमेष्टकाविधानम्—

अथ वक्ष्ये विशेषेण शृणु [ त्वं ] प्रथमेष्टकाम् ।
प्रासादे मण्डपे साले गोपुरे च तथैव च ॥ १ ॥

सद्ने परिवाराणां विन्यसेत्प्रथमेष्टकाम् ।
स्निग्धं चैव तथाऽस्निग्धं द्विविधं भूमिलक्षणम् ॥ २ ॥
चिक्कणं शर्कराढ्यं च अशक्यं (क्य) घ(ख)ननं(न) क्रियः(यम्) ।
सुस्निग्धमिति विख्यातं तनुवालुकसंयुतम् ॥ ३ ॥
पुरुषाञ्जलिमात्रं तु दृष्ट्वा तोयसमन्वितम् ।
अशेषं(शक्य) खननं यत्तत्(द्) स्निग्धाख्यात(ख्यं) महीतथा(लम्)
प्रासादस्य तु विस्तारो द्विद्विहस्तोऽस्य विस्तृतः ।
हस्तमात्रं खनेद्विप्र सुस्निग्धं तु महीतलम् ॥ ५ ॥
यावत्तत्र जलं दृष्टं खनेत्तावत्तु भूतले ।
अवटं वालुकैः स्थूलैः पूरयित्वा जलान्वितम् ॥ ६ ॥
पूरयित्वा जलं पश्चाज्जलेन समतां कुरु ।
भ्वसलेहस्तिपादैश्च स्निग्धं कृत्वा बृहच्छिरैः ।. ७ ॥
एवमाधारधानं तु अधिकं म(त्व)वठं(टं) कुरु ।
मानसूत्रादिसूत्रं तु पातयेत्तत्र देशिकः ॥ ८ ॥
प्रथमं मानसूत्रं तु विन्यसेत्तु द्वितीयकम् ।
तृतीय.(यम)धिष्ठानसीमा(ना)न्तं तथोपपीठसीमकम् ॥ ९ ॥
पञ्चमं होमसूत्रं तु षष्ठं तु भित्तिसूत्रकम् ।
एवं क्रमेण कर्तव्यं सूत्रषट्कं द्विजोत्तमाः ॥ १० ॥
तस्योत्तरे प्रपां कृत्वा नवहस्तप्रमाणतः ।
षोडशस्तम्भसंयुक्तं वितान(य) द्विजभूषितम् ॥ ११ ॥
तोरणैर्दर्भमालैश्च मुक्तादामैरलंकृतम् ।
मण्डपस्य त्रिभागैकं वेदिकायास्तु विस्तरम् ॥ १२ ॥
हस्तमात्रसमुत्सेधं दर्पणोदरसंनिभम् ।
परितस्त्वग्निकुण्डानि महाशालं प्रकल्पयेत् ॥ १३ ॥
वेदार्थं च सुवृत्तं च अब्जमिन्द्रादितः क्रमात् ।
हस्तमात्रं च विस्तारं खातं चैवातिमेखलम् ॥ १४ ॥
गोमयालेपनं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः ।
पिष्टचूर्णैरलंकृत्य ततो वै विप्रभोजनम् ॥ १५ ॥
कृत्वोच्छिष्टं समुद्धारय वास्तुहोमं ततः कुरु ।
पर्यग्निकरणं कृत्वा प्रोक्षयेद्वा कुशान्परेत् ॥ १६ ॥

स्थण्डिलं वेदिकायां तु अष्टद्रोणैश्च शालिभिः।
तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि॥ १७॥
स्थण्डिलं कल्पयेद्धीमान्दर्भैः पुष्पैः परिस्तरैः।
शिलाभिस्ते(स्तां) शिलाभिस्तु तरुभिस्तरुहर्म्यके॥ १८॥
आद्येष्टकान्तं कर्तव्यं विपरीतं विनाऽऽचरेत्।
पुंलिङ्गाभिः शिलाभिस्तु कारयेत्प्रथमेष्टकैः (काः)॥ १९॥
द्वारबन्धस्तु कर्तव्यः श्रीकलाभिर्विशेषतः।
नपुंसकोपलैर्नैव मूर्ध्नेष्टपीकद्विजोत्तम॥ २०॥
पषाणाभशिलाभिर्वा भित्तिस्तम्भोदयो भवेत्।
सवाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्॥ २१॥
एकोनचत्वारिंशान्तं वेदवेदाङ्गुलेन तु।
विस्तारं च घनं माग्वत्तत्संख्या हैव षोडश॥ २२॥
एकादिषोडशान्तं भूमिनामक्रम उच्यते।
मृतेष्टि(दिष्ट)कादिपुंसादि रेखाभिस्तु परीक्षयेत्॥ २३॥
अयुग्मकञ्जरेखा च पुंलिङ्गा संप्रकीर्तिता।
युग्मरेखा च युग्मत्वाळ(त्क)ण्ठाभा सा नपुंसका॥ २४॥
भिन्नबिन्दुकलादीनि लोकपालसमन्वितत्।
वर्जितानि प्रयत्नेन दोषहीनांस्तु संग्रहेत्॥ २५॥
ईषदुन्नतमग्रं स्यान्नतमग्रमुदाहृतम्।
ऊर्ध्वभागमुखं ख्यातमपरं भूतदांशकम्॥ २६॥
अग्रानामग्रतां चाग्रा ऊर्ध्वकं ह्यपरमुच्यते।
प्रागुदस्तं तु वैश्यानां शीर्षाणां परिकीर्तितम्॥ २७॥
मूलान्तादितरत्स्वशतं प्रमाणमिष्टया परम्।
गन्धैर्गन्धोदकैः स्ना(स्ना)प्य पूर्वरात्रेऽधिवासयेत्॥ २८॥
शिवद्विजकुलोद्भूतं शिवदीक्षासमन्वितम्।
सर्वलक्षणसंपन्नो वेदाध्यायव(र)तः शुचिः॥ २९॥
आपोवगाहनं स्नानं मस्मस्नानं समाचरेत्।
नवाम्बरधरोष्णीषं साक्षोत्तियां(सतिर्यग)नुलेपनम्॥ ३०॥
गण्य(न्ध)माल्यैरलंकृत्य सकलीकृतविग्रहम्।
पञ्चाङ्गभूषणैर्भूष्य क्षालयेद्गमनेष्टकाः॥ ३१॥

पञ्चविंशतिस्त्रिंशच्च चत्वारिंशच्चथैव च ।
पञ्चाशत्षष्टिसप्तत्या अशीतिर्नवतिः शतम् ॥ १९ ॥
प्रत्ययश्चापि पञ्चाशज्जगतीसुगतिस्तथा ।
सत्त्वारिश्च सगकश्च तुष्टिः पुष्टिर्धृतिस्तथा ॥ २० ॥
सुधि-श्च दशाद्यादि शतानामभिधानकम् ।
एकादशं शतं चैव सहस्रमयुतं तथा ॥ २१ ॥
नियुतं प्रयुतं कोटिरर्बुदं वृन्द खर्वटम् ।
निखर्वं शङ्खं पद्मं च समुद्रं मध्यमन्तरम् ॥ २२ ॥
आद्यं परं परार्धं च देशवृद्ध्या प्रकीर्तिताः ।
श्रेष्ठं मात्रान्तरैः(रे)स्तम्भ(म्भानां) द्वादशाङ्गुलं भवेत् ॥ २३ ॥
भानुद्वयाद्गुलं कृष्णं हस्तमित्युच्यते बुधैः ।
श्रेष्ठमध्यान्तरैर्भेदैः फल्यहस्तं तथोदितम् ॥ २४ ॥
तच्चतुष्कं भवेद्दण्डं तेन वस्त्राणि मापयेत् ।
पञ्चविंशतिमात्रं स्यात्प्राजापत्यं करं बुधः ॥ २५ ॥
षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहम् ।
अष्टाविंशाङ्गुलं प्राच्यं वैदेहं नवविंशतिः ॥ २६ ॥
वैदेश्य(पुल्यं)त्रिंशदङ्गुल्यमेकत्रिंशत्प्रकीर्णकम् ।
एवमष्टविधं हस्तं प्रत्येकं द्विजसत्तम ॥ २७ ॥
अधमं मध्यमोत्कृष्टं भेदेनैव रविद्वयम् ।
धनुर्ग्रहं प्रकीर्णाख्यं द्विजानां गृहमारभेत् ॥ २८ ॥
वैपुल्यं धनुर्मुष्टिभ्यां क्षत्रियाणां म(गृ)हे कुरु ।
प्राजापत्यं करं चैव शूद्रजात्या गृहे भवेत् ॥ २९ ॥
अधिकं जात्यकं हस्तं हीनानां तु विवर्जयेत् ।
हीनाधिकारविमाणमधिकं च शुभावहम् ॥ ३० ॥
सर्वेषामुदितं हस्तमेवं समानि पूजितम् ।
अन्यं च सर्वदेवानां योग्यं सद्म विभाजयेत् ॥ ३१ ॥
अधिकं कृष्णहस्तं तु सर्वजात्यर्हकं भवेत् ।
यानादिशयनान्तं च कृष्णहस्तेन मापयेत् ॥ ३२ ॥
आरामोद्यानकादीनि प्राजापत्यकरेण तु ।
धनुर्मुष्टिकया चैव ग्रामादि यो(या)स्तु मापयेत् ॥ ३३ ॥

धनुर्ग्रहेण वाप्यादि मयवा(मुख्या)नं च मापयेत् ।
अथवा कृष्णहस्तेन सर्ववास्तुनि वा द्विज ॥ ३४ ॥

इति काश्यपे प्रासादमानलक्षणं त्रयोत्रिंशः पटलः ।

---

अथ चतुर्त्रिंशः पटलः ।

---

मानसूत्राख्य ।

---

अथ वक्ष्ये विशेषेण मानसूत्रस्य लक्षणम् ।
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् ॥ १ ॥
नवपङ्क्तिकरान्तं तु आस्तेनर्कस्(हस्तेनार्कक)रं भवेत् ।
एवमष्टविधं मानं युग्मायुग्मं चतुश्चतुः ॥ २ ॥
पञ्चषड्ढस्तमारभ्य द्विद्विहस्तविवर्धनात् ।
तिथिद्विरष्टकारान्तमाभासं त्रितलस्य तु ॥ ३ ॥
गुह्यवर्मकराद्यावत्सप्ताष्टाधिकतः क्रमः(कराः) ।
चतुष्पञ्चतलं चाऽथ युग्मायुग्मं च ते दश ॥ ४ ॥
विस्तारं सप्तषड्ढस्तभागं कृत्वा द्विजोत्तम ।
रसभूतयुगांशं तु विस्ताराद्रोपयेत्क्रमात् ॥ ५ ॥
विस्ताराद्विगुणं चैव तस्मादर्धांशमाधिकम् ।
पञ्चायामधिकं तुङ्गमाभासे सदने द्विज ॥ ६ ॥
शान्तिकं पौष्टिकं चैव जयतं चाद्भुतं तथा ।
सर्वकामिकमित्येते अभिधानं यथाक्रमम् ॥ ७ ॥
हस्तद्वयमनूस्याऽ(द्व्याऽ)थ व्यासात्संपूर्णमाचरेत् ।
आभासहर्म्यमाख्यातं विकल्पमधुना शृणु ॥ ८ ॥
नवपङ्क्तिकरारभ्य षड्पञ्चात्करांशकम् ।
द्विद्विहस्तविवृद्ध्या तु चतुर्विंशतिसंख्यया ॥ ९ ॥
पञ्चभूमि समारभ्य यावद्‌र्कतलान्तकम् ।
अधमं मध्यमोत्कृष्टं त्रितल्पं च यथाक्रमम् ॥ १० ॥

षट्त्रिंशद्धस्तविस्तारे सप्तपञ्चाशदुन्नये ।
त्रयोदशतलं कुर्यान्मम प्रीतिकरं भवेत् ॥ ११ ॥
विस्तारे सप्तपञ्चांशं नवभिर्हस्तमञ्चत(क)म् ।
तलं षोडशभिर्युक्तं शिवहर्म्यं शिवप्रियम् ॥ १२ ॥
एवं विकल्पमाख्यातं छि(छ)न्दमार्गमथो शृणु ।
त्रिचतुर्दशहस्तादि द्विद्विहस्तविवर्धनात् ॥ १३ ॥
पञ्चषट्षष्टिहस्तान्तं व्यासे वै सप्तविंशतिः ।
वेदभूमिं समारभ्य भानुभूमि(म्य)वसानतु(क)म् ॥ १४ ॥
अधमं मध्यमोत्कृष्टं मानं वेदतलं प्रति ।
सप्ताष्टादशहस्तादि त्रित्रिहस्तविवर्धनात् । १५ ॥
पञ्चषण्णवतिर्यावदुच्चं प्रागिव संख्यया ।
अधमं मध्यमोत्कृष्टं तुङ्गभेदतलं प्रति ॥ १६ ॥
छिन्दमेवं तलाख्यातं जातिहर्म्यमथ(मथो) शृणु ।
सप्ताष्टादशहस्तादि द्विद्विहस्तविवर्धनात् ॥ १७ ॥
सप्ताशीतीति हस्तान्तं सप्तविंशतिसंख्यया ।
चतुर्भूमिं समारभ्य यावदर्कतलं प्रति ॥ १८ ॥
तावद्विस्तारमाख्यातमुत्सेधं शृणु संव्रतः(सुव्रत) ।
त्रिसप्तविंशद्धस्तादित्रित्रिहस्तविवर्धनात् ॥ १९ ॥
यावदाशतहस्तान्तमुच्चं प्रागिव संख्यया ।
अधमं मध्यमोत्कृष्टं व्यासोच्चं त्र क्रमोदितम् ॥ २० ॥
एवं जातिविमानं तु सप्तविंशतिभेदितम् ।
जातिछन्दविकल्पं च आभासास्ते द्विजोत्तम ॥ २१ ॥
महतीद्वयन्तरालं च क्षुद्रनानामथोदितम् ।
युगाग्रे भूतमाने तु मानसूत्रं च विन्यसेत् ॥ २२ ॥
सदन्याकृतिहर्म्याणां वेदे शृङ्गान्तपूरणम् ।
यत्रैव भज्यते तत्र मानसूत्रं विधीयते ॥ २३ ॥
प्रासादानां तु विस्तारं भित्तिपाद्यग्रमेव वा ।
तत्पादाभ्यन्तरं वाऽथ तत्पादमध्यमं तु वा ॥ २४ ॥
उत्सेधं तद्युपानादि स्तुप्यन्तं वा शिरोन्नतम् ।
सभामण्डपशालानां भित्तिमध्यावसानकम् ॥ २५ ॥

भित्तिमध्येऽङ्घ्रिबाह्ये मध्ये वाऽभ्यन्तरेऽपि वा ।
भित्तिबाह्यगतं सौतु बाह्ये वाऽभ्यन्तरेऽपि वा ॥ २६ ॥
सदङ्घ्रिमध्यावसानं मानसूत्रं द्विजोत्तम ।
भित्तिमध्येऽङ्घ्रिविस्तारं चाङ्घ्रिस्थानेषु चोच्यते ॥ २७ ॥
भित्तिबाह्यगतं पादं मार्गेण प्रोच्यते तदा ।
सालानां भित्तिमध्ये वा बाह्ये वाऽभ्यन्तरेऽपि वा ॥ २८ ॥
यानानां शयनानां च स्यान्मध्ये मानसूत्रकम् ।
मानसूत्रं समाख्यातं सर्वेषां सदनादिनाम् ॥ २९ ॥
मानसूत्रं तु बाह्ये स्यात्कूटशालादिनीव्रकम् ।
कूटाद्यात्तथि(बहि)शालं वा त्रिपादं वाऽर्धमेव वा ॥ ३० ॥
पादं सार्धं सपादं वा मानसूत्राच्च हीग(निर्ग)तिम् ।
अथवा दण्डमानेन तुङ्गादीना तु निर्गतिम् ॥ ३१ ॥
दण्डं वा सार्धदण्डं वा द्विदण्डं सार्धदण्डकम् ।
त्रिदण्डं वाऽथ निष्क्रान्तं मानसूत्रात्तु बाह्यतः ॥ ३२ ॥
मानस्याभ्यन्तरे येषां पिपा(त्रिप)द्यामास्पदं सदा ।
तस्मात्सर्वप्रयत्नेन मानसूत्राद्बहिर्गतम् ॥ ३३ ॥
एतद्विन्याससूत्रं स्यात्समसूत्रात्समं वा ।
होमावागतसूत्रं वा अवसानमुदाहृतम् ॥ ३४ ॥
मानविन्यासंसूत्रं च अवसानं च ते प्रपम ।
स्थानं संक्षेपतो विप्र शृणुष्वाऽऽयादिलक्षणम् ॥ ३५ ॥
इति काश्यपशिल्पे मानसूत्रादिलक्षणं चतुर्विंशः पटलः ।

---

## अथ पञ्चविंशः पटलः ।

---

### आयादिलक्षणम् ।

---

अथ वक्ष्ये विशेषेण आयादिलक्षणं परम् ।
हर्म्यपदमागमानं तु गुणाढ्यं वसुभिर्हरेत् ॥ १ ॥

शेषं द्विजातियोनिः स्यात्तपसेषकरं बुधः ।
वर्जयेद्वसुभिश्चैव ऋक्षे भूतं हयादिकम् ॥ २ ॥
अथवा परितो हस्तं पातलैर्ह्रासयेद्बुधः ।
शेषमर्कादिवारं स्याद्व्यासायामकरं गुणैः ॥ ३ ॥
त्रिंशद्भिर्वर्धयेद्भित्ति शेषं प्रतिपदादयः ।
तिथयस्तु समाख्यातं तुङ्गं हस्ताष्टवृद्धिदम् ॥ ४ ॥
नाभिस्तु निर्विशेषपायामित्युच्यते बुधैः ।
तुङ्गं नवं तु मध्यात्तु नाम(क्रमा)द्वै नाडिभिर्हरेत् ॥ ५ ॥
शेषं वयमिति ख्यातं आयाधिका(वयं) व्ययक्षयम् ।
केतुः सिंहो वृषो हस्ती गुरुः शुक्रो बुधः शशी ॥ ६ ॥
यजमानस्य जन्मर्क्षादविरोधे दिनं तथा ।
वास्तुजन्मविरोधं च प्रसा(तथा) ह्यात्मकुलं शुभम् ॥ ७ ॥
एवं परीक्ष्य बहुधा शुभमानं तु संग्रहेत् ।
अथवा विस्तृतायामहस्तमष्टगुणीकृते ॥ ८ ॥
भानुव्यये विशेषं तु आयमित्युच्यते बुधैः ।
नवद्वादशभिर्हंसैः शेषं व्ययमुदाहृतम् ॥ ९ ॥
वसुभिर्गुणिते ऋक्षे हृते शेषादिकं दिनम् ।
गुणवृद्ध्याऽष्टभिर्ह्रासे शेषं ध्वजादियोनरः(यः) ॥ १० ॥
नवऋद्ध्यापरीतोऽस्तं सप्तसंख्या तु ह्रासयेत् ।
शेषमर्कादिवारः स्यात्त्रिंशद्ध्रासे तिथिर्भवेत् ॥ ११ ॥
प्रागवस्तुमाशुभं मध्ये शुभमानं तु संग्रहेत् ।
त्रिपञ्चयुगलं वेदषडष्टनव भाति वै ॥ १२ ॥
सवेष्टसिद्धिदाः प्रोक्ताः शेषास्तु परिवर्जिताः ।
नृपकर्तुश्च जन्मर्क्षाद्दिक्ऋक्षावसानकम् ॥ १३ ॥
गणयेन्मतिमान्विप्रः शुभमानं तु सूरताम् ।
लग्नाष्टमविनाशं च दुष्टयोगं च वर्जयेत् ॥ १४ ॥
शूर्पा(ला)दियोगदोषाढ्ये दुष्टयोग उदाहृतः ।
आयादिरेवमाख्यातं नागरादिविधिं शृणु ॥ १५ ॥

## नागरादिविमानम् ।

---

नागरादिविमानानां लक्षणं वक्ष्यतेऽधुना ।
हिमाद्रिकन्ययोरन्तर्गतो देश उदाहृतः ॥ १६ ॥
सोऽपि देशस्त्रिधा भिन्नस्तत्तद्देशोद्भवैर्गुणैः ।
यथैव देहिनां देहो वातपित्तकफात्मकः ॥ १७ ॥
तथा ह्येतज्जगत्सर्वं विज्ञेयं त्रिगुणात्मकम् ।
साक्षि(त्त्वि)कं तामसं चैव राजसं च त्रिधा स्मृतम् ॥ १८ ॥
हिमाद्रिविन्ध्ययोरन्तर्गता सत्त्वा वसुंधरा ।
विन्ध्यादिकृष्णवेण्यन्ता राजसाख्या मही मता ॥ १९ ॥
कृष्णवेण्यादिकन्यान्तं तामसं भूतलं भवेत् ।
नागरं सात्त्विके देशे तामसे पे(वे)सरं भवेत् ॥ २० ॥
राजसं द्राविडे देशे कामदेवं हि भावये(ये)त् ।
सात्त्विके नागरे हर्म्ये तामसे वेसरालयौ ॥ २१ ॥
राजसैर्द्राविडैर्हर्म्यं क्रमात्पुण्डरीयोपितः ।
विष्णुर्महेश्वरो धाता क्रमाद्धर्म्यादिदेवताः ॥ २२ ॥
नागरं भूसुरं विद्याद्वेसरं वैश्यमुच्यते ।
द्राविडं तन्नृपं ज्ञेयं माक्रती(नतः)शृणु सुव्रत ॥ २३ ॥
कूटकोष्ठादिनिष्क्रान्तं मानसूत्रे तु सुस्थितम् ।
उन्नतावनतोपेतौ कूटकोष्ठौ यथाक्रमम् ॥ २४ ॥
एकाकारतलस्तम्भपत्रतोरणसंयुतम् ।
क्षुद्रकोष्ठसमायुक्तं महानास्यपरे द्विज ॥ २५ ॥
वेदिकाजालकोपेतं कूटवेदाश्रशीर्षकम् ।
एकानेकतलं वाऽपि सालीन्द्रं वाऽपि हीनकम् ॥ २६ ॥
वेदाश्रं शीर्षं कण्ठं स्यात्सान्ताकारमथापि वा ।
नागरं भवनं ख्यातं तत्तद्देशे प्रकाशितम् ॥ २७ ॥
भाग्नकूटविनिष्क्रान्तं कोष्ठकूटोद्गतं तु वा ।
मानसूत्राद्बहिष्कूटं नीव्रकूटं तु कोष्ठकम् ॥ २८ ॥

मध्यकोष्ठं सभद्रं वा द्विभद्रं वा द्विजोत्तम ।
पञ्जरं मानसूत्रेण कूटनिष्क्रान्तसागरम् ॥ २९ ॥
उन्नतायततो वेला सौष्ठीकोपयथाक्रमम् ।
उन्नतं सान्तरं मञ्चं नं तं मस्तरहीनकम् ॥ ३० ॥
चतुरश्राष्टवृत्ताभं कूटं क्रमाच्चले तले ।
नानामसूरकस्तम्भवेदिकालकतोरणैः ॥ ३१ ॥
वृत्तास्यरफाटिकैर्हस्तितुण्डैः कुम्भलतादिभिः ।
हारान्तरेषु मञ्चोर्ध्वे क्षुद्रकोष्ठयुतं तु वा ॥ ३२ ॥
तत्रैव हस्तितुण्डं वा भद्रनास्यल्पमेव वा ।
साधारं वा निराधारमेकानेकतलं तु वा ॥ ३३ ॥
शिरसो वर्तनं कण्ठं वृत्तं वाष्टाश्रमेव वा ।
युगाश्रं वा शिरः शीर्षं विमानं द्राविडं भवेत् ॥ ३४ ॥
तदेव चरणाधारमेकाकारं तु कल्पयेत् ।
आ(हा)रान्तरे विशेषेण कल्पवृत्तस्फुटोद्यम् ॥ ३५ ॥
समं तु कूटकोष्ठाद्यौ सान्तरमन्तरान्वितौ ।
हीनोचान्तरमञ्चोर्ध्वे निष्पञ्चसमसूत्रकम् ॥ ३६ ॥
हारान्तरे तु कर्तव्यं भद्रं वा भद्रपञ्जरम् ।
कपोतपञ्जराढ्यं वा सान्तरमन्तरान्वितम् ॥ ३७ ॥
सर्वेषां कण्ठकूटानामाशीर्षं तु युगाश्रकम् ।
चत्वश्रं वेदिकोपेतं मण्डलं शीर्षके गलम् ॥ ३८ ॥
चत्वश्रं वा शिरः कण्ठं युगाश्रं वा प्रकल्पयेत् ।
एतच्च द्राविडं स्यातं दोमाधाकुम्भलान्तरम् ॥ ३९ ॥
चत्वश्रं वा षडश्रं वा तच्च द्राविडमुच्यते ।
एवं त्रिविधं नित्यं तु प्रोच्यते द्राविडालयम् ॥ ४० ॥
वेसराकूटकोष्ठादिनीध्राः स्युः समसूत्रगाः ।
वृत्ताकारशिरोपेतान्कण्ठकूटान्प्रकल्पयेत् ॥ ४१ ॥
वृत्तगर्भगृहाकारं चाष्टवृत्ताभमेव वा ।
वृत्तग्रीवशिरोपेतं यथेष्टं शिखरेण वा ॥ ४२ ॥
सालिन्द्रं वा सभद्रं वाऽप्येकानेकतलं तु वा ।
समाग्रं वाऽऽयताग्रं वा वृत्तं वृत्तायतं तु वा ॥ ४३ ॥

वृत्तश्रवृत्तायवा(यतं)हर्म्यं कूटकोष्ठादिभिर्युतम् ।
उन्नतावनतोपेतौ कूटकोष्ठौ यथाक्रमम् ॥ ४४ ॥
समौ वा कूटकोष्ठौ द्वौ बाहू भूम्येकमेव वा ।
वेसरं भवनं स्यातमथवाऽन्यप्रकारतः ॥ ४५ ॥
जन्मादिस्तूपिपर्यन्तं युगाश्रं नागरं भवेत् ।
षडश्रं शीर्षं कण्ठं वा द्राविडं भवनं भवेत् ॥ ४६ ॥
वृत्तग्रीवाशिरोपेतं वेसरं हर्म्यमीरितम् ।
कूटकोष्ठविहीनानां हर्म्यकं कथितास्तिमे( तं त्रिविदम् ) ॥ ४७ ॥
नानाधिष्ठानसंयुक्तं गलं प्रत्यङ्घ्रि भेदितम् ।
सर्वत्र वृत्तपादं वा वेसरे भवने कुरु ॥ ४८ ॥
लिङ्गं च पिण्डिका चैव प्रासादं चैव जातिकाम् ।
सर्वसंपत्समृद्धिः स्यान्नृपतेर्वास्तु मज्जनम् ॥ ४९ ॥
परिते विपरीते वा राजराष्ट्रभयंकरम् ।
तस्मात्सर्वप्रयत्नेन एकजात्यैवमाचरेत् ॥ ५० ॥
नागरे सकलं शान्तं वेसरे यानपश्चिमम् ।
भोगं वीरं च नृत्तं च द्राविडे भवने भवेत् ॥ ५१ ॥
अन्यथा चेद्विपत्यै च कर्तुर्भर्तुश्च देहिनाम् ।
नागरादिविधिः प्रोक्तो गर्भन्यासविधिं शृणु ॥ ५२ ॥
इति काश्यपशिल्पे नागरादिविधिः पञ्चविंशः पटलः ।

---

## अथ षड्विंशः पटलः ।

---

### गर्भविन्यासः ।

---

अथ वक्ष्ये विशेषेण गर्भन्यासविधिं परम् ।
प्रासाददे(गे)हमिःयुक्तं तस्य प्रकारो वास्तुगर्भकम् ॥ १ ॥
गुरुहीने गृहे विप्र सकृत्काले नवास्यकम् ।
अश्मन्यश्च वेदाश्च न वसेयुस्त(र)गर्भकम् ॥ २ ॥

तस्मात्सर्वप्रयत्नेन गर्भन्यासं तु कारयेत् ।
श्रीप्रणं(दं) प्रा(प्रा)णिनां गर्भमितरे श्रीकरं भवेत् ॥ ३ ॥
अधिष्ठानप्रतेरूर्ध्वे मुमुक्षूणां हिताय वै ।
कुमुदूर्ध्वे नृपाणां तु जगत्यूर्ध्वे विशां वरम् ॥ ४ ॥
होमोर्ध्वे गर्भविन्यासं शूद्राणामर्थवृद्धिदम् ।
सर्वजात्यन्तं हं(सं)प्रोक्तं भूमौ त्वाद्येष्टकोपरि ॥ ५ ॥
प्रासादमण्डपे चैव प्राग्द्वारे गोपुरे तथा ।
परिवारालये चैव गर्भन्यासं तु कारयेत् ॥ ६ ॥
यत्रैऽऽद्येष्टकान्यासं तत्र गर्भं निधापयेत् ।
सौवर्णं राजतं ताम्रं श्रेष्ठमध्याधमं क्रमात् ॥ ७ ॥
कांस्येनैवाथवा विप्र कर्तव्यं गर्भभाजनम् ।
पञ्चाङ्गुलं समारभ्य यावद्वै विंशदङ्गुलम् ॥ ८ ॥
एकैकाङ्गुलवृद्ध्या तु कलासंख्या तु भाजनम् ।
एकादिषोडशान्तानां भूमीनां तु यथाक्रमम् ॥ ९ ॥
गर्भभाजनतारास्ते त्वङ्घ्रिमूलतरं तु या ।
गर्भभाजनविस्तारं विस्ताररुद्दगोन्नतम् ॥ १० ॥
भाजनोच्चस्य भागैकं विधानस्योच्छ्रयं भवेत् ।
भाजने द्वित्रिभागान्तं त्रिधाबालम्बनं द्विज ॥ ११ ॥
यवैकव्यासमारभ्य यवार्धैः कोष्ठविस्तृतम् ।
फलोच्चं त्रिचतुर्भागं कोष्ठभित्युदयं भवेत् ॥ १२ ॥
मध्यकोष्ठे न्यसेत्कूटमिन्द्रनाभसमन्वितम् ।
तत्पूर्वे अष्टकोष्ठेषु परितो द्विजसत्तम ॥ १३ ॥
अनन्तादिशिखण्ड्यन्तं मूलमन्त्रं निधापयेत् ।
तद्बाह्ये षोडशे कोष्ठे पूर्वादिक्रमयोगतः ॥ १४ ॥
अकारादिविसर्गान्तस्य(स्व)रान्न्यस्यात्र(स्यात्क)मेन(ण)तु ।
रत्नलोभा(हेमा)नि धाका(न्या)नि फलाभ्य(न्य)न्तवज(रके)न्यसेत् ॥१५॥
मूलकन्दधान्यपत्राणि गर्भगर्ते तु विन्यसेत् ।
फलशुद्धिं ततः कृत्वा गन्धद्रव्येत्युदाहरन् ॥ १६ ॥
मणित्रयं विन्यसेत्कूटे कूटाक्षरमुदाहरन् ।
अनन्ते विन्यसेद्वज्रं सूक्ष्मे सौ(मौ)क्तिकविन्यसेत् ॥ १७ ॥

शिलोत्तमैरिन्द्रनीलं स्यात्स्फाटिकैर्नेत्रके ।
एकरुद्रे तु शङ्खं स्यात्त्रिमूर्ते पुष्परागकम् ॥ १८ ॥
श्रीकण्ठे सूर्यकान्तं स्याच्छिखण्डौ तु विसूरकम् ।
स्वर्णेनैव जगत्कृत्वा अकारे विन्यसेद्बुधः ॥ १९ ॥
कपालं रजतेनैव इकारे तु निधापयेत् ।
ताम्रेणैव तु स कुम्भमुकारे द्विजसत्तम ॥ २० ॥
आरकूटेन तद्द्वार गकारे तु निधापयेत् ।
कासे(स्ये)नैव त्रि(पि)नाकं तु अकारे विन्यसेद्गुरुः ॥ २१ ॥
सीसेन परशुं कृत्वा एकारे तु निधापयेत् ।
त्रपुणा हरिणं कृत्वा औकारे तु निधापयेत् ॥ २२ ॥
त्रिशूलमायसेनैव अंकारे तु निधापयेत् ।
स्वर्णेन वृषभं कृत्वा कूटाक्षरे निधापयेत् ॥ २३ ॥
आकारे विन्यसेत्कर्पूरमीकारे तु मनःशि(नःशि)लाम् ।
ऊकारे श्वितिलिङ्गं तु ऋकारे गैरिकां न्यसेत् ॥ २४ ॥
सौराष्ट्रं चैव लृकार एकारे स्वञ्जनं न्यसेत् ।
गोरोचने तथाकारे विसर्ग्ये नीलधारकम् ॥ २५ ॥
सर्वौजं समनुस्मृत्य विन्यसेत्तत्क्रमेण तु ।
यवा नीवारशाली च प्रियङ्गुतिलसर्षपम् ॥ २६ ॥
मुद्गानि सप्त बीजानि पूरयेद्गर्भभाजने ।
विधाय विधानेन सुस्निग्धं सुदृढं कुरु । २७
प्रासादस्योत्तरे वाग्ने पञ्चपद्मसहस्तकाम् ।
षोडशस्तम्भसंयुक्तां प्रपां कृत्वाऽतिसुन्दराम् ॥ २८ ॥
विधानेनोल्लिमास्छाद्य नाङ्गैः स्तम्भवेष्टनैः ।
द्वारतोरणसंयुक्तं दर्भमालाविभूषितम् ॥ २९ ॥
मण्टपस्य त्रिभागैक मध्ये वेदिं प्रकल्पयेत् ।
हस्तमात्रसमुत्सेध तालमात्रमथापि वा ॥ ३० ॥
परितस्त्वग्निकुण्डानि महाशाल द्विजोत्तम ।
चतुरश्रं धनुर्वृत्तं पद्म प्रागादिषु क्रमात् ॥ ३१ ॥
त्रिमेखलसमायुक्तं नाभियोनिसमन्वितम् ।
दर्पणोदरसंकाश कुण्डवेदिस्थितं कुरु ॥ ३२ ॥

सच्छिद्रलिप्ततद्वारस्य गोमयालेपनं कुरु ।
पिष्टचूर्णैरलंकुरय पुण्याहं प्रोक्षयेत्तु(णं कु)रु ॥ ३३ ॥
वेदी द्वे स्थण्डिले कुर्याच्चतुर्द्रोणैस्तु शालिभिः ।
तिलतण्डुललाजैश्च दर्भैः पुष्पैः परिस्तरेत् ॥ ३४ ॥
गन्धपुष्पादिभिः पूज्या दिग्देवा नाममन्त्रकैः ।
गव्याभिषेचय फलं तु स्नापयेद्गन्धतोयकैः ॥ ३५ ॥
तन्मुखा कौतुकं बद्ध्वा नववस्त्रेण वेष्टयेत् ।
स्थण्डिले तु निधातव्यं कूटाक्षरमुदाहृतम् ॥ ३६ ॥
परितोऽष्टौ घटान्यस्त्वा(स्य) समूलान्सविधानकान् ।
सपूर्वान्विन्यसेत्तत्र(समन्तात्परितः क्रमात् ॥ ३७ ॥
विश्वे[श्व]रादिकुम्भस्थे स्तोमाभ्यर्च्य स्वमन्त्रतः ।
कुण्डानां पञ्चसंस्कारं कृत्वा होमं समाचरेत् ॥ ३८ ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
समि[दा]ज्यचरूल्लाँजतिलतण्डुलसर्षपान् ॥ ३९ ॥
हृदयादिषु सङ्कल्प्य ईशानेन क्रमेण तु ।
होमं कृत्वा विशेषेण प्रत्येकाष्टशताहुतीः ॥ ४० ॥
द्रव्यान्ते व्याहृतीर्हुत्वा मूलेनैव शताहुतीः ।
जयादिरभ्यातानैश्च राष्ट्[भृच्चैव]होमयेत् ॥ ४१ ॥
एवं जागरणं रात्रौ प्रभाते शुभमुहूर्तके ।
सुनक्षत्रे शुभे तु सुतिथौ च शुभवारके ॥ ४२ ॥
शिवद्विजकुले जातः स्वाचार्यः शिवदीक्षितः ।
स्नानद्वयसमायुक्तः सकलनः सविग्रहः ॥ ४३ ॥
सितवस्त्रोत्तरीयश्च सितमाल्यानुलेपितः ।
आचार्यान्पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥ ४४ ॥
शिल्पिनः पूजयेत्तत्र वस्त्राभरणादिभिः ।
गर्भस्थानं प्रविश्याथ कर्ता कूर्चा(चाऽऽचा)र्यशिल्पि च ॥ ४५ ॥
अष्टधा विभजेद्भित्तिं बाह्यतस्त्वन्तरस्त्यजेत् ।
त्रीणि चाभ्यन्तरे वर्ज्यं द्विपांशे भाजनं न्यसेत् ॥ ४६ ॥
दक्षदीसरथवल्लीकं दलस्तेऽङ्गुलिरानटे ।
नागावृषभशृङ्गे च अष्टमृदा(मृद्भ्या)र देशिकः ॥ ४७ ॥

गर्भगर्ते नमोचार्य कन्दान्न्यसेच्चनोपरि ।
मध्यमे त्वम्बुज न्यस्यात्पूर्वे कुमुदकन्दकम् ॥ ४८ ॥
दक्षिणे चोत्पलं कन्दं सौगन्धि पश्चिमे न्यसेत् ।
सौम्य उशीरकन्दः स्याद्बीजं तदुपरि न्यसेत् ॥ ४९ ॥
पूर्वे तु विन्यसेच्छालिं व्रीहिं वै दक्षिणे न्यसेत् ।
पश्चिमे गो(को)द्रव विद्यान्माषमुत्तरतो न्यसेत् ॥ ५० ॥
पार्श्वे विन्यसेन्माषान्मैर्क्रन्यां कुरु पूजकैः ।
प्रियंगु वायुदिग्भागे ऐशान्ये स्य(तु)कुलस्थ(लित्थ)कम् ॥ ५१ ॥
एवं न्यस्य हृदं मन्त्रांस्तथा वै गर्भभाजनम् ।
सर्ववाद्यसमायुक्तं नृत्तगेयसमन्वितम् ॥ ५२ ॥
जयशब्दसमायुक्तं ब्रह्मघोषसमन्वितम् ।
प्रासादबीजमुद्धार्य स्थापयेद्गर्भभाजनम् ॥ ५३ ॥
शैलैर्वा इष्टिकाभिर्वा सुधया सुदृढं कुरु ।
गन्धपुष्पादिभिः पूज्य प्रसादं .. ... .. ।
गर्भन्यासविधिः ख्यातस्त्वेकतलविधिं शृणु ॥ ५४ ॥

इति काश्यपशिल्पे गर्भन्यासविधिः षड्विंशः पटलः ।

---

अथ सप्तविंश पटल ।

---

एकतलम् ।

---

अथ वक्ष्ये विशेषेण हर्म्यमेकतलं शृणु ।
तस्य विस्तारतुङ्गं च प्रोक्तं प्रासादमानके ॥ १ ॥
युगाश्रं वृत्तमायाश्रं(तं) वस्वश्रं च षडश्रकम् ।
अग्राधमाक्रान्तिरत्नेषां शिखरेऽपि तथैव च ॥ २ ॥
हर्म्यतारार्धमानं तु कल्पयेत् मुखमण्डपम् ।
हर्म्यतारसमं श्रेष्ठं तयोर्मध्येऽष्टभाजिते ॥ ३ ॥
मुखमण्डपदीर्घं (दैर्घ्यं) तु नवधा कथितं मया ।
प्रासादमर्धं स्यात्मुखमध्यमण्डपम् ॥ ४ ॥

प्रासादात्रेशनं श्रेष्ठ(श्रेष्ठं) दण्डं वाऽर्धार्धदण्डकम् ।
द्विदण्डं वा प्रवेशं तु मानसूत्रं द्विजोत्तम ॥ ५ ॥
अन्तरालसमायुक्तं युक्तसर्वाङ्गसंयुतम् ।
सावकाशान्तरालं च दीर्घे द्वित्रिचतुष्टयम् ॥ ६ ॥
सोपानं पार्श्वयोः कुर्याद्गजहस्तविभूषितम् ।
प्रासादभित्तिविस्तारतुल्यं वाऽर्धत्रिपादकम् ॥ ७ ॥
अन्तरालस्य मित्येव व्यासाः स्युर्मण्डपे तथा ।
कूटकोष्ठादियुक्तं वा हीनं वा मुखमण्डपम् ॥ ८ ॥
त्रिवर्गसंहितं वाऽपि तोरणाद्यैर्विचित्रितम् ।
एकानेकतलं वाऽथ कर्तव्यं मुखमण्डपम् ॥ ९ ॥
हर्म्यतारात्रिभागैकं गर्भगेहस्य विस्तरम् ।
पञ्चभागेऽग्निभागं च वेदांशं सप्तभागिकम् ॥ १० ॥
द्वारांशे भूतभागं तु अर्कांशं रुद्रभागिके ।
त्रयोदशांशे वस्वंशं दशं वस्वांशभागिके ॥ ११ ॥
सपादं च नवांशं च व्यासोर्ध्वं मि(वं हि) द्विजोत्तम ।
गर्भगेहस्य विस्तारो नवधा परिकीर्तितः ॥ १२ ॥
शेषभित्तिविशालं स्यात्परितः कल्पयेद्बुधः ।
एकद्वित्रिचतुष्पञ्च पङ्क्तिः स्यादेकभागिके ॥ १३ ॥
हर्म्योर्ध्वं वसुधा भक्त्य एकांशं हि तलोन्नतम् ।
द्विभागं चरणायामं प्रस्तरस्यैकभागतः ॥ १४ ॥
गलोच्चं त्वेकभागेन द्विभागं शिखरोदयम् ।
एकांशं स्तूपितुङ्गं तु कल्पयैवं शान्तिकं भवेत् ॥ १५ ॥
एकांशरहितं श्रेष्ठं पञ्चं वा पार्श्वदेवता ।
एवं शान्तिकमाख्यातं पौष्टिकं चाधुनोच्यते ॥ १६ ॥
सदनोच्चे नवांशे तु शिरोंशं तु तलोदयम् ।
अन्ये(र्धे)नांशसमायुक्तं द्व्यंशं चरणायतम् ॥ १७ ॥
पञ्चमानं तथैवांशं साध्यं पादांशकं गलम् ।
सत्रिभागं द्विभागं तु शिखरोदयमीरितम् ॥ १८ ॥
स्(ए)पोत्सेधं तथैकांशं पौष्टिकं सदनान्वितम् ।
सदंतच्छे(दनोच्चं) दशांशैकमधिष्ठानोदयं भवेत् ॥ १९ ॥

सार्धद्व्यंशं तु पादोच्चं प्रस्तरोच्चं शिवांशकम् ।
सार्धांशं गलमानं तु गुणांशं शिखरोदयम् ॥ २० ॥
एकांशं स्थूपिमानं तु जपताना(यस्थान) मुदाहृतम् ।
रुद्रांशं हर्म्यतुङ्गं तु सपादांशं धरातलम् ॥ २१ ॥
सार्धद्व्यंशं तु पादोच्चं प्रस्तरोच्चं शतांशकम् ।
अत्यर्धांशं तु कण्ठोच्चं सार्धत्र्यंशं तु शीर्षकम् ॥ २२ ॥
शेषं स्थू(स्तू)प्युदयं स्यात् तत्रूनं सदनं भवेत् ।
उत्तुङ्गे सप्तभागे तु व्योमांशं तु धरातलम् ॥ २३ ॥
पक्षांशं पादतुङ्गं तु शिखरोच्चं गुणांशकम् ।
स्तूप्यो(प्यु)त्सेधं तथैकांशमेतत्स्यात्सर्वकामिकम् ॥ २४ ॥
शान्तिकाद्युदयोपेतं हर्म(र्म्ये)मुण्यं क्रमोदयम् ।
विश्व(प)रीतं त्रिपादी(दानां) त्रिपाणि(येपरी)त्यं समावहेत् ॥२५॥
तस्माद्द्विस्त्यादिगुणं च उदयं चैकमाचरेत् ।
रुद्रांशं सदनोत्सेधं तत्रमेकांशमानतः ॥ २६ ॥
द्व्यंशं च चरणायामं प्रस्तरं च शिवांशकम् ।
उपग्रीवं तु सार्धांशं त्रिपादं प्रस्तरोदयम् ॥ २७ ॥
सपादांशं गलोत्सेधं सार्धद्व्यंशं तु शीर्षकम् ।
एकांशं स्थू(स्तू)पिमानं तु एवं चैवाद्भुतं स्मृतम् ॥ २८ ॥
अथवाऽष्टौ द्विरष्टौ च धात्वष्टाभूस्तथा कृतम् ।
पक्षैराधारमानं च मञ्चोपग्रीवमञ्चकम् ॥ २९ ॥
गलमूर्ध्नि शिरोमानं पार्श्वे चाष्टनवांशकम् ।
ग्रीवमग्रीवसमं चैतदेकभूरेकविन्यसेत् ॥ ३० ॥
ऊर्ध्वे मञ्चोपरिष्टं तु चतुष्कोणैः समुन्नत ।
अथवा(वाऽ)ष्टनवांशे तु ससप्तांशं सविस्तरम् ॥ ३१ ॥
विविधं स्यात्समायुक्तं कर्णकूटमुदाहृतम् ।
कर्णकूटसमायुक्तं हीनं वा तद्विशेषतः ॥ ३२ ॥
प्रतिष्ठानादिसर्वाङ्गं मग्रीवं च प्रकल्पयेत् ।
तुङ्गाग्रीवसमायुक्तं तथैव शिखरं घनम् ॥ ३३ ॥
शिखरे तु महानासी चतुरस्रा महानि(दि)शि ।
दिशि भद्रार्पितं माऽऽस्ये मञ्चेऽल्पा नासिका कल्पा ॥ ३४ ॥

मस्तरेऽष्टाल्पनासी वा जयद्वंद्वमुदाहृतम् ।
तदेव कर्णकूटाभ्यां षट्पञ्चाशे शिखी(खे)तथा ॥ ३५ ॥
नागरेऽप्युचित कण्ठकूटाकारं प्रकल्पयेत् ।
कण्ठकूटसमा मध्या भद्र तद्भद्रनासिका ॥ ३६ ॥
अन्तराल च तत्तुल्यं क्षुद्रं पञ्चाशसंयुतम् ।
अभद्रं वाऽथ भद्र वा कूटं वा भद्रनासिका ॥ ३७ ॥
भद्रा नासी विशाला वा मध्ये भद्र विशालकम् ।
त्रिचतुष्पञ्चषट्सप्तभागं वा सदनंस्त(नाश)कम् ॥ ३८ ॥
ह्रस्वैकांशं द्विभागं वा मध्ये भद्रविशालकम् ।
त्रिभागं च विशालं तु मध्ये भद्रय(व)शालयाः ॥ ३९ ॥
दण्डं वाऽध्यर्धदण्डं वा द्विदण्ड वाऽथ निर्गतिः ।
यथेष्टं शिखरं कण्ठश्रीभोगान्तमुदाहृतम् ॥ ४० ॥
षड्वर्णं पट्टसंयुक्त स्वतारे कुड्यपादयोः ।
स्वतारे कुड्यपादाढ्यानिघ्नान्तरहित तु वा ॥ ४१ ॥
श्रीभन्तदि(द्रमिति वि)ख्यातं सर्वदेवात्मकं परम् ।
सदेव सदने बाह्ये मध्ये भद्रयुतं तु वा ॥ ४२ ॥
तोरणैर्जालकाढ्यं तच्छ्रीविशालकमान्वितम् ।
तदेव वेदिकाकण्ठं शिखरं च घटं तथा ॥ ४३ ॥
षड्वर्गं पादसयुक्तं चतुर्दिग्भागनासिकम् ।
चत्वारो (चतस्रो)नासिकापा(श्वा)ल्पाश्छ(ल्पाः शि)खरे तु विदिक्स्थिताः
पादं प्रकल्पनायाऽद्यं स्वस्तिकाङ्गं तदुच्यते ।
तदेव मध्यभद्र च कर्णकूटविहीनकम् ॥ ४५ ॥
सुशोभनाख्यं ख्यातं सर्वदेवप्रियावहम् ।
शिखरे तु कृता नासि नस्ताराष्टौ द्विरष्टधा ॥ ४६ ॥
युगाश्रं शिखरं कण्ठं वेदिका चैव श्रीकरम् ।
तदेव शिखरे चाष्टावल्पनासिसमन्वितम् ॥ ४७ ॥
महानास्यपरे कोष्ठसंयुत शीर्षग(कं)भवेत् ।
नासिकाविस्तृत दण्डद्वयं वाऽपि त्रिदण्डकम् ॥ ४८ ॥
कोष्ठोपसमारभ्याथमुन्मेधं नासिकासमम् ।
विदिक्षु भद्रनासाढ्यं शिखरं परिकल्पयेत् ॥ ४९ ॥

वृत्तपरतकण्ठाढ्यं चस्त्रं वा गलं शिरः।
वृत्तकेशि(स)रमाख्यातं वस्त्रं राजकेसरम् ॥ ५० ॥
प्रासादस्य तु विस्तारः पञ्च सप्ताष्ट वा भवेत्।
त्रिभागं वा द्विभागं वा भाग्यद्वा मध्यभद्रकम् ॥ ५१ ॥
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं वा त्रिदण्डकम्।
मध्यभद्रस्य निष्क्रान्तं भद्रापेक्षितहर्म्यके ॥ ५२ ॥
यद्व(यम्म)हानासिकोपेतं शिरः स्यायक(न)वृत्तकम्।
पादं मत्यल्पनासाढ्यं कण्ठं वै शीर्षमा(का)कृति ॥ ५३ ॥
कल्याणसुन्दरं ख्यातं सर्वदेवार्हकं परम्।
तदेव भद्रनासाढ्यं पूर्वापरं द्विजोत्तम ॥ ५४ ॥
स्थलादनासिकोपेतं पार्श्वयोर्द्विजसत्तम।
समं वा सायतं वाऽथ कल्पितं कोशलं भवेत् ॥ ५५ ॥
स्थलं प्रतिविमानादि तु(उ)क्तं प(त्व)थ वक्ष्यते।
स्कन्दं वै पूर्वदिग्भागे दक्षिणामूर्तिदक्षिणे ॥ ५६ ॥
पश्चिमे विष्णुमूर्तिं वा लिङ्गोद्भवमथापि वा।
धाताममुत्तरे विम भारस्थाने तु वर्जयेत् ॥ ५७ ॥
मण्डपे दक्षिणे भद्रे स्थापयेद्द्वि(द्वि)विधा(ना)यकम्।
पूर्वे वा पश्चिमे तस्य नृत्तमूर्तिं प्रकल्पयेत् ॥ ५८ ॥
दुर्गामुत्तरतिग्भागे क्षेत्रपालं तु वा द्विज।
स्थानं वा सदनं वाऽथ दिशि मूर्तिं प्रकल्पयेत् ॥ ५९ ॥
एवं धरातलोर्ध्वे तु ... .... ... ।
स्कन्दं वै पूर्वदिग्भागे ब्रह्म वा सितरोदि सु ॥ ६० ॥
हस्तितिर्वीन्द्रजरासीन एक एव समन्वितम्।
दक्षिणे दक्षिणामूर्तिं वीरभद्रमथापि वा ॥ ६१ ॥
पश्चिमे नारसिंहं ॥ सौम्यमूर्तिमथापि वा।
उत्तरे तु विधातारं(रं)अब्जं वा द्विजसत्तम ॥ ६२ ॥
प्रस्तरोपरि पार्श्वयोरेकाद्विमिवद्धे तथा।
चतुर्भूत्यादिभूमासु महेशस्तु यथेष्टतः ॥ ६३ ॥
उमास्कन्दादिसहितो महेशः परिकीर्तितः।
अन्यदेवाश्च गन्धर्वाः सिद्धा दैत्या मरुद्गणाः ॥ ६४ ॥

कल्पान्तयुगभूम्यादिग्रीवे च मस्तरान्तके ।
दृष्टमूर्तिमरि(रि)ष्टांशे कल्पयेत्कल्पवित्तमः ॥ ६५ ॥
गळस्यादिस्थमञ्चोर्ध्वे कोणेषु वृषभं कुरु ।
कोणं प्रति द्वयं वैकं वृषभं शयनं कुरु ॥ ६६ ॥
मूर्तं वानचतुष्कोणे हृदयाञ्जलिसंयुतम् ।
कल्पयेत्प्रथपीठे द्वे आसीनं तु बृहत्तनुम् ॥ ६७ ॥
आमोदं चाग्निकोणे तु प्रमोदं नैर्ऋते भवेत् ।
प्रमुखं वायुकोणे तु दुर्मुखीशानकोणके ॥ ६८ ॥
श्वेतं रक्तं तथा पीतं कृष्णमग्न्यादिषु क्रमात् ।
यमो वै देवता ज्ञेया(ता)तासामावाहनं कुरु ॥ ६९ ॥
कराळमुद्गरगुल्मासु करकपि कणलेपनम् ।
नानालंकारसंयुक्तं नानालीलासमायुतम् ॥ ७० ॥
नानाक्रीडसमायुक्तं सुधया धातुभिस्तथा ।
यथोचितं कल्पयेत्तु शूलाद्याविष्टका भवेत् ॥ ७१ ॥
एवं तल्लमिदं ख्यातं द्वितलं तु ततो विदुः ॥ ७२ ॥

इति काश्यपशिल्पे एकतलविमानलक्षणं सप्तविंशः पटलः ।

---

अथाष्टाविंशः पटलः ।

---

द्वितलम् ।

---

अथ वक्ष्ये विशेषेण द्वितलस्य तु लक्षणम् ।
प्रासादमानवत्कुर्याद्विस्तारोच्चं च निर्गमः ॥ १ ॥
विन्यासमूत्रयोरन्तर्व्यासं सप्ततु त्रा भवेत् ।
एकांशं कूटविस्तारं कोष्ठं तु द्विगुणायतम् ॥ २ ॥
कूटव्याससमं कोष्ठं विस्तारं द्विजसत्तम ।
शेषं हारान्तरं कोष्ठं पार्श्वयोस्तु सपञ्जरम् ॥ ३ ॥
हारान्तरमशेषं वा त्रिपादं वार्धं मत्र वा ।
पञ्जरव्यासमायामं कूटशालसमोन्नतम् ॥ ४ ॥

अन्तःप्रवेशं वा मानसूत्राणि प्रयुतं तु वा ।
पञ्जरं कर्णकूटाभं नासिकाकारमेव वा ॥ ५ ॥
प्रासादोच्चं तु विभजेदष्टाविंशतिभागया ।
गुणांशं(त्र्यंशं)धरातलोत्सेधं रसांशं चरणोदयम् ॥ ६ ॥
प्रस्तरोच्चं गुणांशं स्याद्भूतांशं चरणोदयम् ।
द्विभागं प्रस्तरोत्सेधमेकांशं वेदिकोदयम् ॥ ७ ॥
द्विभागांशं गलोत्सेधं सार्धवेदं शिरोदयम् ।
अध्यर्धांशं शिखामानं कल्पितं शाक्ति(न्ति)कं भवेत् ॥ ८ ॥
चतुस्त्रिंशतिभागं तु कृत्वा च सदनोदयम् ।
सार्धार्धांशमधिष्ठानं तद्द्विघं चरणोदयम् ॥ ९ ॥
प्रस्तरोच्चं गुणांशं स्याच्चालिपं सार्धषड् भवेत् ।
गुणांशं मञ्चमानं तु व्योमांशं वेदिकोदयम् ॥ १० ॥
सार्धाग्न्यंशं गलोत्सेधं भूतांशं शिखरोदयम् ।
अर्धांशं शिखरमानं पौष्टिकं सदनं भवेत् ॥ ११ ॥
तदेव गलमानं तु सार्धद्व्यंशेन कल्पयेत् ।
शेषं पूर्ववदेवं तु मपास्त्रिंशोदये कृते ॥ १२ ॥
जयदं सदनं ह्येतत्सर्वदेवमिवाषदम् ।
षड्विंशाद्विभजेत्य(त्सा)र्धे भव्यं तु गम्य(षट्तुङ्गं ध)रातलम् ॥ १३ ॥
सप्तांशपादमानं तु सार्धाग्न्यंशं तु प्रस्तरम् ।
सप्तांशं चरणोच्चं तु गुणांशं च गलोदयम् ॥ १४ ॥
भूतांशं शिखरोच्चं तु स्थू(स्तू)प्युच्चं सार्धभागया ।
अर्धभूतं सदनं ह्येतत्स्वल्पगेहस्वल्पविग्रहः ॥ १५ ॥
चत्वारिंशतिभागं तु कर्तव्यं सदनोदयम् ।
अधिष्ठानोच्चवेदांशं स्तम्भं तद्द्विगुणायतम् ॥ १६ ॥
गुणांशं मञ्चमानं च स्तम्भलिप्सार्धसप्तकम् ।
त्रिभागं प्रस्तरोत्सेधं द्विभागं वेदिकोदयम् १७ ॥
त्रिभाग ग्रीवमानं तु शिखरं सप्तभागया ।
शेषं शिरोदयं स्यात्तं त्रिपादं सर्वदा शिखा ॥ १८ ॥
होमाद्विभूतिपर्यन्तं शुभार्थं परिकल्पयेत् ।
चतुष्कूटं चतुःशालं पञ्जराष्टकसंयुतम् ॥ १९ ॥

षडष्टाल्पनासि च पादं प्रति प्रकल्पयेत् ।
कल्पितं वेदिकाद्यैस्तु नानाचित्रैर्विचित्रितम् ॥ २० ॥
एतत्स्वस्तिकमाख्यातं सर्वदेवप्रियावहम् ।
तदेव शीर्षकाग्रेषु पार्श्वयोः स्वल्पनासिका ॥ २१ ॥
स्वस्तिभद्रमिति ख्यातं मम प्रीतिकरं भवेत् ।
तदेव नतकूटं च कोष्ठं नासिकमष्टचक्रम् ॥ २२ ॥
नतपञ्जरसंयुक्तं यथेष्टं क्रमशीर्षतः ।
स्तूपिघटं गलतं च श्रीकरं समुदाहृतम् ॥ २३ ॥
तदेव कूटकोष्ठाः स्युः कूटशालोन्नताः समाः ।
निम्नपञ्जरवन्तो सौ यत्तत्कैलासमुच्यते ॥ २४ ॥
तदेव कूटकोष्ठौ द्वौ निम्नोन्नतविवर्जितौ ।
अन्तरप्रस्तरोपेतौ समसूत्रगतौ नतौ ॥ २५ ॥
हारान्तरे विशेषेण युगं वा युगपञ्जरम् ।
चतुष्कूटं चतुःशालं षडष्टाल्पनासिका ॥ २६ ॥
चरवर्गं वेदिकोपेतं वर्तुलं शीर्षकं गलम् ।
शिखरं वसुनासाढ्यं भद्राभद्रं चतुश्चतुः ॥ २७ ॥
वेदिकातोरणाढ्यं तु रुद्रकान्तमिदं परम् ।
कूटात्कोष्ठकनिष्क्रान्तं दण्डं वाऽर्धदण्डकम् ॥ २८ ॥
द्विदण्डं वा त्रिदण्डं वा कूटात्कोष्ठस्य निर्गतिः ।
नानाधिष्ठानसंयुक्तं नानास्तम्भाविमानितम् ॥ २९ ॥
प्रागुक्तानां तु सर्वेषां कल्पितं वाऽपि हीनरूपम्
तदेव शिखरे चार्धकोष्ठकं तु चतुष्टयम् ॥ ३० ॥
चतुरश्रं शिरोपेतं चतुष्कूटसमन्वितम् ।
षडष्टनासिकोपेतं स्वस्तिबं(ब)न्धमिति स्मृतम् ॥ ३१ ॥
तदेव कूटकोष्ठौ द्वौ चान्तरप्रस्तरान्वितौ ।
हारपञ्जरसंयुक्तं षण्मु(ड)ष्टौ वाऽल्पनासिकम् ॥ ३२ ॥
सर्वालंकारसंयुक्तमेतत्कल्याणसुन्दरम् ।
तदेव शिखरे चाघ्य(र्ध)कोष्ठकं तु विवर्जयेत् ॥ ३३ ॥
चत्वारिनासिकोपेतं शिखरं परिकल्पयेत् ।
नानालंकारसंयुक्तमेतत्प्राग्रान्सुरुपने ॥ ३४ ॥

अन्तःप्रवेशं वा मानसूत्राणि प्रयुतं तु वा ।
पञ्जरं कर्णकूटाभं नासिकाकारमेव वा ॥ ५ ॥
प्रासादोच्चं तु विभजेदष्टाविंशतिभागया ।
गुणांशं(त्र्यंशं)धरातलोत्सेधं रसांशं चरणोदयम् ॥ ६ ॥
प्रस्तरोच्चं गुणांशं स्याद्भूतांशं चरणोदयम् ।
द्विभागं प्रस्तरोत्सेधमेकांशं वेदिकोदयम् ॥ ७ ॥
द्विभागांशं गलोत्सेधं सार्धवेदं शिरोदयम् ।
अत्यर्धांशं शिखामानं कल्पितं शान्ति(न्ति)कं भवेत् ॥ ८ ॥
चतुर्विंशतिभागं तु कृत्वा च सदनोदयम् ।
सार्धार्धांशमधिष्ठानं तद्द्विघं चरणोदयम् ॥ ९ ॥
प्रस्तरोच्चं गुणांशं स्यात्तत्त्रिपं सार्धपद् भवेत् ।
गुणांशं मञ्चमानं तु व्योमांशं वेदिकोदयम् ॥ १० ॥
सार्धाग्न्यंशं गलोत्सेधं भूतांशं शिखरोदयम् ।
अर्धांशं शिखरमानं पौष्टिकं सदनं भवेत् ॥ ११ ॥
तदेव गलमानं तु सार्धद्व्यंशेन कल्पयेत् ।
शेषं पूर्ववदेवं तु प्रयाविंशोदये कृते ॥ १२ ॥
जयदं सदनं ह्येतत्सर्वदेवप्रियावहम् ।
षड्विंशद्विभजेत्य(त्सा)ग्रं धरवं तु गन्ध(षड्गुणं च)रातलम्॥१३॥
धर्मांशपादमानं तु सार्धाग्न्यंशं तु प्रस्तरम् ।
मञ्चांशं चरणोच्चं तु गुणांशं च गलोदयम् ॥ १४ ॥
भूतांशं शिखरोच्चं तु स्थू(स्तू)प्युच्चं सार्धभागया ।
अद्भुतं सदनं ह्येतत्फलदं कल्पवित्तमः ॥ १५ ॥
चत्वारिंशद्विभागे तु चरणं च सदनोदयम् ।
अधिष्ठानोच्चवेदांशं स्तम्भं तद्द्विगुणायतम् ॥ १६ ॥
गुणांशं मञ्चमानं च स्तम्भस्त्रिमार्धेनातदम् ।
त्रिभागं प्रस्तरोत्सेधं द्विभागं वेदिकोदयम् १७ ॥
त्रिभागं ग्रीवमानं तु शिखरं सप्तभागया ।
शेषं शिखोदयं स्थानं विमानं सर्वदा शिवा ॥ १८ ॥
होमाद्यन्तु चतुष्कं गुणार्धं परिकल्पयेत् ।
चतुरश्रं चतुःस्तम्भं पञ्चाशद्भागपूरणम् ॥ १९ ॥

षट्कूटाल्पनासिं च पादं प्रति प्रकल्पयेत् ।
कल्पितं वेदिकाद्यैस्तु नानाचित्रैर्विचित्रितम् ॥ २० ॥
एतत्स्वस्तिकमाख्यातं सर्वदेवप्रियावहम् ।
तदेव शीर्षकाग्रेषु पार्श्वयोः स्वल्पनासिका ॥ २१ ॥
स्वस्तिभद्रमिति ख्यातं मम प्रीतिकरं भवेत् ।
तदेव मतकूटं च कोष्ठं नासिकमध्यकम् ॥ २२ ॥
नतपञ्जरसंयुक्तं यथेष्टं क्रमशोर्पितः ।
स्तूपियुटं गलतं च शीकरं समुदाहृतम् ॥ २३ ॥
तदेव कूटकोष्ठाः स्युः कूटशालोन्नताः समाः ।
निम्नपञ्जरवन्तो सा यत्तत्कैलासमुच्यते ॥ २४ ॥
तदेव कूटकोष्ठौ द्वौ निम्नोन्नतविवर्जितौ ।
अन्तरमस्तरोपेतौ समसूत्रगतौ नतौ ॥ २५ ॥
हारान्तरे विशेषेण युगं वा युगपञ्जरम् ।
चतुष्कूटं चतुःशालं षट्कूटाल्पनासिका ॥ २६ ॥
चतुरश्रं वेदिकोपेतं वर्तुलं शीर्षकं गलम् ।
शिखरं वसुनासाढ्यं भद्राभद्रं चतुश्चतुः ॥ २७ ॥
वेदिकातोरणाढ्यं तु रुद्रकान्तमिदं परम् ।
कूटारकोष्ठकनिष्ठान्तं दण्डं वाऽध्यर्धदण्डकम् ॥ २८ ॥
द्विदण्डं वा त्रिदण्डं वा कूटारकोष्ठस्य निर्गतिः ।
मानाधिष्ठानसंयुक्तं नानास्तम्भविमानितम् ॥ २९ ॥
प्रागुक्तानां तु सर्वेषां कल्पितं वाऽपि हीनकम् ।
तदेव शिखरे चार्धकोष्ठकं तु चतुष्टयम् ॥ ३० ॥
चतुरश्रं शिरोपेतं चतुष्कूटसमन्वितम् ।
षडष्टनासिकोपेतं स्वस्तिसं(ब)न्धमिति स्मृतम् ॥ ३१ ॥
तदेव कूटकोष्ठौ द्वौ चान्तरमस्तरान्वितौ ।
हारपञ्जरसंयुक्तं षण्मु(ड)ष्टौ वाऽल्पनासिकम् ॥ ३२ ॥
सर्वालंकारसंयुक्तमेतत्कल्याणसुन्दरम् ।
तदेव शिखरे चाध्य(र्ध)कोष्ठकं तु विवर्जयेत् ॥ ३३ ॥
चत्वारिनासिकोपेतं शिखरं परिकल्पयेत् ।
नानालंकारसंयुक्तमेतत्पाञ्चाल्यमुच्यते ॥ ३४ ॥

तदेवाष्टाश्रमेदीयकंधरं शिखरं घनम् ।
शिरोर्ध्वं [ च ] महानासियुक्तं तद्विष्णुकान्तकम् ॥ ३५ ॥
सान्तरं प्रस्तरोपेतं कूटकोष्ठौ चतुश्चतुः ।
लम्बपञ्जरसंयुक्तं वृत्तशीर्षककंधरम् ॥ ३६ ॥
दण्डं वाऽप्यर्धदण्डं वा द्विदण्डं वा त्रिदण्डकम् ।
कर्णकूटं तु कोष्ठानि निष्क्रान्तं परिकल्पयेत् ॥ ३७ ॥
षड्नासिकोपेतं चत्वारि शिखरे वर ।
एतद्विश्वकरान्यरूपादीश्वरस्य प्रियावहम् ॥ ३८ ॥
तदेव त्रिचतुर्भागे भागाधिक्यं यथाक्रमम् ।
तथाऽशीर्षमकण्ठं चावेदिकं तत्प्रकल्पयेत् ॥ ३९ ॥
स्तूपित्रयसमायुक्तमेतन्मङ्गलमुच्यते ।
तदेवायतवृत्ताभं गान्धारमिति विद्यते ॥ ४० ॥
तारादर्धाधिकादूर्ध्वमायताश्रं समाश्रं वा ।
द्व्यश्रवृत्तमुपानादिकल्पितं वा तदेव हि ॥ ४१ ॥
समाश्रमायताश्रं वा बाह्यतः परिकल्पयेत् ।
वृत्तगर्भगृहोपेतं कूटकोष्ठ(क)संयुतम् ॥ ४२ ॥
वृत्ताभं कर्णकूटानां शीर्षं स्यात्परिकल्पयेत् ।
कूटकोष्ठाल्पनीडाश्च समसूत्रेण कल्पयेत् ॥ ४३ ॥
नाम्ना मनोहरं रम्यं सर्व(र्वे)देवार्हकं परम् ।
उपानादिस्तूपिपर्यन्तं वृत्तं चेत्तु बहिर्बहिः ॥ ४४ ॥
शेषं प्रागिव कर्तव्यं शिवकान्तमिदं परम् ।
चतुरश्रमधिष्ठानं गर्भगेहं तथैव च ।
अधिष्ठानोपरिष्टात्तु स्तूप्यन्तं वर्तुलाकृति ।
कूटकोष्ठादिसर्वाङ्गयुक्तं गर्भगृहं भवेत् ॥
चतुरश्रमधिष्ठानमायताश्रमथापि वा ॥ ४५ ॥
समाश्रं शिखरं कण्ठं कूटकोष्ठादिसंयुतम् ।
यथोचितं तु संकल्प्य नाम्ना कुबेरकान्तकम् ॥ ४६ ॥
एवं तु द्विमलो(लं)योगं भेदमष्टदश स्मृतम् ।
इष्टकाभिः शिलाभिर्वा हेमादिस्तूपिकान्तकम् ॥ ४७ ॥

कल्पितं सञ्चितं हर्म्यं पुमानिव घनीकृतम्।
दृष्टेष्टकाभि(दृषाङ्किरिष्टकाभिः) संमिश्रहर्म्यं तदेव हि ॥ ४८ ॥
श्रे(ते)ष्वादौ दि षक्(द१)ल्कार्यं तदूर्ध्वेष्विष्टका क्रिया।
इष्टकादारुहिं(सं)मिश्रं षण्डमेतदुदाहृतम् ॥ ४९ ॥
तदेवोपचितं ख्यातं घनाघनमुदाहृतम्।
अशेषतरुभिः कार्यं संचितं स्त्रीति विद्यते ॥ ५० ॥
अघनं चेति तत्कार्यं एवं पुंषण्डयोषिताम्।
बेकनमण्टपमानं च गर्भगृहविशालकम् ॥ ५१ ॥
भित्तिव्यासं चतुः सर्वे (शालं)सम्यदेव तलोक्तवत्।
द्वारस्योभयपार्श्वे तु पादयोरन्तरे द्विज ॥ ५२ ॥
द्वारपालगुहां कुर्यात्तलादुत्तरसिंहकम्।
बिम्बोदितं द्विशालं च दण्डपार्श्वे तु वेशनम् ॥ ५३ ॥
सर्वधामनि कर्तव्यं तवेश(प्रवेश)रहितं तु वा।
एवं द्वितलमाख्यातं त्रितलं तु ततो विदुः ॥ ५४ ॥
इति काश्यपशिल्पे द्वितलविधानोनामाष्टाविंशः पटलः।

---

अथ नवविंशः पटलः।

---

त्रितलम्।

---

अथ वक्ष्ये विशेषेण त्रितलं शृणु सुव्रत।
तस्य विस्तारमानं च पुरोक्तं हर्म्यमानकम् ॥ १ ॥
विन्याससूत्रयोरन्तरष्टाविंशे तु भाजिते।
एकांशं कूटविस्तारं शालायामं च तद्द्वयम् ॥ २ ॥
अंशं त्रिपादमर्धं वा पञ्ज(ञ्ज)रव्याद(रव्यास) मुच्यते।
शेषं हारान्तरख्यानं निष्क्रान्त्यादीनि पूर्ववत् ॥ ३ ॥
ऊर्ध्वभूमिरसं शेषं कूटव्यासमुदाहृतम्।
शालायामद्विभागं तु शेषं हारान्तरं भवेत् ॥ ४ ॥

हारान्तरं तु संपाद्यं त्रिपादं वाऽथ पञ्जरम् ।
ऊर्ध्वभूमित्रिभागैकं मध्यभद्रं विधीयते ॥ ५ ॥
दण्डं सार्धद्विदण्डं वा मध्यभद्रस्य नीव्रकम् ।
प्रासादस्योच्छ्रयं भानुद्विगुणांशं विभाजिते ॥ ६ ॥
द्विभागं भूतलोत्सेधं वेदांशं चरणोदयम् ।
मञ्चमानद्विभागेन पादोनं चतुरंशकैः ॥ ७ ॥
पादायां(नां)बलिसाऽर्धांशं प्रस्तरोच्चमुदाहृतम् ।
पादोच्चं सार्धवह्न्यंशं सपादांशं तु मञ्चकम् ॥ ८ ॥
अर्धांशं वेदिकामानं गलमानं शिवांशकम् ।
सार्धार्यंशं तु शिखरं स्तूप्युच्चं त्वेकभागया ॥ ९ ॥
एवं हि कल्पितं गेहं शान्तिकक्षि(कं त्वि)ति विद्यते ।
चतुर्विंशति चायामे तलोच्चं तु द्विभागया ॥ १० ॥
वेदांशं चरणायामं पक्षांशं मञ्चमानकम् ।
पादोनचतुरंशं तु पादायाममितीष्यते ॥ ११ ॥
सार्धांशं प्रस्तरोत्सेधं साऽर्धं क्षुद्रं भवेत् ।
अर्धार्धांशं तु मञ्चोच्चमध्यांशं वेदिकोदयम् ॥ १२ ॥
शिरोंशं ग्रीवमानं तु गुणांशं शिखरोदयम् ।
सपादांशं शिखामानं पीठिकं तदुदाहृतम् ॥ १३ ॥
सप्तविंशतिभागं तु कृत्वा च सदनोदयम् ।
द्विभागं धरातलोत्सेधं गुणांशं चरणोदयम् ॥ १४ ॥
मञ्चमानं द्विभागेन वेदांशं चरणायतम् ।
पादोनद्व्यंशमञ्चोर्ध्वं तलिपोच्चं तु तद्द्वयम् ॥ १५ ॥
सार्धांशं प्रस्तरोत्सेधमेकांशं वेदिकोदयम् ।
द्विभागं ग्रीवमानं तु वेदभागं तु शीर्षकम् ॥ १६ ॥
शेषं स्तूप्युदयं स्यात्सं जयदं तदुदाहृतम् ।
चत्वारिंशद्द्वयाधिक्यं भागं कृत्वा गृहोन्नतम् ॥ १७ ॥
अधिष्ठानत्रिभा[गं]र्धं सप्तांशं चरणोदयम् ।
तलोच्चसदृशं मञ्चं तलिपं सार्धपद्रकम् ॥ १८ ॥
गुणांशं प्रस्तरोत्सेधं भूभागं च पदंशकम् ।
सार्धद्व्यंशं तु मञ्चोच्चमेकांशं वेदिकोदयम् ॥ १९ ॥

गलमानं द्विभागं स्याद् भूतांशं शिखरोदयम् ।
द्विभागं स्तूपितुङ्गं तु मोक्तमुक्तुहर्म्यकम् ॥ २० ॥
प्रासादस्य तु तुङ्गेन पञ्चाष्टांशविभाजिते ।
अधिष्ठानयुगांशं तु वस्वंशं चरणायतम् ॥ २१ ॥
मञ्चमानं तु वेदांशं तली(लि)पं सार्धसप्तकम् ।
सार्धत्रिभागमञ्चोर्ध्वे स्वरांशं चरणायतम् ॥ २२ ॥
मस्तरोर्ध्वं गुणांशं तु शिवांशं वेदिकोदयम् ।
द्विभागं गलमाने तु रसांशं शिखरोदयम् ॥ २३ ॥
द्विभागं तु शिखामानमेवं स्यात्सर्वदेशिकम् ।
अष्टकूटाष्टशालाभिः कलापञ्जरसंयुतम् ॥ २४ ॥
तूर्णवस्वल्पनासाढ्यं जन्मादाग्रं युगांशकम् ।
नानाधिष्ठानसंस्तम्भं नानापादैरलंकृतम् ॥ २५ ॥
शिखरे भानुनासाढ्यं महाक्षं चतुरष्टकम् ।
कूटकोष्ठोक्तादीनि गारादायुषितं भवेत् ॥ २६ ॥
स्वस्तिकं भवनं ख्यातं तदेव शिखरे द्विज ।
चतुर्ष्व(मे)हानासिकोपेत(ना)सिकाद्यमल्पाष्टकविवर्जितम् ॥ २७ ॥
स्वस्तिभद्रमिदं ख्यातं सर्वदेवप्रियावहम् ।
तदेव वृत्तशिखरं गलं वै वेदिका तथा ॥ २८ ॥
रुद्रकान्तमितिनो(र्न ना)म्ना मम प्रीतिकरं परम् ।
तदेव शीर्षकोणेषु अल्पनासीद्वयाष्टकम् ॥ २९ ॥
कल्पितं शिवकान्तं स्याच्छिवप्रीतिकरं गृहम् ।
तदेव वेदिका कण्ठं शीर्षकं च घटं तथा ॥ ३० ॥
वस्वग्रं (श्रं)कल्पितं यत्तद्विष्णुकान्तमिदं परम् ।
विन्यासपुत्रयोरन्तं नवभागविभाजिते ॥ ३१ ॥
एकांशं कूटविस्तारं द्विभागं कोष्ठदीर्घकम् ।
कोष्ठं प्रति द्विकोष्ठं स्यादर्धांशं पञ्जरं ततः ॥ ३२ ॥
घोपहारान्तरं ख्यातं कल्पयेत्कल्पवित्तमः ।
चतुष्कूटाष्टशालांशं भानुपञ्जरसंयुतम् ॥ ३३ ॥
तं चा(तथा)ल्पनासिकोपेतं वस्वग्रं शीर्षकं गलम् ।
महानास्यष्टकोपेतं शिखरं तद्द्विजोत्तम ॥ ३४ ॥

नाम्ना शुद्धविमानं तु धर्मप्रीतिकरं भवेत् ।
तदेवाष्टाश्रवेदी तु वि(वृ)त्ताभं शिखरं गलम् ॥ ३५ ॥
विमानाकृतिनाम्नात्तं सर्वदेवार्हकं भवेत् ।
तदेव शिखरं कण्ठं युगाश्रं ब्रह्मकान्तकम् ॥ ३६ ॥
तदेव सायताश्रं तु सपादं सत्रिभागिकम् ।
वसुभागं तु विस्तारमायामं दशधा भजेत् ॥ ३७ ॥
एकांशं कूटविस्तारं शालाया द्विगुणायतम् ।
शेषं हारान्तरं ख्यातं प्रागिवैव प्रकल्पयेत् ॥ ६८ ॥
षडष्टभागविस्तारमायामं चोर्ध्वभूमिके ।
एकांशं कूटविस्तारं कोष्ठदीर्घं त्रियंशकम् ॥ ३९ ॥
अर्धांशं पञ्जरं व्यासं शेषं हारान्तरं भवेत् ।
ऊर्ध्वभूमीविस्तृतं च मी(वामि)भागैकं ध्य(शैःकण्ठ)मष्टकम् ॥४०॥
हर्म्यवृत्तं च वेदी च कण्ठ(ण्ठं)वै शीर्षकं तथा ।
चतुष्कूटाष्टशाला(लं) च भानुपञ्जरसंयुतम् ॥ ४१ ॥
हारान्तरं चतुर्विंशत्कल्पयेदादिभूतले ।
चतुष्कूटं चतुःशालं पञ्जराष्टकसंयुतम् ॥ ४२ ॥
षोडशान्तरसंयुक्तं शतसंख्याल्पनासिका(कम्) ।
ललाटं नासिकायुक्तं पार्श्वयोर्भद्रनासिका ॥ ४३ ॥
तथैव नासिका पृष्ठे पृष्ठे शिखोपपादयेत् ।
नानाधिष्ठानसंयुक्तं नानापादाङ्घ्रिसमायुतम् ॥ ४४ ॥
सर्वालंकारसंयुक्तं हस्तिपृष्ठमिदं भवेत् ।
मानसूत्रान्तरं व्यासं नवभागविभाजिते ॥ ४५ ॥
गुणांशं गर्भगेहं तु शिवांशं कुड्यविस्तृतम् ।
परितोऽलीन्द्र(लिन्द्र)मेकांशं हारं व्यासं त्रियंशकम् ॥ ४६ ॥
एवं हि कल्पयेते(येत्)तु कण्ठकूटं शिवांशकम् ।
मध्ये कोष्ठं गुणांशं स्यादेकांशः पञ्जरस्तथा ॥ ४७ ॥
हारान्तरं तदर्धांशं कल्पयेवं प्रथमे भुवि ।
अथवा पञ्जराणां तु अर्धांशं वा विधीयते ॥ ४८ ॥
शेषं हारान्तरं स्यात्तं परितस्त्वेवमाचरेत् ।
कोष्ठमध्ये त्रिदण्डेन महानासिविनिर्गतम् ॥ ४९ ॥

ऊर्ध्वभूमौ षडंशेषं (पु) कूटकोष्ठायतद्वयम् ।
अर्धांशं पञ्जरन्यासं शेषं हारान्तरं भवेत् ॥ ५० ॥
ऊर्ध्वभूमीविस्तृतार्धेतु अ(र्ध त्व)र्धदण्डेन निस्थितः(र्गतम्) ।
चतुरश्रमधिष्ठानं वस्त्रश्रं शीर्षकं गलम् ॥ ५१ ॥
आदौ तले चतुष्कर्णे कूटो वेदाश्रशीर्षकः ।
अष्टाश्रं शीर्षकं कूटस्योर्ध्वभूमौ प्रकल्पयेत् ॥ ५२ ॥
अष्टकूटाष्टकोष्ठं च कल्पापञ्जरसंयुतम् ।
शताल्पनासिकोपेतं शिखरेन्द्रं महान्तरम् ॥ ५३ ॥
भद्रकोष्ठमिदं नाम्ना सर्वदेवार्हकं परम् ।
तदेव कर्णकूटानां शीर्षकं वर्तुलाकृति ॥ ५४ ॥
प्रासादशीर्षकं कण्ठं वृत्ताकारं प्रकल्पयेत् ।
शिखरे तु चतुर्दिक्षु भद्रनासीसमन्वितम् ॥ ५५ ॥
तथा द्विस्वल्पनासाढ्यं वृत्तकूटमिदं परम् ।
तदेव शिखरे कोणे क्षुद्रनासाष्टकान्वितम् ॥ ५६ ॥
युगाश्रं कर्णकूटानां शीर्षकं परिकल्पयेत् ।
शेषं प्रागिव कर्तव्यं श्रीकण्ठं तदुदाहृतम् ॥ ५७ ॥
तदेवाष्टांशमाधिक्यमायामं चतुरश्रकम् ।
शालामध्ये महानासि भद्रं हीनं प्रकल्पयेत् ॥ ५८ ॥
शालाभं मस्तकं कण्ठं वृत्तायतमथापि वा ।
स्थू(स्तु)पित्रयसमायुक्तमेतन्नाम्ना सुमङ्गलम् ॥ ५९ ॥
मानसूत्रान्तरं घर्म भागं कृत्वा द्विजोत्तम ।
गर्भगेहं तु वेदांशं गृहं पिण्डपंशपावृतम् ॥ ६० ॥
परितोऽलिन्द्र(लिन्द)मेकांशं हारभागेन कल्पयेत् ।
तदेकं कूटविस्तारं मध्ये तोष्ठप(कोष्ठाय)तद्वयम् ॥ ६१ ॥
तयोर्मध्यैकभागेन पञ्जरन्यासमुच्यते ।
हारान्तरं तथांऽशेन पञ्जरस्य तु पार्श्वयोः ॥ ६२ ॥
अष्टांशं चोर्ध्वभूमिं तु कृत्वांऽशं कूटविस्तृतम् ।
शालाया द्विगुणायामं तयोर्मध्ये तु पञ्जरम् ॥ ६३ ॥
एकांशेनैव कर्तव्यं शेषं हारान्तरं भवेत् ।
ऊर्ध्वभूमि चतुर्भागं द्विभागं मध्यभद्रकम् ॥ ६४ ॥

दण्डं वा द्विदण्डं वा त्रिदण्डं वाऽथ निर्गतिः ।
वेदाश्रं तदधिष्ठानं तद्वत्कण्ठं च शीर्षकम् ॥ ६५ ॥
अष्टशालाष्टकूटं च पञ्जरं षोडशान्वितम् ।
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम् ॥ ६६ ॥
उन्नतौ कूटकोष्ठौ च भान्तरमष्टकान्वितौ ।
गान्धारमिति विख्यातमष्टाश्रं वा मलं शिरः ॥ ६७ ॥
श्रीविशालमिति ख्यातं चतुर्ला वेदिका गलम् ।
शीर्षं चैव च कर्तव्यं शेषं पूर्ववदाचरेत् ॥ ६८ ॥
श्रीभागादयमिति ख्यातं सर्वदेवार्हकं परम् ।
वृत्ते वृत्तायते द्व्यश्रवृत्ते चैव षडश्रके ॥ ६९ ॥
कूटकोष्ठादिसर्वाङ्गं प्रागिवैव प्रकल्पयेत् ।
सर्वेदत(तारत्न)लं मण्डलं च स्यजेत्कर्णे च शीर्षकम् ॥ ७० ॥
पक्षःस्थलविहीनानां क(नाम)कर्णे शीर्षसंयुतम् ।
कूटकोष्ठादिसर्वाङ्गयुक्तं नागरादिकम् ॥ ७१ ॥
नानालंकारसंयुक्तं नानाचित्रैर्विचित्रितम् ।
गर्भगेहं विशालं च गूढं पिण्ड्यग्रमण्डपम् ॥ ७२ ॥
एकभूमिविधानोक्तमनुक्तानां विशेषतः ।
त्रितलं शेषमाख्यातं चतुर्भूममथोच्यते ॥ ७३ ॥

इति काश्यपशिल्पे त्रितलविधानं नामैकोनत्रिंशः पटलः ।

---

अथ त्रिंशः पटलः ।

---

चतुर्भूमिः ।

---

अथ वक्ष्ये विशेषेण चतुर्भूम्यादिलक्षणम् ।
विस्तारोत्सेधमानं तु प्रोक्तं प्रासादमानके ॥ १ ॥
स्वयंप्रमानसूत्रं वा कृते गर्भगृहांशकम् ।
गृहपिण्डपरिन्द्राहारं प्रत्येकं चैकभागतः ॥ २ ॥

निम्यासमूलयोरन्तर्वर्तसुशामभजेदह(द)म् ।
कर्णकूटसतांशं तु कोष्ठं तद्द्विगुणायतम् ॥ ३ ॥
पञ्च(ञ्ज)रव्यासमंशेन शेषं सा(हा)रान्तरं भवेत् ।
पुनरप्यूर्ध्वभूमिं च वसुभागविभाजिते ॥ ४ ॥
कर्णकूटं च कोष्ठं च पञ्जरं पूर्ववद्भवेत् ।
तदूर्ध्वभूमौ षड्भागे शिवांशं कूटविस्तृतम् ॥ ५ ॥
कोष्ठायामश्वरी(चरा)यागमर्धांशं पञ्जरस्य तु ।
शेषं हारान्तरं प्रोक्तं हीनाधीकां(क्यं) तु नाऽऽश्रयेत् ॥ ६ ॥
सर्वभूमानि(मिषि)भागेन क्षोभां(त्रा)मर्धमभद्रकम् ।
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं वाऽस्य निर्गमम् ॥ ७ ॥
मासादोच्चं तु विभजेत्संप्रस्त्रिंशदंशकम् ।
सार्धाष्टांशमधिष्ठानं भूतांशं चरणोदयम् ॥ ८ ॥
अधिष्ठानसमं मञ्चं पादं पादोनप(म)ञ्चकम् ।
धा(प)दांशं कर्ममञ्चोच्चं कल्पयेद्द्विजसत्तम ॥ ९ ॥
सार्धं वेदांशमपरं पक्षांशं मस्तरोदयम् ।
सपादवेदभागं च चरणोदयमिष्यते ॥ १० ॥
पादोनसांशमञ्चोच्चं शिवांशं वेदिकोदयम् ।
कण्ठोत्सेधं तु द्विभागं स्यात्सार्धं वेदांशशीर्षकम् ॥ ११ ॥
स्तूप्युच्चं तु द्विभागं स्याच्छान्तिकं भवनं भवेत् ।
चत्वारिंशद्द्वयाधिका(क्यं) भागं कृत्वा गृहोन्नतम् ॥ १२ ॥
गुणांशं तलमानं तु रसांशं चरणोदयम् ।
मस्तरं त्वग्निभागेन भूतांशं तलिपोदयम् ॥ १३ ॥
गुणांशं मस्तरोत्सेधं पादं पादार्धपञ्चकम् ।
पादद्विभागमञ्चोच्चं सार्धवेदाङ्घ्रिणोदयम् ॥ १४ ॥
द्विभागं मञ्चमानं तु शिवांशं वेदिकोदयम् ।
अत्यर्धांशं गलोत्सेधं गुणांशं शिखरोदयम् ॥ १५ ॥
द्विभागं तु शिखामानं पौष्टिकं तदुदाहृतम् ।
पञ्चांशं द्वि(वि)भजेद्धर्म्यं तुङ्गं स्तूप्यवसानकम् ॥ १६ ॥
सार्धाग्न्यंशमधिष्ठानं सर्वांशं चरणोदयम् ।
गुणार्धं मस्तरोत्सेधं रसांशं पाददैर्घ्यकम् ॥ १७ ॥

गुणांशं मञ्चमानं तु ऊर्ध्वपादं तु तद्द्वयम्।
त्रिभागं मस्तरोत्सेधं पादोच्चं सार्धपञ्चकम् ॥ १८ ॥
प्रस्तरोच्चं त्रिभागैकं शिरांशं वेदिकोदयम्।
द्विभागं गलमानं तु भूतांशं शिखरोदयम् ॥ १९ ॥
सार्धांशं स्तूपिमानं तु जयदं तदुदाहृतम्।
उपानादिस्तूपिपर्यन्तं पञ्चांशं विभजेद्बुधः ॥ २० ॥
तथोच्चं सार्धान्त्यं(न्त्यशं) स्यात्सप्तांशं चरणोदयम्।
तत्प्रोच्चसदृशं मञ्चं तस्य(त्रि)यं सार्धषट्ककम् ॥ २१ ॥
पादाधिकत्रिभागेन मञ्चमानमुदाहृतम्।
पादोच्चं रसभागेन गुणांशं मस्तरोदयम् ॥ २२ ॥
सार्धपञ्चांशमभ्युच्चं मञ्चं सार्धद्विभागया।
एकांशं वेदिकामानं द्विभागं स्याद्गलोदयम् ॥ २३ ॥
पञ्चांशं शिखरोत्तुङ्गं पादद्वयं शिरो(खो)दयम्।
तद्भूतं सदनं ज्ञेयं कल्पयेत्कल्पवित्तमः ॥ २४ ॥
आरामोच्चं तु पञ्चांशं भागं कृत्वा विशेषतः।
सार्धांशांशमधिष्ठानं भास्वरं चरणोदयम् ॥ २५ ॥
मस्तरोच्चं त्रिभागैकं चरणं सार्धषड्भवेत्।
सपादाग्न्यंशमञ्चं स्यात्तली(स्त्रि)पं सार्धषट्ककम् ॥ २६ ॥
त्रिभाग मस्तरोत्सेधं पादोच्चं सार्धपञ्चकम्।
पादोनाग्न्यंशमञ्चोच्चं शिरांशं वेदिकोदयम् ॥ २७ ॥
द्विभागं गलमानं तु पञ्चांशं शिखरोदयम्।
व्योमांशं तु शिखामानं विमानं सार्वदेशिकम् ॥ २८ ॥
होमादिस्तूपिपर्यन्तं वेदाश्च परिकल्पयेत्।
भानुकूटं तथा कोष्ठं भानुद्विगुणपञ्जरम् ॥ २९ ॥
शिखरे तु चतुर्दिक्षु महानासीचतुष्टयम्।
पादं प्रत्यल्पनासाढ्यं शिखरेऽष्टाल्पनासिकम् ॥ ३० ॥
कूटकोष्ठादिसर्वाङ्गं नागराङ्गुचितं कुरु।
एकाकारतलस्तम्भं सुभद्रमिति विद्यते ॥ ३१ ॥
तदेव शिखरेऽष्टाल्पनासिकारहितं भवेत्।
महाशममिति विख्यातं सर्वदेव(देव)मियावहम् ॥ ३२ ॥

तदेव शिखरे चण्डवृत्तं श्रीकान्त मुच्यते ।
चरस्रं शीर्षकण्ठे चे श्रीमण्डनमुदाहृतम् ॥ ३३ ॥
तदेव शिखरे चाष्टौ (ष्ट)महानासिसमन्वितम् ।
श्रीभवन्तं च व्याख्यातं शालाभद्रयुतं तु वा ॥ ३४ ॥
त्रिभद्रं वाऽथ भक्तव्यं सर्वेषां सद्मनामपि ।
श्रीकान्तं शिखरेऽष्टास्यनापा(सा)ढ्यं श्रीविशालकम् ॥ ३५ ॥
नानाऽङ्घ्रितलयुक्तास्ते तत्तन्नाम्ना प्रकीर्तिताः ।
विस्ताराख्य....मंसं भास्करं तु विशीर्षकम् ॥ ३६ ॥
सर्वेदालयमित्युक्तं सर्वदेवार्हकं परम् ।
मानसूत्रान्तमानन्दभागं कृत्वा विशेषतः ॥ ३७ ॥
गर्भगेहं गुणांशं स्याद्भागेन गृहपिण्डिका ।
अलिन्द्रांशे तु कर्तव्यं भा(हा)रभागेन कल्पयेत् ॥ ३८ ॥
ततो विन्यासपश्चान्तं व्यासं नन्दविभाजिते ।
एकांशं कूटविस्तारं गुणांशं कोष्ठदीर्घकम् ॥ ३९ ॥
एकांशं पञ्जरव्यासमर्धांशं हरयाऽन्तरम् ।
शालामध्ये महानासि निवृत्तं स्वर्धभागया ॥ ४० ॥
ऊर्ध्वभूमा(न)न्दभागे तु कूटभांशेन कल्पयेत् ।
शालाया(त्र) द्विगुणायाम(मा)शिवांशं पञ्जरं भवेत् ॥ ४१ ॥
शेषं हारान्तरं चोर्ध्वे भूतारं रसभाजिते ।
कूटमेकेन कर्तव्यं कोष्ठं तद्द्विगुणायतम् ॥ ४२ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
ऊर्ध्वभूमि तथाऽर्धं तु मध्यदण्डेन निर्गतिम् ॥ ४३ ॥
चतुरष्टश्रवृत्ताभं कूटानां शीर्षकं क्रमात् ।
कर्करीदण्डवत्कोष्ठं स्वग्रं हर्म्यादिशीर्षकम् ॥ ४४ ॥
महानास्यष्ट(ष्ट)कोपेतं शीर्षकं परिकल्पयेत् ।
रविकोष्ठं च कूटं च रविद्विगुणपञ्जरम् ॥ ४५ ॥
मागिबोच्चाग्रमानं तु ततः कोष्ठमिदं परम् ।
गेहव्यासं तु यमांशं कृत्वा नीचगृहच्चतुः (होच्चकम्) ॥ ४६ ॥
गृहपिण्डांशमानेन आलिन्दं त्वेकभागया ।
हाराप्या(रव्या)सं शिवांशेन परितः परिकल्पयेत् ॥ ४७ ॥

विन्याससूत्रयोरन्तर्व्यासपर्यन्तभाजिते ।
कर्णकूटं तदेकांशं कोष्ठायामं तु तद्द्वयम् ॥ ४८ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
चतुष्कूटाष्टकोष्ठं च पञ्जरम्भं तु संख्यया ॥ ४९ ॥
हारान्तरं चतुर्विंशत्क पयेत्प्रथमं तलम् ।
आलिन्द्रं जलपादं स्यात्प्रस्तारं तु घनीकृतम् ॥ ५० ॥
ऊर्ध्वभूनवभागं स्याच्छिवांशं कूटविस्तरम् ।
कोष्ठं तद्द्विगुणायामं पञ्जरं समभानतः ॥ ५१ ॥
शेषं हारान्तरं ख्यातं क्षुद्रपञ्जरसंयुतम् ।
ऊर्ध्वभूमिभिभागैकं मध्ये दण्डेन निर्गमम् ॥ ५२ ॥
चतुरश्रमधिष्ठानमष्टाश्रं मस्तकं गलम् ।
शिखरेऽष्टौ महानासि(स्यः) पादे मत्यर्पनासिका ॥ ५३ ॥
कर्णकूटं तु भागं स्यात्कोष्ठं षोडशभिर्युतम् ।
नलकूटोन्नतं कोष्ठमन्तरमस्तरान्वितम् ॥ ५४ ॥
क्षुद्रनीड द्विविधं स्यान्नानास्त्रं सूकराग्रचा(कृति) ।
नानाविधैर्विचित्रं तु तुङ्गं भागं तु पूर्वकम् ॥ ५५ ॥
जयावहमिदं ख्यातं सर्वदेवार्हकं परम् ।
तदेव वर्तुलं कर्णे शीर्षान्तं सर्वमामि(नि)कम् ॥ ५६ ॥
तदेव सान्तरं मध्ये कूटकोष्ठं च पञ्जरम् ।
कूटानां शीर्षकस्तूपिकुम्भं कर्णे च वर्तुलम् ॥ ५७ ॥
एवं स्यान्मूलभूमौ तु वस्वश्रं मध्यमे तले ।
युगाश्रं मध्यभूमौ [illegible] कर्णकूटं प्रकल्पयेत् ॥ ५८ ॥
सुखावहमिदं ख्यातं सर्वदेवार्हकं परम् ।
तदेव कूटकोष्ठं च अन्तरं प्रस्तरं विना ॥ ५९ ॥
व्यासोच्चसमसूत्रं तु सदस्त्र(दाज)पशूदं भवेत् ।
तदेव शिखरं कण्ठं युगाश्रं धारकान्तकम् ॥ ६० ॥

इति काश्यपशिल्पे चतुर्भूमिविधानो नाम त्रिंशः पटलः ।

अथैकत्रिंशः पटलः।

---

वक्ष्येऽहं कूटकोष्ठानां पञ्जराणां तु लक्षणम्।
द्वितलादितलान्तानां समयेच प्रकीर्तितम्॥ १॥
तलं मस्यदिशं व्यासं समांशं कर्णकूटकम्।
सार्धमांशं तु कोष्ठं स्याच्चतुष्पादैकपादुकौ॥ २॥
अधस्तात्तत्क्रमवर्गं च प्रस्तरः कर्णशीर्षकम्।
स्तूपिवर्गसमायुक्तौ कूटकोष्ठौ विशेषतः॥ ३॥
एवं चाऽऽदितले कुर्याद्धारातालं विनोर्ध्वतः।
कूटशालौ च कर्तव्यौ पञ्जराश्च तथैव च॥ ४॥
ऊर्ध्वपादोदयं सप्तभागं कुर्याद्विशेषतः।
एकांशं वेदिकोत्सेधं सार्धांशं गलमुन्नतम्॥ ५॥
शीर्षं तु त्रिगुणांशेन शेषं स्तूप्युदयं भवेत्।
एवं तु कूटकोष्ठौ द्वौ कल्पयेत्तु तलं प्रति॥ ६॥
अथवा कूटकोष्ठानामुदयं तु वदाम्यहम्।
उत्तरस्योर्ध्वसीमान्तं हंसमालोर्ध्वसमं(सिद्ध)कम्॥ ७॥
कपोतं वाथसानं वा भागं पूर्ववदेव तु।
सान्तरप्रस्तरं चेत्तु प्रस्तरस्योर्ध्वसीमकम्॥ ८॥
वेदिकोर्ध्वं समीं(मं)नाऽथ सान्तरप्रस्तरान्वितः(तम्)।
तदूर्ध्वं षड्धा भज्य एकांशं वेदिकोद[य]म्॥ ९॥
गुणांशं चरणोच्चं तु पादोनद्व्यंशमञ्चकम्।
स्तूप्युत्सेधं सपादांशं क्रमशः परिकल्पयेत्॥ १०॥
एवं हि कूटकोष्ठौ द्वौ कल्पयेच्छिल्पवित्तमः।
कूटस्यास्य त्रिभागैकं स्वनासीविस्तृतं भवेत्॥ ११॥
तद्व्यासत्रिचतुःपञ्चसप्तभागेन नीव्रकम्।
कर्णकूटे कपोतं तु नासिकानिर्गमं भवेत्॥ १२॥
चतुर्दिक्षु चतुर्नासि(नासीः)कूटाना परिकल्पयेत्।
एक[स्तू]पिसमायुक्तं नीव्रवेद्यविमानवत्॥ १३॥

तदेवार्धं वसुकोणं वा वृत्ताभं वा गळं शिरः ।
नागराद्युचितं कल्प्यं कर्णकूटं (टे)विशेषतः ॥ १४ ॥
शालानां पार्श्वयोर्विंब ललाटाख्यं(ख्या)तु नासिका ।
शाला व्यासविशाला तु उन्नता मुखपट्टिका ॥ १५ ॥
स्वस्तूप्यग्रसमं प्रोतं शालानास्यथवा(सी)षकम् ।
शालादैर्घ्यं त्रिभागैकं मुखनासिविशालकम् ॥ १६ ॥
कूटानां नासिकानीव्रं महानासिवदाचरेत् ।
स(स्तू)पित्रयसमायुक्तं नागरे भवने द्विज ॥ १७ ॥
का(शा)लानां द्राविडानां तु स्तूपिस्यात्रिखविसंख(द्विद्वित्रिसंख्य)या ।
शालानां वेसराणां तु स्तूप्येकं वा चतुष्टयम् ॥ १८ ॥
गलांशे कूटकोष्ठानां देवताग्रस्तु कल्पयेत् ।
एवं हि कूटकोष्ठस्तु पञ्जरस्त्वधुनोच्यते ॥ १९ ॥
उपानाद्युत्तरान्तं तु नवभागविभाजिते ।
उपपीठमधांशेन पादांशेन धरातलम् ॥ २० ॥
वेदांशं चरणायामं मञ्चमध्यर्धभागया ।
अर्धांशं वेदिकायामं कपोतान्तं गलोदयम् । २१ ॥
प्रतिवाजनसीमान्तं पञ्जरोच्चमुदाहृतम् ।
प्रासादस्य कपोतं तु यथाशोभां विनिर्गतिः ॥ २२ ॥
पञ्जरो नासिकाकारः कूटकोष्ठाकृतिस्तु वा ।
हस्तिपृष्ठविमानं स्याच्छिखरान्तमथापि [illegible] ॥ २३ ॥
एवं त्वनेकभेदेन पञ्जराकृतिरुच्यते ।
यथेष्टं तेषु कर्तव्यं हर्म्यकोष्ठेषु हर्म्यकम् ॥ २४ ॥
एकेन भूमिहर्म्येषु .... .... ॥
एषमादितले(लं )कुर्यादन्तरप्रस्तरान्विदम् ॥ २५ ॥
मानसूत्रं तु निष्कान्तं युक्तमेव यथाचरेत् ।
पञ्जरं नीव्रादिनं प्रस्तरोर्ध्वे विशेषतः ॥ २६ ॥
कर्णकूटं समं वाऽथ त्रिपादं वाऽधिपरस्तरम् ।
मध्यामभद्रं (कं )तुङ्गं युक्त्या पञ्जरमाचरेत् ॥ २७ ॥

तलं प्रत्यूर्ध्वपादोच्चं प्रागिवैव नवांशकम् ।
गुणांशं वा घना भित्तिश्छत्र शीर्षसमं युतम् ॥ २८ ॥
पादायामं चतुर्भागमप्यर्धांश तु प्रस्तरम् ।
अर्धांशं वेदिकामानं कपोतान्तं गलोदयम् ॥ २९ ॥
प्रतिवाजनसीमान्तं पञ्जरोदयमीरितम् ।
शेष प्रागिव कर्तव्यमेव निष्क्रान्तपञ्जरम् ॥ ३० ॥
निष्क्रान्तरहित चेत्तु प्रस्तरोर्ध्वं तु वागिव(जनम्) ।
पञ्जरे कूटकोष्ठौ च पादे पादान्तरेऽपि वा ॥ ३१ ॥
गोपानाधारिताकल्पमहाशालपराक्रमान् ।
हस्तौ पादौ द्वयोपेता दष्टकीर्णजटान्विताम् ॥ ३२ ॥
रौद्रदृष्टिसमायुक्ता वृत्तवाञ्जनसंनिभाम् ।
गोपान यत्नतो धृत्वा पादौ हस्तौ तदान्वितौ ॥ ३३ ॥
एव वा गजहंसाभ सिंहव्यालोह(लाभ) व वा ।
गोपानं शिरसाऽन्वयं हस्तपादौ यथेष्टगौ ॥ ३४ ॥
कूटादिलक्षण प्रोक्तं पञ्चभूमिविधिं तत ॥ ३५ ॥

इति काश्यपशिल्पे कूटादिलक्षणमेकत्रिंशः पटलः ।

---

अथ द्वात्रिंश पटल ।

---

पञ्चभूमिः ।

---

अथ वक्ष्ये विशेषेण पञ्चभूम्यास्तु लक्षणम् ।
विस्तारोत्सेधमान तु प्रोक्त प्रासादमानके ॥ १ ॥
विस्तारं रुद्रगा भज्य गुणांशं गर्भगेहकम् ।
द्विभागं गृहपिण्डी स्यादलिन्द्र स्त्वेकभागया ॥ २ ॥
हाराभा(मा)नेत्र(न) कर्तव्यमलिन्द्रघनाभित्तिकम् ।
वर्षस्थलसम युक्तं कल्पयेत्प्रस्तरोपरि ॥ ३ ॥
धरातन्त्रे व(च)मञ्चो-र्वे द्वितीये वा त्रिभूमिके ।
देवतास्थापनं कुर्याच्चात्रदेव घनीकृतम् ॥ ४ ॥

विन्याससूत्रयोरन्तः, रुद्रभागविभाजिते ।
शिवांशं कर्णकूटं तु मध्यकोष्ठं गुणांशकम् ॥ ५ ॥
तयोर्मध्यैकभागेन पन्त(ञ्ज)रव्यासमुच्यते ।
हारान्तरमथांशेन कल्पयेत्कल्पवित्तमः ॥ ६ ॥
तदूर्ध्वभूमिविस्तृतं नन्दभागं कृत्वांशं(तु )द्वैधिकम् ।
मध्ये कोष्ठाग्निभागं तु पञ्जरं त्वंशमानतः ॥ ७ ॥
हारान्तरमथार्धांशं कल्पयेत्तु द्वितीयके ।
तदूर्ध्वभुवनं चाष्टभागांशं कर्णकूटकम् ॥ ८ ॥
द्विभागं कोष्ठकं कुर्याद्भागं (गः)स्यात्पञ्जरस्तथा ।
हारान्तरयथार्धांशं कृत्वा लक्षणसंयुतम् ॥ ९ ॥
ऊर्ध्वभूपिरसाक्षि तु कूटव्यासमथांशकम् ।
शालादीर्घत्रिभागं स्याद्दुग्धा(दर्धा)ंशं पञ्जरस्तरम् ॥ १० ॥
शेषं हारान्तरं ख्यातं घटकुञ्जरमेव वा ।
तदूर्ध्वे भूमिनिक्र्यास्यं (विन्यासं) मध्ये दण्डेन निर्गतिः ॥११॥
गृहोच्चं तु षट्त्रिंशे पादोनांशं धरातलम् ।
सार्धपञ्चांशमण्डुच्चं सार्धद्व्यंशं तु मञ्चकम् ॥ १२ ॥
सपादं पञ्चभागं तु चरणोदयमीरितम् ।
मञ्चोच्चं द्व्यमर्धांशं पञ्चांशे चरणायतम् ॥ १३ ॥
सपादद्विभागमुत्तं स्यात्पा(प)दामर्धेन पञ्जरकम् ।
द्विभागं प्रस्तरोत्से(त्सेधं) सार्धवेदाङ्घ्रितुङ्गकम् ॥ १४ ॥
पादोनद्व्यंशमर्धः स्याच्छिवांशं वेदिकोदयम् ।
षष्ठं वा तेन पञ्चांशं सार्धवेदं शिरोदयम् ॥ १५ ॥
द्विभागं स्तूपिमानं तु शान्तिकं भवनं भवेत् ।
सवेदचत्वारिंशं तु भागं कृत्वा गृहोन्नतम् ॥ १६ ॥
गुणांशं तत्तुङ्गं तु भूतांशं चरणोदयम् ।
प्रस्तरं चाग्निभागं तु पादं सार्धयुगं भवेत् ॥ १७ ॥
सपादद्विभागमञ्चं स्यात्तलिपं स्यादर्धा(स्यादधो)युगम् ।
प्रस्तरोच्चं द्विभागेन वेदांशं चरणोदयम् ॥ १८ ॥
पक्षांशं मञ्चमानं स्यात्सपादं सार्धगुणांशकम् ।
अध्यर्धमञ्चमानं तु द्व्योर्धांशं वेदिकोदयम् ॥ १९ ॥

द्विभागं गलमानं तु सार्धं वेदांशशीर्षकम् ।
अंशपञ्चं (चं) तु शिखामानं पौष्टिकं सदनं त्विदम् ॥ २० ॥
सदनोच्चं तु षट्त्रिंशद्भागं कृत्वा द्विजोत्तम ।
अधिष्ठानं द्विभागेन वेदांशं चरणायतम् ॥ २१ ॥
सत्रिपादशिवांशेन मञ्चमानं प्रकल्पयेत् ।
सार्धाग्न्यंशं तु तलिपं तदर्धं मञ्चमानकम् ॥ २२ ॥
सपादानलपीठं स्यान्मञ्चमत्यर्धभागया ।
गुणांशं पादपीठे तु सपादांशं [तु] प्रस्तरम् ॥ २३ ॥
एकांशं वेदिकामानं पादोनद्व्यंशकं गलम् ।
सपादाग्न्यंशशिरोपे(के शीर्षे शे)षं स्तूप्युदयं भवेत् ॥ २४ ॥
जयदं भवनं ह्येवं कल्पयेत्त्वल्पवित्तमः ।
विमानोत्सेधं विभजेच्चत्वारिंशद्विभागया ॥ २५ ॥
द्विभागं रमणीमानं वेदांशं चरणोदयम् ।
प्रस्तरोच्चं द्विभागेन सार्धत्रिंशाङ्घ्रिणोदयम् ॥ २६ ॥
प्रस्तारं पादरहितं द्विभागेन विधीयते ।
त्रिभागं चरणायामं तदर्धं मञ्चमानकम् ॥ २७ ॥
सार्धद्विभागपादोच्चं सपादांशेन मञ्चकम् ।
स्तम्भं पादाधिकद्व्यंशं मञ्चमानं सपादकम् ॥ २८ ॥
व्योमांशं वेदिकामानमत्यर्धाङ्गुलमानकम् ।
सार्धत्रिभागं शिखरं द्विभागं स्तूपिमानकम् ॥ २९ ॥
अद्भुतं भवति ह्येवं कल्पयेद्देवतार्हकम् ।
चतुर्विंशतिभागं तु कृत्वा च सदनोदयम् ॥ ३० ॥
अत्यर्धांशतलीत्सेधं गुणांशं पादमानकम् ।
तदर्धं मञ्चमानं तु पादोदकं(यं)गुणांशकम् ॥ ३१ ॥
तत्पार्धं प्रस्तरोत्सेधं द्व्यर्धमङ्घ्र्युदयं भवेत् ।
प्रस्तरं तु सपादांशं स्तम्भं पादाधिकद्वयम् ॥ ३२ ॥
तदर्धं मञ्चमानं तु सार्धांशद्व्यंशमङ्घ्रिकम् ।
एकांशं प्रस्तरोत्सेधमर्धांशं वेदिकोदयम् ॥ ३३ ॥
त्रिपादं गलमानं तु पादोनद्व्यंशकं शिरः ।
अर्धांशरहितव्योमभागं स्तूप्युदयं भवेत् ॥ ३४ ॥

सर्वेषामिकमेवं तु कर्तव्यं सदनं द्विज ।
होमादिस्तूपिपर्यन्तं युगार्थं परिकल्पयेत् ॥ ३५ ॥
कलाशालाकलासौष्ठी पञ्जरं चतुरष्टकम् ।
पादाः प्रत्यल्पनासाढ्यां(ढ्या)हारान्तं नासिकाद्वयम् ॥ ३६ ॥
भद्रनासीचतुष्कं तु शिखरे च प्रकल्पयेत् ।
क्षुद्रनासीद्वयं कोणे कल्पितं ब्रह्मकान्तकम् ॥ ३७ ॥
कूटास्त्व(ष्ट्व)नन्तरं चाढ्यं (राढ्यं च)माजःपरमुदाहृतम् ।
तदेवोक्तकूटं तु कोष्ठेऽनन्ताः स्वमञ्चकाः ॥ ३८ ॥
ख्यापंभुवमिदं गेहं सर्वदेवार्हकं परम् ।
तदेव वेदिकाकोष्ठं शीर्षकं वसुकोणकम् ॥ ३९ ॥
शालामध्येऽङ्गमानेऽन्तर्निर्गतिः कोष्ठ एव वा ।
भद्रकान्तमिति ख्यातं कूटकोष्ठं परिस्तमम् ॥ ४० ॥
समश्रं वाऽपि(ऽप्य)मश्रं वा जनार्द्दनमुदाहृतम् ।
तदेव कोष्ठमध्ये तु भद्रहीनमथापि वा ॥ ४१ ॥
मध्यभद्रयुतं वाऽपि मण्डलं शीर्षकं गलम् ।
अतिभद्रमिति ख्यातं सर्वदेवार्हकं परम् ॥ ४२ ॥
तदेव कूटकोष्ठं च पञ्जरं च सपञ्जरम् ।
सोभनं सर्वतोभद्रं धर्मप्रीतिकरं भवेत् ॥ ४३ ॥
विमल कूटकोष्ठ च पञ्जरं समसूत्रकम् ।
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम् ॥ ४४ ॥
नानालंकारसंयुक्तं युग्मपञ्जरसंयुतम् ।
शिखरेऽष्टमनासाढ्यं महानासीचतुष्टयम् ॥ ४५ ॥
वीरभद्रमिति ख्यातं सर्वदेवप्रियावहम् ।
तदेवाष्टकलाद्यादिवेद्यादिभूमौ द्विभागया ॥ ४६ ॥
भानुपञ्जरसंयुक्तं शेषं प्रागिव कल्पयेत् ।
मागुक्तनाम मा(चाऽऽ)ख्यातं मा(ता)रिष्टं परिकल्पयेत् ॥ ४७॥
पञ्चभूमिसमाख्यातं पट्टलं च युगं शृणु ॥ ४८ ॥

इति काश्यपशिल्पे पञ्चतलविधानो नाम द्वात्रिंशः पटलः ।

## अथ त्रयस्त्रिंशः पटलः ।

### षड्भूमिः ।

अथ वक्ष्ये विशेषेण षड्भूमिकविधिं परम् ।
तस्य विस्तारतुङ्गं तु प्रासादमानवद्भवेत् ॥ १ ॥
विस्तारं रुद्रधा भज्य गुणांशं गर्भगेहकम् ।
द्विभागं गृहपिण्डं स्यादलिन्द्रं शिवभागया ॥ २ ॥
हारं शिवांशमानेन अलिन्द्रं वा स्थलं भवेत् ।
धरातले द्वित्रिभूमौ ... ... ... ... ... ... ॥ ३ ॥
पा(पा)दे तास्था(तत्स्था)पनं यत्र तावद्दै सुदृढं घनम् ।
बाह्योचितमलंकारं घनाभ्यन्तरवद् भवेत् ॥ ४ ॥
स्थपती विभजेत्तारं विन्यासं सूत्रगोच(स्त)रम् ।
भारं सौष्ठिकविस्तारं कोष्ठं तद्द्विगुणायतम् ॥ ५ ॥
भागेन पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
चतुष्कूटाष्टकोष्ठं च भानुपञ्जरसंयुतम् ॥ ६ ॥
हारान्तरं चतुर्विंशत्कल्पयेदतिभूतले ।
पञ्चारं हर्म्यमध्ये तु कण्ठेषु सौष्ठिकं भवेत् ॥ ७ ॥
पार्श्वयोः कर्णकूटस्य पञ्जरं परिकल्पयेत् ।
कोष्ठपञ्जरयोर्मध्ये कल्पयेत्तु विशेषतः ॥ ८ ॥
तदूर्ध्वभूदशांशेषु व्योमांशं कर्णकूटकम् ।
मध्ये पञ्जरमेकांशं कण्ठकूटमिवाऽऽकृतिः ॥ ९ ॥
द्विभागं कोष्ठदीर्घं स्यादर्धांशं पञ्जरस्य तु ।
शेषं हारान्तरं स्यात्तमेषां संख्याऽऽदिभूमिवत् ॥ १० ॥
तस्योर्ध्वभूविशाले तु नवभागविभाजिते ।
कण्ठकूटमथांशेन मध्यशाला गुणांशकम् ॥ ११ ॥
पञ्जरव्यासमेकांशमर्धांशं हरयोऽन्तरम् ।
तदूर्ध्वे वसुभागं तु शिवांशं कूटविस्तृतम् ॥ १२ ॥

मध्ये कोष्ठद्विभागेन एकांशं पञ्जरस्ततम् ।
हारान्तरमथार्धांशं कल्पयेत्कल्पवित्तमः ॥ १३ ॥
तस्योर्ध्वभूमिविस्तारं षड्भागं विभजेत्समम् ।
कूटमेकांशमानेन कोष्ठायामं तु तद्द्वयम् ॥ १४ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
तदूर्ध्वभूमिविस्तारमर्धांशं मध्यभद्रकम् ॥ १५ ॥
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं भद्रनीव्रकम् ।
तत्तुङ्गं सप्तपञ्चाशदंशं कृत्वा तु देशिकः ॥ १६ ॥
अधिष्ठानोच्चपञ्चांशिषड्भागं चरणोदयम् ।
पादहीनात्रिभागं तु प(म)ञ्चमानमुदाहृतम् ॥ १७ ॥
पादोच्चं सार्धपञ्चांशं मञ्चं सार्धत्रिभागया ।
पादाधिकं तु पञ्चांशं पादायामपिति स्मृतम् ॥ १८ ॥
सार्धद्विभागमञ्चोच्चं पञ्चांशं चरणोदयम् ।
पादोदयं द्विभागं तु मस्तरोदयमीरितम् ॥ १९ ॥
पादहीनं तु पञ्चांशं तलिपस्योदयं भवेत् ।
द्विभागं मस्तरं स्यात्तमर्धाधिकयं युगांशकम् ॥ २० ॥
पादायाममिदं स्यात्तं पादोनद्वयंशमञ्चकम् ।
कपोतांशं वेदिकामानं पादोनद्वयंशकं गलम् ॥ २१ ॥
सार्धवेदांशमानेन शीर्षकं परिकल्पयेत् ।
पक्षांशं तु विमाने च षड्भूमिकमेव हि ॥ २२ ॥
साष्टाविंशति(त)लानि स्युर्विंशत्कूटसमन्वितम् ।
षट्त्रिंशत्पञ्जरोपेतं पादं मत्यल्पनासिकम् ॥ २३ ॥
होमादिस्तूपिपर्यन्तं चतुरश्रं प्रकल्पयेत् ।
शिखरे तु महानासिचत्वारि(सीश्वतस्रः)परिकल्पयेत् ॥ २४ ॥
अम्बुजासनमाख्यातं सर्वदेवप्रियावहम् ।
तदेव शिखरं कण्ठं वस्वश्रं परिकल्पयेत् ॥ २५ ॥
अष्टोपसौष्ठिकान्तं तु शीर्षकं चतुरश्रकम् ।
उद्यानावनतोपेतं भद्रं वाऽभद्रकोष्ठकम् ॥ २६ ॥
सान्तरप्रस्तरोपेतौ हीनौ वाऽपि समुन्नतौ ।
सुशाकरमिदं स्यात्तं तदेवं सौष्ठिशीर्षकम् ॥ २७ ॥

वृत्ताकारं प्रकल्प्यं नाम्ना तद्वद्दलीनकम् ।
तदेव शिखरे चाष्टौ कल्पि(प्रस्त्वल्प)नासियुतं महत् ॥ २८ ॥
शिवभद्रमिति ख्यातं शिवप्रीतिकरं परम् ।
तदेव वृत्तश्रवृत्ताभं शीर्षकं गलसंयुतम् ॥ २९ ॥
मुखे ललाटनासाढ्यं नागेन्द्रमिति संज्ञितम् ।
षड्भूमिरेवमाख्याता सप्तभूमिमथोपरि ॥ ३० ॥

इति काश्यपशिल्पे षड्भूमिविधानं त्रयस्त्रिंशः पटलः ।

अथ चतुस्त्रिंशः पटलः ।

सप्तभूमिः ।

अथ वक्ष्ये विशेषेण सप्तभूमेस्तु लक्षणम् ।
प्रासादमानविधिना व्यासोदयं प्रकल्पयेत् ॥ १ ॥
रव्यंशं विभजेत्तारं वेदांशं गर्भगेहकम् ।
पक्षांशं भित्तिविष्कम्भमेकेनालिन्द्रमिष्यते ॥ २ ॥
हारान्तव(र)मथांशेन परितः कल्पयेद्बुधः ।
विन्यासभूत्रयोरन्तं भान्वंशेन समं भवेत् ॥ ३ ॥
एकांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ।
पञ्जरव्यासमेकांशं शेषं हारान्तरं भवेत् ॥ ४ ॥
चतुष्कूटाष्टशाला च भानुपञ्जरसंख्यया ।
तस्योर्ध्वभूमिविस्तारं धर्मभागविभाजिते ॥ ५ ॥
कर्णकूटं च कोष्ठं च पूर्ववत्परिकल्पयेत् ।
पञ्जरव्यासमर्धांशं शेषं तारान्तरं भवेत् ॥ ६ ॥
तस्योर्ध्वभूमिविस्तारं धर्मभागविभाजिते ।
पञ्जरं कूटकोष्ठं च पूर्ववत्परिकल्पयेत् ॥ ७ ॥
ऊर्ध्वभूमौ नवांशे तु मध्ये शालाविभाजिते ।
व्योमांशं कर्णकूटं स्यादेकांशं पञ्जरस्तथम् ॥ ८ ॥

द्वारान्तरमथार्धांशं तस्योर्ध्वे वसुभाजिते ।
मध्ये शाला द्विभागेन शेषं पूर्ववदाचरेत् ॥ ९ ॥
तदूर्ध्वभूमिविस्तारे रसभागविभाजिते ।
कूटमेकांशमित्युक्तं शाला तद्द्विगुणायता ॥ १० ॥
अर्धांशं पञ्जरव्यासं शेषं द्वारान्तरं भवेत् ।
तदूर्ध्वे भूम्य(म्ब)ग्निभागैकं मध्ये दण्डेन निर्गतम् ॥ ११ ॥
सप्तषष्ठी(ष्टि)तिभागं तु कर्तव्यं सद्मनोदयम् ।
सपादांघ्रिरधिष्ठानं सार्धषड्भाङ्घ्रितुङ्गकम् ॥ १२ ॥
तदूर्ध्वे मञ्चमानं तु षड्भागं चरणोदयम् ।
स्त्रीपादवद्द्विभागं तु मञ्चमानमुदाहृतम् ॥ १३ ॥
सार्धभूतांशमङ्घ्र्युच्चं सार्धद्व्यंशं तु प्रस्तरम् ।
सपादपञ्चभागं तु स्तम्भमानमुदाहृतम् ॥ १४ ॥
प्रस्तरं सार्धपञ्चांशं भूतांशं चरणोदयम् ।
सपादद्विभागं मञ्चं स्यात्स्त्रीपादं[तु]युगांशकम् ॥ १५ ॥
चरणोदयमित्युक्तं प्रस्तरोर्ध्वं द्विभागया ।
पादोर्ध्वं सार्धवेदांशं पादोनद्व्यंशमञ्चकम् ॥ १६ ॥
व्योमांशं वेदिकोत्सेधं पादोनद्व्यंशकं गलम् ।
अर्धाधिकयुगांशं तु शिखरोदयमिष्यते ॥ १७ ॥
पञ्चांशं स्तूपिमानं तु एवं (व्य) सप्ततलं विदुः ।
पञ्जरं कूटकोष्ठं च समसूत्रे तु कल्पितम् ॥ १८ ॥
होमाद्याग्रयुगाग्रं तु शिखरे वेदनासिका ।
शालापङ्क्तिविनिर्युक्तं भानुद्विगुणकूटकम् ॥ १९ ॥
पट्टिपञ्जरसंयुक्तं पादं प्रत्यल्पनासिका ।
नानाधिष्ठानसंयुक्तमेकाकारमथापि वा ॥ २० ॥
एवेनाकृतिरङ्घ्री तु समुज्ज्वलमुदाहृतम् ।
एवं चान्तरकूटाः स्युः सान्तरप्रस्तरान्वितम् ॥ २१ ॥
श्रीच्छन्दमिति विख्यातं सर्वदेवार्हकं परम् ।
तदेव नतकूटाश्च कोष्ठोनान्ताः ( श्रान्ताः कोष्ठाः ) समञ्जकाः ॥२२॥
श्रीविशालमिति स्यात् सर्वदेवप्रियावहम् ।
तदेव श्रीविकल्पं च भद्राश्च वेदिका तथा ॥ २३ ॥

श्रीकान्तमिति विख्यातं कूटकोष्ठसमं तु वा ।
समं च नतकूटं स्याच्छ्रीप्रियं तदुदाहृतम् ॥ २४ ॥
तदेव वृत्तशिखरं स्तूपिं चैव गलं तथा ।
रुद्रकान्तमिति ख्यातं रुद्रप्रीतिकरं परम् ॥ २५ ॥
तदेव कर्णकूटं तु वेदाश्राष्टाश्रमण्डलम् ।
क्रमेणाऽऽदितलाकल्प्यं वृत्तभद्रमिदं परम् ॥ २६ ॥
तदेवोन्नतकूटं च नतशालासमन्वितम् ।
कूटपरतकयुक्तं च सुवि(ब्र)त्तमिति विद्यते ॥ २७ ॥
सोन्नतं कूटकोष्ठं च पञ्जरोन्नतमस्तकम् ।
पयेष्टं शिखराकारं कण्ठं स्तूपिवरं तथा ॥ २८ ॥
युगाश्रं शीर्षकोपेतं कण्ठकूटं प्रकल्पयेत् ।
शिवभद्रमिति ख्यातं शिवप्रीतिकरं परम् ॥ २९ ॥
तदेव कूटकोष्ठं तु दण्डं वाऽध्यर्धदण्डकम् ।
द्विदण्डं वाऽथ निष्क्रान्तं भद्रं वा भद्रपञ्जरम् ॥ ३० ॥
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम् ।
नानाचित्रैर्विचित्रं तु शिवसौख्यमुदाहृतम् ॥ ३१ ॥
तदेव गर्भगेहं तु वृत्तं वाऽथ युगाश्रकम् ।
वृत्तमेवं हि बाह्ये तु वृत्ताभं सौष्ठिकान्वितम् ॥ ३२ ॥
शेषं पूर्ववदुद्दिष्टं नानासर्वाङ्गमण्डलम् ।
पञ्जरं कूटकोष्ठं च अन्तरप्रस्तरं विना ॥ ३३ ॥
पयेष्टं शिखराकारं शिवप्रीतिकमिष्यते ।
एवं सप्ततलं(लं) ख्यातं वसुभूमिमथोपरि ॥ ३४ ॥

इति काश्यपशिल्पे सप्तभूमिविधानं नाम चतुस्त्रिंशः पटलः ।

अथ पञ्चत्रिंशः पटलः ।

वसुभूमिः ।

अथ वक्ष्ये विशेषेण वसुभूमिविधिं परम् ।
प्रासादमानविधिना संप्राप्तं विस्तृतोदयम् ॥ १ ॥

त्रयोदशविभागं तु कृत्वा प्रासादविस्तृतम् ।
मूर्ताशं गर्भगेहं तु द्विभागं गृहपिण्डिका ॥ २ ॥
अलिन्द्रं चैकभागेन हार भागेन कल्पयेत् ।
अथवाऽनलभागेन गर्भगेह विधीयते ॥ ३ ॥
भागेन गृहपिण्डः स्यादलिन्द्र त्वेकभागया ।
कुड्यमेकेन कर्तव्यमलिन्द्र तु विनाऽथवा ॥ ४ ॥
तदर्धं पञ्जरव्यास भद्र वाऽभद्रमेव वा ।
भानुकोष्ठ चतुष्कूटं कपोपञ्जरसंयुतम् ॥ ५ ॥
हारान्तर च द्वात्रिंशत्कल्पयेदादिभूतले ।
वर्षस्तलमलिन्द्र स्यात्प्रस्तरान्त्यघनीकृतम् ॥ ६ ॥
तदूर्ध्वभूमिविस्तृतं त्रयोदशविभाजिते ।
कूटकोष्ठादिसर्वाङ्गमादिभूमिविवैव तु ॥ ७ ॥
तस्योर्ध्वभूविशालं तु भानुभागविभाजिते ।
कर्णकूटं तदेकांशं शालाभागद्विभागया ॥ ८ ॥
अर्धांश पञ्जरव्यासं शेष हारान्तर भवेत् ।
पञ्जर कूटकोष्ठं च संख्या स्वादितलोक्तवत् ॥ ९ ॥
हारान्तरमथार्धांश लम्बपञ्जरसंयुतम् ।
तदूर्ध्वभूमिविभाग तु वसुभागविभाजिते ॥ १० ॥
कर्णकूट तदेकांशं मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशमर्धांश हारयो(याऽ)न्तरम् ॥ ११ ॥
चतुष्कूट चतुःशाल वसुपञ्जरसंयुतम् ।
हारान्तर तथा प्रोक्त कल्पैव षट्तल भवेत् ॥ १२ ॥
तदूर्ध्वभूमिभाग तु षड्भागं विभजेत्समम् ।
कूटव्यासके(मे)।।शमित्य मध्ये कोष्ठ द्विभागया ॥ १३
अर्धांश पञ्जरव्यास शेष हारान्तर भवेत् ।
तदर्धं पञ्जरव्यास भद्राभद्र तु एव वा ॥ १४ ॥
भानुकोष्ठं चतुष्कूटं कपाल ज(त्वन्त)सयुतम् ।
हारान्तर च द्वात्रिंशत्कल्पयेदादिभूतल ॥ १५ ॥
वर्षस्तलमलिन्द्रं स्यात्प्रस्तर त्यघनीकृतम् ।
तत्र्ध्वभूमिविस्तार त्रयोदशविभाजिते ॥ १६ ॥

कूटकोष्ठादिसर्वाङ्गमादिभूमिमिवैव तु ।
तस्योर्ध्वभूविशालं तु भानुभागविभाजिते ॥ १७ ॥
कूटकोष्ठादिसर्वाङ्गं मानसंख्यादि पूर्ववत् ।
तदूर्ध्वभूदशांशे तु कूटकोष्ठं च पूर्ववत् ॥ १८ ॥
हारान्तरमथार्धांशं लम्बपञ्जरसंयुतम् ।
तदूर्ध्वभूविशालं तु वसुभागविभाजिते ॥ १९ ॥
कर्णकूटं तदेकांशं मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशमर्धांशं हारयोत्तरम् ॥ २० ॥
चतुष्कूटं चतुःशालं वसुपञ्जरसंयुतम् ।
हारान्तरं तथा प्रोक्तं कल्पयेवं पदृतरं भवेत् ॥ २१ ॥
तदूर्ध्वभूविशालं तु षड्भागं विभजेत्ततम् ।
कूटमेकांशमित्युक्तं मध्ये कोष्ठं द्विभागया ॥ २२ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
तदूर्ध्वभूविशालाढ्ये मध्ये दण्डेन नीव्रकम् ॥ २३ ॥
कूटात्कोष्ठं तु नीव्रं वा मध्यशाला त्वनीव्रका ।
कूटं कोष्ठमशेषं तु समसूत्रग(श्रेण) एव वा ॥ २४ ॥
सप्तसप्ततिभागं कृत्वा हेमसमुच्चयम् ।
सार्धत्रिंशयधिष्ठानं सप्तांशं चरणोदयम् ॥ २५ ॥
प्रस्तरं तु सपादाग्नि सार्धषट्काङ्घ्रितुङ्गकम् ।
सार्धद्विभागमञ्चोच्चं कल्पयेत्तु विशेषतः ॥ २६ ॥
सपादपञ्चभागं तु चरणोदयमीरितम् ।
प्रस्तरं साध्यपक्षांशं भूतांशं चरणोदयम् ॥ २७ ॥
सपादभागमञ्चं स्यात्पादं पादोनपञ्चकम् ।
मञ्चमानं द्विभागं तु सार्धं पादयुगांशकम् ॥ २८ ॥
सत्रिपादांशमञ्चोच्चं व्योमांशं वेदिकोदयम् ।
कण्ठपादेन पक्षांशं सार्धवेदांशशीर्षकम् ॥ २९ ॥
कण्ठमानं समं स्तूपितुङ्गमित्यत्र कथ्यते ।
स्तूप्यन्तं तदुपानादि वेदार्थं परिकल्पयेत् ॥ ३० ॥
श्रौष्ठ(अष्टा)श्रं च युगांशं स्यात्स्तम्भं प्रत्यल्पनासिकम् ।
शिखरं तु चतुर्नासियुक्तास्ते स्युर्महान्तराः ॥ ३१ ॥

एकाकारतलं स्तम्भं शिवच्छन्दमुदाहृतम् ।
तदेव नतशाखाः स्युर्मञ्चमाः(काः) सांघ्रिकोन्नतम् ॥ ३२ ॥
वागीशमिति विख्यातं सर्वदेवप्रियावहम् ।
चतुरश्राष्टवृत्ताभं सांघ्रिको वा पुनः पुनः ॥ ३३ ॥
विमानशिखरं कण्ठमष्टाश्रं परिकल्पयेत् ।
तदष्टभागं विख्यातं धर्मप्रीतिकरं परम् ॥ ३४ ॥
तदेव कूटकोष्ठं च सर्वत्राविमत(मध्यं वा विम)ञ्चकम् ।
समोन्नतं तथा कूटं नानाहस्तानताङ्घ्रिकम् ॥ ३५ ॥
नानाचित्रविचित्रं तु तत्पर्वतमिति स्मृतम् ।
तदेव शिखरं कण्ठं वृत्ताभं परिकल्पयेत् ॥ ३६ ॥
नाम्ना कैलासमित्युक्तं मम प्रीतिकरं परम् ।
एवमष्टतलं ख्यातं नवभूमिमथोपरि ॥ ३७ ॥

इति काश्यपशिल्पे वसुभूमिविधानं पञ्चत्रिंशः पटलः ।

---

अथ षट्त्रिंशः पटलः ।

---

## नवभूमिः ।

---

अथ वक्ष्ये विशेषेण नवभूमिविधिं परम् ।
प्रासादमानवत्कार्यं गेहस्य सदनं वरम् ॥ १ ॥
पक्षांशं विभजेत्तत्र गुणांशं गर्भगेहकम् ।
द्विभागा गृहपिण्डी स्यादलिन्द्रं त्वेकभागतः ॥ २ ॥
व्योमांशं कुड्यविस्तारमलिन्द्रं तत्समं भवेत् ।
हारव्यासं शिवांशेन कल्पयेत्कल्पवित्तमः ॥ ३ ॥
अथवा षोडशांशं तु प्रासादं विभजेत्समम् ।
युगांशं गर्भगेहं तु द्विभागा गृहपिण्डिका ॥ ४ ॥
अलिन्द्रं तु शिवांशेन व्योमांशं कुड्यविस्तृतम् ।
अलिन्द्रं व्योमभागेन हारान्तं तु तत्समम् ॥ ५ ॥
विन्याससूत्रयोरन्तः कालांशं विभजेत्समम् ।
एकांशं सांघ्रिकं व्यासं कोष्ठं तद्द्विगुणायतम् ॥ ६ ॥

पञ्जरव्यासमेकांशमेकांशं कूटमानकम् ।
हारान्तरं च द्वात्रिंशत्कल्पयेदादिभूतले ॥ ७ ॥
एवमेव प्रकर्तव्यं द्वितीयं च महीतलम् ।
तृतीयमहीतलस्या(यभूतलाया)मं मनुभागविभाजिते ॥ ८ ॥
अर्धांशं पञ्जरव्यासं शेषं पूर्ववदाचरेत् ।
तद्वच्चतुस्तलं चैव कल्पयेद्देशिकोत्तमः ॥ ९ ॥
पञ्चभूमिविभागं तु भानुभागविभाजिते ।
एकांशं कूटविस्तारं-शाला तद्द्विगुणायता ॥ १० ॥
अर्धांशं पञ्जरव्यासं तस्यार्धं हारयोत्तरम् ।
भानुशाला च कूटाभं पञ्जरं पोडशैव तु ॥ ११ ॥
तदूर्ध्वभूविशालं तु वसुभागविभाजिते ।
एकांशं सौष्ठिकव्यासं मध्ये भागद्विशालका ॥ १२ ॥
पञ्जरव्यासमेकांशमर्धांशं हारयोत्तरम् ।
तदूर्ध्वभूविशालं तु रसभागविभाजिते ॥ १३ ॥
एकांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ।
पञ्जरव्यासमर्धांशं शेषं हारान्तरं भवेत् ॥ १४ ॥
तदूर्ध्वं भूविशालं तु गुणभागविभाजिते ।
मध्यांशं दण्डमानेन निर्गमं परिकल्पयेत् ॥ १५ ॥
साष्टविंशतिभागं तु कृत्वा देहा(गेहो)दये बुधः ।
पादोनचतुरंशं तु धरातलमिति स्मृतम् ॥ १६ ॥
पा ोर्ध्वं सार्धसप्तांशं सार्धाग्न्यंशं तु प्रस्तरम् ।
सप्तांशं चरणोर्ध्वं तु सपादाग्न्यंशमंच(मञ्च)कम् ॥ १७ ॥
सार्धषट्काङ्घ्रितुङ्गं तु गुणांशं मञ्चमानकम् ।
षड्भागं पादमानं तु पादोनाग्न्यंशमञ्चकम् ॥ १८ ॥
पादोर्ध्वं सार्धभूतांशं सार्धपक्षांशमञ्चकम् ।
सपादपञ्चभागं तु पादोत्सेधं समुच्यते ॥ १९ ॥
प्रस्तरं सार्धपक्षांशं भूतांशं चरणोदयम् ।
पादाधिक्यं द्विभागं तु प्रस्तरस्योदयं भवेत् ॥ २० ॥
पादोनपञ्चकं पादं प्रस्तरोर्ध्वं द्विभागया ।
सार्धवेदांशकं पादं पादोनद्व्यंशमञ्चकम् ॥ २१ ॥

शिखांशं वेदिकोत्सेधं कण्ठं चाप्यर्धभागया ।
शीर्षं सपादवेदांश पादोनद्व्यंशदं(सं)शिखम् ॥ २२ ॥
पादं मत्यल्पनासाढ्यं शिखरं वेदनासिकम् ।
समं च नतकूटाढ्यं कूटाढ्यं चतुरश्रकम् ॥ २३ ॥
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ।
अशेषं मध्यशालं तु पार्श्वकोष्ठं तु निर्गतिः ॥ २४ ॥
दण्डं वाऽप्यर्धदण्डं वा नाम्ना ललितभद्रकम् ।
तद्देवोन्नतकोष्ठाः स्युः समं च नतभद्रकम् ॥ २५ ॥
श्रमकान्तामिदं नाम्ना सर्वदेवप्रियावहम् ।
समश्रं वाऽपि(प्य)मश्रं वा कूटकोष्ठसमन्वितौ(तम्) ॥ २६ ॥
प्रादेशामिति विख्यातं सर्वदेवप्रियावहम् ।
तदेव शिखरं कण्ठं वस्वश्रं (श्रं) चाष्टनासिकम् ॥ २७ ॥
युगाश्रं वसुकोणं वा वृत्तं वा सौष्ठिकं पुनः ।
सौम्यशेषं युगाश्रं स्याच्छ्रीवर्धनमिदं परम् ॥ २८ ॥
समश्रौ कूटकोष्ठौ द्वौ विमुचौसाध(मश्रौ वाऽथ)सदृशौ ।
वृत्ताश्रव(य)शिरोपेतं चतुर्दिग्भद्रनासिकम् ॥ २९ ॥
विदिक्षु युग्मनासाढ्यं युग्मसा(ग्मंवाऽ)युग्ममेव वा ।
युग्मं पञ्जरसंयुक्तं सुपद्ममिति विद्यते ॥ ३० ॥
तदेव वृत्तसौष्ठ्यग्रं कृतवर्धनमुच्यते ।
तदेव गर्भगेहं तु वृत्तं वृत्तगृहं भवेत् ॥ ३१ ॥
एवं नवतन्तु(लं) ख्यातं दशभूमिमथोपरि ॥ ३२ ॥
इति काश्यपशिल्पे नवभूमिविधानं षट्त्रिंशः पटलः ।

---

अथ सप्तत्रिंशः पटलः ।

---

## दशभूमिलक्षणम् ।

---

अथ वक्ष्ये विशेषेण दशभूमेस्तु लक्षणम् ।
पार्श्वप्रासादमानोच्चप्रमाणैर्वोदयं ननम् ॥ १ ॥

कल्पयित्वा तु तत्तारं मनुभागविभाजिते ।
वेदांशं गर्भगेहं तु मृदपिण्डी त्रिभागया ॥ २ ॥
अलिन्द्रं त्वेकभागेन हारान्तरं शिवांशकम् ।
विन्याससूत्रयोरन्तर्मनुभागविभाजिते ॥ ३ ॥
तेष्टे(ष्वे)कं कूटविस्तारं या(शा)लादीर्घं तु तद्द्वयम् ।
एकांशं पञ्जरं व्यासं पादं हारान्तरं भवेत् ॥ ४ ॥
चतुष्कूटं चतुःशालं पञ्जरं षोडशान्वितम् ।
हारान्तरं च द्वात्रिंशत्कल्पयेदादिभूतले ॥ ५ ॥
तदूर्ध्वभूमिविस्तारं त्रयोदशविभाजिते ।
एकांशं कण्ठकूटं तु शाला तद्द्विगुणायता ॥ ६ ॥
एकांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
ऊर्ध्वभूविस्तृतं भानुभागं कृत्वाऽशसौष्ठिकम् ॥ ७ ॥
द्विगुणं कोष्ठदीर्घं तु अर्धांशं पञ्जरस्ततम् ।
पादं हारान्तरं व्यासं तेषां संख्यादिपूर्ववत् ॥ ८ ॥
तस्योर्ध्वतलविस्तारं रुद्रभागविभाजिते ।
पादपञ्जरविस्तारं शेषं पूर्ववदेव हि ॥ ९ ॥
तदूर्ध्वभूदशांशे तु व्योमांशं कूटविस्तृतम् ।
कोष्ठं तद्द्विगुणायामं शेषं हारान्तरं भवेत् ॥ १० ॥
हारान्तरं त्रिभागैकं पञ्जरव्यासमुच्यते ।
तस्योर्ध्वभूनवांशे तु शिवांशं सौष्ठिकं भवेत् ११ ॥
हारान्तरं द्विभागैकं पञ्जरव्यासमुच्यते ।
तस्योर्ध्वभूनवांशे तु शिवांशं सौष्ठिकं भवेत् ॥ १२ ॥
अत्यर्धांशं तु कोष्ठं स्याच्छेषं हारान्तरं समम् ।
हारान्तरं द्विभागैकं पञ्जरव्यासमुच्यते ॥ १३ ॥
भास्वरसंख्यारुद्रांशं सभूमिरेचयेन हि ।
अष्टांशं विभजेत्सप्ततलविस्तारमेव हि ॥ १४ ॥
कूटमेकांशमानेन मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशं हारान्तरं तदर्धकम् ॥ १५ ॥
चतुष्कूटं चतुःशालं पञ्जराष्टकसंयुतम् ।
हारान्तरं कलासंख्यां कल्पयेवं सप्तकं तलम् ॥ १६ ॥

सप्तांशं विभजेदष्टमत(ध)र्थेन तु विस्तरम् ।
मानवत्कूटं च कोष्ठं च शेषं हारान्तरं तथा ॥ १७ ॥
.... .... ...मग्निभागैकविस्तृतम् ।
मध्यभूमिविशालं तु षड्भागं विभजेत्समम् ॥ १८ ॥
मानवत्कूटं च कोष्ठं च पञ्ज(ञ्ज)रं च प्रकल्पयेत् ।
तदूर्ध्वे भूमिविस्तारमनलांशविभाजिते ॥ १९ ॥
मध्ये भद्रं तदेकांशं दण्डमास्यति(नेन) निर्गतिः ।
प्रासादस्य तु चोत्सेधं शतभागविभाजिते ॥ २० ॥
युगांशं तदधिष्ठानमष्टांशं चरणायतम् ।
पादोनवेदभागं तु मञ्चमानमुदाहृतम् ॥ २१ ॥
पादोर्ध्वं सार्धसप्तांशं मस्तरं सार्धवेदिकम् ।
धारवंशं चरणोच्चं तु सपादाग्न्यंशमञ्चकम् ॥ २२ ॥
सार्धषट्काङ्घ्रियुक्तं तु मस्तरं चाग्निभागया ।
रसांशं पाददीर्घं तु पादोनाग्न्यंशमञ्चकम् ॥ २३ ॥
पादोच्चं सार्धपञ्चांशं सार्धपक्षांशमञ्चकम् ।
पादाधिकं तु पञ्चांशं पादस्योत्सेधमुच्यते ॥ २४ ॥
सार्धपक्षांशमञ्चोच्चं पञ्चांशं पाददैर्घ्यकम् ।
पादाधिकं तु पक्षांशं मञ्चमानमुदाहृतम् ॥ २५ ॥
त्रिपादयुगांशं तु पाददैर्घ्यमुदाहृतम् ।
मस्तरोर्ध्वं द्विभागं तु सार्धवेदांशम(म)ङ्घ्रिकम् ॥ २६ ॥
पादोनद्व्यंशमञ्चः स्यात्पञ्च भागं वितर्दिका ।
तदेवोन्नतकूटादि नरकान्तमिति स्मृतम् ॥ २७ ॥
कण्ठमध्यर्धभागेन शीर्षकं सार्धवेध(द)कम् ।
पादहीनद्विभागं तु स्तूप्युत्सेधमुदाहृतम् ॥ २८ ॥
अष्टाकारं युगाश्रं तु शिखरे युगनासिका ।
पादं प्रत्यस्थनासाढ्यं नानापादपरातलम् ॥ २९ ॥
अत्यन्तकान्तमित्युक्तं सर्वदेवप्रियावहम् ।
तदेवोन्नतकोष्ठं च नतं चोन्नतसौष्ठिकम् ॥ ३० ॥
पक्षशाला तु मध्यस्थं शालादण्डेन नीव्रकम् ।
अष्टाश्रं शिखरं यण्ठं शिखरं चाष्टनासिकम् ॥ ३१ ॥

नानालंकारसंयुक्तं चतुष्कूटमिदं परम् ।
तदेव कूटकोष्ठं च नान्तरप्रस्तरं परम् ॥ ३२ ॥
कूटकोष्ठादिसर्वाङ्गं समसूत्रमथार्पितम् ।
मन्त्रपूतमिति ख्यातं विमानं सर्वकामिकम् ॥ ३३ ॥
तदेव शिखरं कण्ठवृत्ताभं परिकल्पयेत् ।
नात्र(स्त्रा) कान्तमिति ख्यातं सर्वदेवार्हकं गृहम् ॥ ३४ ॥
तदेव कर्णकण्ठानां शीर्षकं च गलं तथा ।
वृत्ताकारं प्रकर्तव्यं यत्तदीश्वरकान्तकम् ॥ ३५ ॥
दशभूभागमाख्यातं तनरत्वेकादशातलम् ॥ ३६ ॥

इति काश्यपशिल्पे दशभूमिविधानं सप्तत्रिंशः पटलः ।

---

अथाष्टात्रिंशः पटलः ।

---

रुद्रभूमिः ।

---

अथ वक्ष्ये विशेषेण रुद्रभूमिविधानकम् ।
प्रासादमानविधिना संग्रोक्तु ततोदयम् ॥ १ ॥
तिथ्यंशं विभजेत्तारं गुणांशं गर्भगेहकम् ।
पक्षांशा गृहपिण्डी स्यादलिन्द्रं त्वेकभागया ॥ २ ॥
पक्षांशं कुड्यविस्तारमलिन्द्रं तु शिवांशकम् ।
हारान्तरमथांशेन कल्पयेत्तु यथाक्रमम् ॥ ३ ॥
अलिन्द्रं वा घना भित्तिरथापि वा । (?)
प्रस्तरान्तं घनं वाऽपि तदूर्ध्वेऽलिन्द्रमेव वा ॥ ४ ॥
विन्यासभूम्योरन्तर्न्यासः पञ्चांशभाजिते ।
शिवांशं कर्णकूटं स्यात्पक्षशाला द्विभागया ॥ ५ ॥
मध्यशालाऽग्निभागा स्यादर्धांशं म(प)ञ्जरं भवेत् ।
हारान्तरं च तत्तुल्यं कल्पयेत् आदिभूतले ॥ ६ ॥
तदूर्ध्वभूविशाले तु मनुभागविभाजिते ।
शिवांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ॥ ७ ॥

शेष हारान्तरं स्यात् त्रिभागैकमपञ्जरम् ।
पञ्जरं कूटकोष्ठं च सख्या वै भागिवैव तु ॥ ८ ॥
तदूर्ध्वभूमिविस्तारे रुद्रांश तु द्विभाजिते ।
पञ्जरं कूटकोष्ठं च भागेनैव प्रकल्पयेत् ॥ ९ ॥
तस्योर्ध्वभूमिविस्तारे दशभागविभाजिते ।
कूटं चैव तु कोष्ठं च तत्त्यामान च पूर्ववत् ॥ १० ॥
तदूर्ध्वभूनवांशे तु कूटव्यास शि ागरम् ।
अल्पघोना तु कोष्ठाया(ना) शेषं हारान्तरं भवेत् । ११ ॥
हारान्तर त्रिभागैक पञ्जरव्यासमुच्यते ।
भागूर्ध्वकूटाद्यसख्याः स्युः कल्पयेदल्पविक्रमः ॥ १२ ॥
अष्टांश विभजेद्दिष्टभूमेश्चैव तु विस्तरम् ।
कूटविस्तारमेकांश म े शाला द्विभागया ॥ १३ ॥
पञ्जर व्यासमेकांश हारान्त च तदर्धकम् ।
चतुष्कूट चतु शाल पञ्जराष्टकसयुतम् ॥ १४ ॥
हारान्तर त्वष्टा सख्या प्रोच्यतेऽष्टाङ्गानितौ(ते) ।
नवभूमिविशाल तु सप्तधा विभजेत्सप्तम् ॥ १५ ॥
कूटव्यासमथांशेन कोष्ठं त्रि द्विभागया ।
शेष हारान्तर स्यात तत्त्रिभागेन पञ्जरम् ॥ १६ ॥
दशभूमिविशाल तु रसभागविभाजिते ।
भागत्कूटं च कोष्ठं च पञ्जर च प्रकल्पयेत् ॥ १७ ॥
प्रथमा(एका)दिपक्षभूम्यन्त भद्रपञ्जरसयुतम्
पञ्जर भूपरिष्टात्तु भद्रं वा भद्रपञ्जरम् ॥ १८ ॥
ऊर्ध्वभूमिविशाल तु गुणभागविभाजिते ।
मध्यभद्र तदेकांशं दण्डमानेन निर्गतिः ॥ १९ ॥
प्रासादस्य तु चोत्सेध शतांशं च त्रयोदश ।
ह त्वा सार्धं युगांश तु धरातलमुदाहृतम् ॥ २० ॥
पादोच्च सार्धतत्त्वांशं मञ्चमान युगांशकम् ।
तत्त्वांश चरणायाम पादोन वंशु(च युगांशकम्) ॥ २१ ॥
चरण सार्धसप्तांश मस्तर सार्धवह्निकम् ।
सप्तांशं पाददीर्घ [illegible] गलाद्याग्रमप्रकम् ॥ २२ ॥

अर्धाधिकं षडंशं तु पादोच्चाग्निस्तु मञ्चकम् ।
षडंशं पादतुङ्गं तु पादोनत्रिसमञ्चकम् ॥ २३ ॥
सत्रिपादं तु भूतांशं पाददीर्घमुदाहृतम् ।
अर्धाधिकद्विभागं तु प्रस्तरस्योदयं भवेत् ॥ २४ ॥
सपादपञ्चभागं तु पादोदयमुदाहृतम् ।
सार्धपक्षांशमञ्चोच्चं भूतांशं चरणोदयम् ॥ २५ ॥
सपादपक्षभागं तु मञ्चमानमुदीरितम् ।
पादोनपञ्चभागं तु चरणोदयमीरितम् ॥ २६ ॥
मञ्चमानं द्विभागं स्यात्सार्धवेदांशमङ्घ्रिकम् ।
सत्रिपादाग्निरंशं तु प्रस्तरस्य समुच्चकम् ॥ २७ ॥
दस्रांशं वेदिकामानं कण्ठोच्चं सार्धभागया ।
अर्धाधिकं तु वेदांशं शिखरोदयमिष्यते ॥ २८ ॥
पादोनं तु द्विभागं स्यात्स्तूपेरुदयमिष्यते ।
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ॥ २९ ॥
शिखरे तु चतुर्दिक्षु महानासीसमन्वितम् ।
पदं मत्यरूपनासाढ्यं ब्रह्मकान्तं तदुच्यते ॥ ३० ॥
सौष्ठिकं सान्तरं मञ्चं विजयं तदुदाहृतम् ।
तदेव नतकूटं च कोष्ठानञ्चा(चान्ताः कोष्ठाः)समञ्चकाः ॥३१॥
सर्वाहिकमिदं स्यात्तं सर्वदेवार्हकं परम् ।
तदेव शिखरं कण्ठं वृत्तमष्टाश्रवेदिका ॥ ३२ ॥
इन्द्रकान्तमिति ख्यातं सर्वदेवार्हकं परम् ।
तदेव मध्यभद्राढ्यं कूटकोष्ठौ समौ ततौ ॥ ३३ ॥
समश्रं वा विमश्रं वा कूटशाला च पञ्जरम् ।
गणिकानालकं प्रोक्तं ब्रह्मविष्णुशिवार्हकम् ॥ ३४ ॥
तदेव शिखरं कण्ठं वृत्तमष्टाश्रवेदिकम् ।
इन्द्रकान्तमिति ख्यातं विमानं सर्वदेविकम् ॥ ३५ ॥
तदेव कर्णकूटं तु भद्रयुक्कर्णकूटकम् ।
तदेव सौष्ठिकानां तु नीपैकं मण्डपाकृति ॥ ३६ ॥

नाम्ना कर्णविशालं तु सर्वदेवप्रियं गृहम् ।
एवमेकादशभूमिलक्षणं परिकीर्तितम् ॥ ३९ ॥

इति काश्यपशिल्पे रुद्रभूमिविधानमष्टात्रिंशः पटलः ।

---

अथैकोनचत्वारिंशः पटलः ।

---

## भानुभूमिः ।

---

अथ वक्ष्ये विशेषेण भानुभूमिविधिं परम् ।
हर्म्यविस्तारतुङ्गं च प्रोक्तं प्रासादमानकम् ॥ १ ॥
सप्तधर्मभागं तु कृत्वा प्रासादविस्तरम् ।
तदेव सौष्ठिकानां तु शीर्षकं कुण्डलाकृति ॥ २ ॥
भूताङ्कं गृह(गर्भ)गेहं तु पक्षांशं गृहपिण्डिका ।
अलिन्द्रं स्वैकभागेन कुड्यमशा(र्धा)शमानतः ॥ ३ ॥
अलिन्द्रं तु शिवांशं स्याद्द्वारभागेन कल्पयेत् ।
अथवा गर्भगेहं तु गुणांशेनैव कारयेत् ॥ ४ ॥
गर्भगेहस्य तुल्यं स्याद्गृहपिण्ड्यास्तु विसृ(स्तृ)तम् ।
शेषं प्रागिव कर्तव्यमलिन्द्रं कुड्यघनारया ॥ ५ ॥
विन्याससूत्रयोरन्तः सप्तदशविभाजिते ।
गुणांशं मध्यशाला स्यात्कर्णकूटं शिवांशकम् ॥ ६ ॥
तयोर्मध्ये तु पक्षांशं शालादिव्यमुदाहृतम् ।
कूटकोष्ठान्तरे चैव कोष्ठयोरन्तरेऽपि ॥ ७ ॥
शिवांशं पञ्जरव्यासं कर्णकूटमिवाकृतिम् ।
हारान्तरं तदूर्ध्वांशं क्षुद्रपञ्जरसंयुतम् ॥ ८ ॥
एवमादितलं कुर्यादूर्ध्वे रुद्रतलोक्तवत् ।
सप्तविंशं च तं भागं कृत्वा हर्म्योदयं द्विज ॥ ९ ॥
धा(ध)रातलोच्चं भूतांशं नवांशं चरणोदयम् ।
सार्धवेदां(वेदा)शं मञ्चोच्चं शेषं रुद्रतलोक्तवत् ॥ १० ॥

एवं भानुतलं प्रोक्तं त्रयोदशतलं शृणु ॥ ११ ॥

इति काश्यपशिल्पे भानुभूमिविधानमेकोनचत्वारिंशः पटलः ।

---




अथ चत्वारिंशः पटलः ।

---

त्रयोदशभूमिः ।

---

अथ वक्ष्ये विशेषेण त्रयोदशतलं परम् ।
तस्य विस्तारमानं स्य(तु) प्रासादमानवद्भवेत् ॥ १ ॥
एकोनविंशदं[शं] तु कर्तव्यं सदनं स्त(त)त्म् ।
गुणांशं गर्भगेहं तु पक्षांशं गृहपिण्डकम् ॥ २ ॥
अलिन्द्रं च शिवांशं स्याद्भित्तिः स्याद्गुणतं समम् ।
अलिन्द्रं त्वेकभागेन भित्तिव्यासं शिवांशकम् ॥ ३ ॥
व्योमभागमलिन्द्रं स्याद्धराव्यासं च तत्समम् ।
विन्याससूत्रयोरन्तरेकोनविंशदंशके ॥ ४ ॥
शिवांशं कर्णकूटं स्यान्मध्ये शालाऽग्निभागया ।
पक्षशाला च तत्तुल्यमेकांशं पञ्जरस्य तु ॥ ५ ॥
हारान्तरमथार्धांशं क्षुद्रपञ्जरसंयुतम् ।
पञ्जरं कर्णकूटाभं तस्या(दा)यक्षुद्रपञ्जरम् ॥ ६ ॥
एवमादितलं प्रोक्तमूर्ध्वं भानुतलोक्तवत् ।
चत्वारिंशद्द्वयाधिक्ये शतांशे सदनोत्सुके ॥ ७ ॥
पञ्चांशं तदधिष्ठानं दशांशं चरणोदयम् ।
भूतांशं मञ्चमानं स्याच्छेषं द्वादशभूमिवत् ॥ ८ ॥
त्रयोदशतलं ह्येवं कलाभूमिमथोपरि ॥ ९ ॥

इति काश्यपशिल्पे त्रयोदशभूमिविधानं नाम चत्वारिंशः पटलः ।

---

अथैकचत्वारिंशः पटलः ।

---

## षोडशभूमिः ।

---

अथ षोडशभूमिस्तु वक्ष्यते द्विजोत्तम ।
एवं क्रमेण संकल्प्य पञ्चालिन्द्रसमन्वितम् ॥ १ ॥
पञ्चहारसमायुक्तं गृहपिण्डे समानकम् ।
गर्भगेहं रमांशं च वेदांशं गृहपिण्डिका ॥ २ ॥
शेषं पूर्ववदुद्दिष्टमलिन्द्रादि द्विजोत्तम ।
एकद्वित्रिचतुष्पञ्च भूमौ चाऽथ धरातले ॥ ३ ॥
देवतास्थापनं कुर्यात्षोडशस्थलकर्णके ।
देवतास्थापनं भूमिषोडशलाञ्छनं कुरु ॥ ४ ॥
चाद्योऽलिन्द्रे चि(चालिन्द्रे अ)न्धकारं घनमत्यन्तरं कुरु ।
अलिन्द्रजलतरणादाच्छादिनं वा तुलादिभिः ॥ ५ ॥
प्रस्तरान्तर्गतं चाऽथ प्रान्ते वालात्तु तद्गतम् । .
व्यासे सवेदत्रिंशांशे कर्णकूटं शिवांशकम् ॥ ६ ॥
हर्म्यमध्ये तु वेदांशं शालायाममुदाहृतम् ।
तयोर्मध्ये तु पञ्चांशे स्यात्तु रं(शेऽष्टतुङ्गं) परिकल्पयेत् ॥ ७ ॥
तयोर्मध्ये शिवांशेन पञ्जरं कर्णकूटवत् ।
हारान्तरं तयोर्मध्येद(ध्ये अ)ंशेनैव कल्पयेत् ॥ ८ ॥
एवं हि कल्पवेदादिभवौ सान्धाष्टविंशतिः । -
कर्णकूटं तु वेदांशं (दांश) द्वात्रिंशं पञ्जरं भवेत् ॥ ९ ॥
सोऽष्टषष्टिमस्थाः स्युर्हा(मध्यं स्याद्धा)रान्तरं द्विजोत्तम ।
गर्भादितलं स्यात तद्धि द्वात्रिंशदष्टके ॥ १० ॥
द्विभागं मध्यशाला स्याच्छेषं पूर्ववदाचरेत् ।
द्वितीयं हीनमास्थान तृतीयमधुनोच्यते ॥ ११ ॥
त्रिंशदंशद्विभागं तु कृत्वा गापञ्चि(नं त्रि) भूमिकम् ।
कर्णकूटस्य पार्श्वस्थं पञ्जरं त्र्यर्धभागया ॥ १२ ॥
हारान्तरं तदर्धं स्याच्छेषं त्रितयभूमिवत् ।
चतुर्भूमिविशालं तु साष्टाविंशतिभागया ॥ १३ ॥

कर्णकूटसमीपस्थे शालायास्तु द्विपार्श्वयोः ।
एकांशं पञ्जरन्यासं शेषं भागेन कल्पितम् ॥ १४ ॥
पञ्चमे तलविस्तारे षड्विंशत्यंशभाजिते ।
मध्ये शाला तु वेदांशं व्योमांशं कर्णकूटकम् ॥ १५ ॥
तयोर्मध्यस्त(स्थ)शाला च तयोर्मध्ये च कोष्ठकम् ।
प्रत्येकं च द्विभागेन कल्पयेत्तत्त्ववित्तमः ॥ १६ ॥
तयोर्मध्येऽर्धभागेन पञ्जरं कर्णकूटकम् ।
हारान्तरं तदर्धेन तेषां संख्याऽऽदिभूमिवत् ॥ १७ ॥
षष्ठं च भूमिविस्तारं चतुर्विंशतिभाजिते ।
मध्ये कोष्ठं द्विभागेन शेषं पूर्ववदेव हि ॥ १८ ॥
सप्तभूमि(मे)स्तु विस्तारं द्वाविंशत्यंशकं भवेत् ।
शिवांशं कर्णकूटं तु मध्यशाला द्विभागया ॥ १९ ॥
तयोर्मध्ये शिवांशेन क्षुद्रकोष्ठं प्रकल्पयेत् ।
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् ॥ २० ॥
अर्धांशं पञ्जरव्यासं तदर्धं हारगोत्तरम् ।
पञ्जरं कूटकोष्ठं च संख्या च प्रागिवैव तु ॥ २१ ॥
अष्टमं भूमिविस्तारं विंशत्यंशद्वि(त्रि)भाजिते ।
व्योमांशं कर्णकूटं स्यान्मध्ये कोष्ठं द्विभागया ॥ २२ ॥
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् ।
अर्धांशं पञ्जरव्यासं तदर्धं हारगोत्तरम् ॥ २३ ॥
पञ्जरं कूटकोष्ठं च संख्या स्यात्प्रागिवैव तु ।
अष्टमं भूमिविस्तारं विंशत्यंशद्वि(त्रि)भाजिते ॥ २४ ॥
व्योमांशं कर्णकूटं स्यान्मध्ये कोष्ठं द्विभागया ।
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् ॥ २५ ॥
तयोर्मध्ये शिवांशेन क्षुद्रकोष्ठं प्रकल्पयेत् ।
अर्धं भागेन कर्तव्यं तेषां संख्यादि पूर्ववत् ॥ २६ ॥
नवभूमिविशाले तु त्रिःषडंशविभाजिते ।
शिवांशं कर्णकूटं स्यान्मध्ये शाला द्विभाजिता ॥ २७ ॥
तयोर्मध्येऽर्धभागेन पञ्जरं परिकल्पयेत् ।
तदर्धार्धेनैव तत्पार्श्वे तयोहा(योर्हा)रान्तरं भवेत् ॥ २८ ॥

तत्पार्श्वयोर्द्विभागं स्यात्कोष्ठं कुर्याद्विशेषतः ।
कूटकोष्ठान्तरं चैव कोष्ठयोरन्तरेऽपि च ॥ २९ ॥
पञ्जरं कल्पयेद्धीमान् यांशेनैव सुव्रत ।
द्वारान्तरं तदर्धांशं कल्पयेत्कल्पवित्तमः ॥ ३० ॥
त्रिंशत्कोष्ठं चतुष्कूटं पञ्जरं भानुभिर्द्वयम् ।
अ(क)ल्पयेवं नवभूमौ तु दशभूमिम(र)थोच्यते ॥ ३१ ॥
दशभूमेस्तु विस्तारं षोडशांशविभाजिते ।
कर्णकूटं शिवांशं स्यात्सप्त पञ्जरस्तरम् ॥ ३२ ॥
शालायामं द्विभागं स्यादर्धांशं द्वारगोचरम् ।
भानुशालाचतुष्कूटं कल्पपञ्जरसंयुतम् ॥ ३३ ॥
द्वारान्तरं तु द्वात्रिंशत्कल्पयेद्दशमे तले ।
एकादशतलव्यासं मनुभागविभाजिते ॥ ३४ ॥
शिवांशं कर्णकूटं तु मध्ये शाला द्विभागया ।
तयोर्मध्यस्थशालानां गुणांशं परिकल्पयेत् ॥ ३५ ॥
अर्धांशं पञ्जरव्यासं तस्यार्धं द्वारगोचरम् ।
चतुष्कूटार्कशाला च पञ्जरं षोडशान्वितम् ॥ ३६ ॥
द्वारान्तरं च द्वात्रिंशत्कल्प्यं रुद्रतलेऽपि च ।
भानुभूमिविशालं तु भानुभागविभाजिते ॥ ३७ ॥
पञ्जरं कूटकोष्ठं च संख्या रुद्रतले तु वत्(वा) ।
सर्वेषामपि कोष्ठानां पक्षांशं मविधीयते ॥ ३८ ॥
त्रयोदशतलव्यासं दशभागविभाजिते ।
कर्णकूटं शिवांशेन मध्ये शाला द्विभागया ॥ ३९ ॥
तयोर्मध्येऽर्कभागेन पञ्जरं कर्णकूटवत् ।
द्वारान्तरं च तस्यार्धं संख्या द्वादशभूमिवत् ॥ ४० ॥
चतुर्दशतलव्यासो वसुभागविभाजिते ।
शिवांशं कर्णकूटं स्यान्मध्ये शाला द्विभागया ॥ ४१ ॥
अर्धांशं पञ्जरव्यासं तयोर्मध्ये द्वारगोचरम् ।
चतुष्कूटं चतुःशालं पञ्जरं षोडशान्वितम् ॥ ४२ ॥
द्वारान्तरं चतुर्विंशत्कल्प्यैवं तु म(ग)नुत्तमम् ।
त्रिःपञ्चभूमिषड्भागं विस्तारं द्वि(त्रि)भजेत्सप्तम् ॥ ४३ ॥

कर्णकूटं तु व्योमांशं मध्ये शाला द्विभागया ।
हारान्तरं तु शर्यंशं युगपञ्जरसंयुतम् ॥ ४४ ॥
अधोपोर्ध्वेतलव्यासो वेदभागविभाजिते ।
द्विभागविस्तृतं दण्डमानं नीवं तु मध्यमे ॥ ४५ ॥
कृत्वा प्रासादतुङ्गं तु द्विभागेन शतद्वयम् ।
धरातलं तु सप्तांशं चरणं च त्रयोदश ॥ ४६ ॥
सार्धपञ्च तु मञ्चोच्चं पादोच्चं भानुसंख्यया ।
प्रस्तरोच्चं तु षड्भागं रुद्रांशं चरणोदयम् ॥ ४७ ॥
सार्धभूतांशमञ्चं स्याद्दशांशं चरणोदयम् ।
भूतांशं मञ्चमानं तु नवांशं चरणोदयम् ॥ ४८ ॥
सार्धवेदांशपञ्चोच्चं कल्पयेत्कल्पवित्तमः ।
पादोच्चं सार्धवस्वंशं मञ्चमानं युगांशकम् ॥ ४९ ॥
वस्वंशं चरणोच्चं तु मत्व(ञ्च)मानोदितं युत(ग)म् ।
चरणं सार्धसप्तांशं प्रस्तरं सार्धवन्ति(ह्नि)कम् ॥ ५० ॥
सप्ताग्निपाददीर्घं तु पादाधिक्याग्निमञ्चकम् ।
अर्धाधिकं षडंशं तु पादोनाग्निस्तु मञ्चकम् ॥ ५१ ॥
षडंशं पादमानं तु पादोनाग्न्यंशमञ्चकम् ।
अर्धाधिकं तु भूतांशं पाददैर्घ्यमुदाहृतम् ॥ ५२ ॥
अर्धाधिकं द्विभागं तु प्रस्तरस्योदयं भवेत् ।
सपादपञ्चभागं तु पाददीर्घमुदाहृतम् ॥ ५३ ॥
सार्धपक्षांशमञ्चोच्चं भूतांशं चरणायतम् ।
सपादपक्षभागं तु मञ्चमानमुदीरितम् ॥ ५४ ॥
पादोनपञ्चभागं तु चरणोदयमीरितम् ।
पञ्चभागं द्विभागं स्यात्सार्धवेदांशमङ्घ्रिकम् ॥ ५५ ॥
सत्रिपादाशिवांशं तु प्रस्तरस्य समुच्छ्रयम् ।
शम्यं(श्यं)शं वेदिकामानं कण्ठोच्चं तद्द्विभागया ॥ ५६ ॥
अर्धाधिकयुगांशं तु शिखरोदयमीरितम् ।
सपादांशं शिखामानं कल्पयेत्तु क्रमेण च ॥ ५७ ॥
हेमादि स्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ।
शिखरे तु चतुर्दिक्षु महानासीसमन्वितम् ॥ ५८ ॥

पादं मत्यल्पनासाढ्य अर्धमन्त्रान्मुदाहृतम् ।
तदेव सोपान मञ्च सोष्ठिकोप्र कोष्ठरम् ॥ ५९ ॥
सारस्वतमिदं स्यात्तु शिवप्रियकरं गृहम् ।
तदेव नतकूटं च कोष्ठे नतसमन्वकम् ॥ ६० ॥
प्रादेशमिति विख्यातं सर्वेषु(वैस)मृद्धिकारणम् ।
तदेव शिखरं कण्ठ यस्त्वर्थं परिकल्पयेत् ॥ ६१ ॥
शिखरे'ष्टौ(ष्ट)महानासीयुक्त तच्छोरर भवेत् ।
तदेव मध्यभद्राढ्य कूटकाष्टौ समोन्नतौ ॥ ६२ ॥
समश्रो वा ध्यमश्रो वा कूटशालो द्विजोत्तम ।
पार्वतीकमिदं ख्यातं मम प्रीतिकरं भवेत् ॥ ६३ ॥
तदेव शिखर कण्ठं वृत्तमष्टाश्रवदिरम् ।
वदिघाश्रैन वृत्ता वा वृत्ताकारमटाऽपि वा ॥ ६४ ॥
सुखाभत्रमिदं ख्यातं शङ्करस्य प्रियावहम् ।
पञ्जरं कूटकोष्ठं च शिखरं च घटं तथा ॥ ६५ ॥
एवमादीनि सर्वाणि नागराणुक्त कुरु ।
अनेनैवाथवा कुर्यादेकानेकक(कादि)भूमया(य.) ॥ ६६ ॥
यत्नेल(-नस्त)म्भेषु कर्तव्य तल तस्मादि(द)मञ्चकम् ।
तथाएस्योचितव्यास तुङ्गकुड्य च गर्भकम् ॥ ६७ ॥
कर्तव्य विधिना तेन गण्डा(घण्टा)लङ्कारसयुतम् ।
सालिन्द्र सदनार्थं तु सोपान रोहणाय वै ॥ ६८ ॥
तत्र तत्रोचित कुर्याच्च लाभिङ्करताङ्गुपे ।
तस्याग्रे मण्डप कुर्यादनेकतल तु वा ॥ ६९ ॥
प्रायु(गु)क्तविधिना कुर्यात्सर्वालङ्कारसयुतम् ।
करालमुद्रिद्गुल्पासरूपचित्र(चैथिचाकर्ष)णकर्मकृत् ॥ ७० ॥
नानाचित्रविचित्र तु कर्तव्य विधिचान्वितम् ।
एव यः कुरुते हर्म्यं स्वशक्त्या मोक्तय तु(नत)वा ॥ ७१ ॥
इहैव धनवान्श्रीमान्पुत्रपौत्रसमन्वितः ।
दारीशमादिभिश्चान्ते स्वन्तान्ते मुदाऽस्ति-वह ॥ ७२ ॥

सोनेककुलजालं च या(पा)रयेत्तु मुद्रा च मा(ना) ॥ ७२ ॥

इति काश्यपे षोडशभूमिविधानमेकचत्वारिंशः पटलः ।

---

अथ द्विचत्वारिंशः पटलः ।

---

## मूर्धेष्टकाविधानम् ।

---

अथ वक्ष्ये विशेषेण मूर्धेष्टकाविधिं परम् ।
शिखरस्योदयार्धान्ते महानास्यवसानके ॥ १ ॥
शालि(शक्ति)ध्वजावसाने वा मूर्धेष्टकां तु विन्यसेत् ।
यावत्स(थ)शसमाप्तं तु तदा मूर्धे द्विजोऽष्टपः(ष्टका द्विज) ॥ २ ॥
एकाद्यनेकभूमानां हर्म्याणां तु विशेषतः ।
इष्टकाव्यासमायामं घनं चाद्येष्टकामिव ॥ ३ ॥
प्रासादस्याग्रतो देशे सौम्ये वायौ च गोपुरे ।
नवाष्टसप्तषट्पञ्चहस्तं वा मण्डपं ततम् ॥ ४ ॥
तद्विस्तारसमायामं चतुरश्रं समं कुरु ।
मण्डपं वा प्रपा वाऽथ षोडशास्तम्भसंयुतम् ॥ ५ ॥
चतुर्द्वारसमायुक्तं चतुस्तोरणसंयुतम् ।
पट्टं च नवं चैव वितानध्वजसंयुतम् ॥ ६ ॥
मुक्तास्रग्दर्भमालाभिरलंकृत्य विशेषतः ।
मण्डप(प)स्य त्रिभागैका मध्ये कृत्वा तु वेदिकाम् ॥ ७ ॥
वेदाङ्गुलोन्नतां देशमुपवेदियुगत्रयम् ।
शेषं वेदिविशालं तु भानुमात्रं तदुन्नतम् ॥ ८ ॥
भानुद्वयाङ्गुलोच्चं तु दर्पणोदरसंनिभम् ।
दह चाग्नि(स्थ)ण्डिलानि चतुरश्राणि कल्पयेत् ॥ ९ ॥
अथवा वालुकैः स्थूलैः ... .... .... ।
स्थण्डिलं कारणैर्द्याद(कारयेद्धान्य)द्रोणैश्च आलिभिः॥१०॥
तदर्धैस्तण्डुलस्तुभ्यं (लैस्तूप्यं) तदर्धैश्च निलैरपि ।
लाजैश्चैव परिस्तीर्य श्वेताब्जं परिकल्पयेत् ॥ ११ ॥

नानापुष्पैः कुशैर्दर्भैः परिस्तीर्य विचक्षणः ।
मनोन्मनीकर्णिकायां तद्दलेषु च्या[दन्या]यादि शक्तितः ॥ १२ ॥
गन्धपुष्पादिभिर्यष्ट्वा सप्तमात्रैर्विशेषतः ।
लोहजं दारुजं वाऽथ स्तूपिदण्डं च कारयेत् ॥ १३ ॥
आसनं खादिरं वाऽथ तिन्तिणीसारमेव वा ।
मधूरं पनसण्डूरं भवेत्तद्दारुजत्तमम् ॥ १४ ॥
हेममुद्रितं ताम्रं वा त्रपुसंमिश्रमेव वा ।
ऊर्ध्वभूम्यधितुङ्गं तु स्तूपिदण्डायतं भवेत् ॥ १५ ॥
मूर्ध्नि शैलोपरिष्टात्तु स्तूप्यन्तं वा तदायतम् ।
ऊर्ध्वभूम्यन्त(मेश्र) विस्तारं स्तूपिमूलविशालकम् ॥ १६ ॥
तस्याग्रमङ्गुलव्यासं मूलादारभ्य क्रमात्कृ(कृ)शम् ।
तुङ्गाणात्समं(यामात्समा)शं तु मूले चतुरश्रमाचरेत् ॥ १७ ॥
वंशं म यसमं स्वग्रे वृत्ताकारं प्रकल्पयेत् ।
चतुरश्रोपरिष्टात्तु सर्वं वृत्तमथापि वा ॥ १८ ॥
कर्तव्यं तस्य मूले तु शिलापान्तु(पानं तु) योजयेत् ।
दण्डमूलसमव्यासं दण्डं दण्डाग्रयोरपि ॥ १९ ॥
योजयेल्लोहजं बुधः ।
प्रक्षाल्य पञ्चगव्यैस्तु दण्डं चैवेष्टकाऽपि च ॥ २० ॥
नर्णिकायां न्यसेद्दण्डं कुमादीकु(क्रमादीश)महादिशि ।
चत्वारस्त्वेष्टका(चतस्रस्त्विष्टकाः)स्थाप्याः शिलादिस्तम्भगैर्जलैः ॥ २१ ॥
पृथिव्यादिपरीज्ञानी दण्डं तु विलिखेद्बुधः ।
शान्तिदपट्क्रमाद्धर्मगन्धपुष्पादिभिर्यजेत् ॥ २२ ॥
स्वर्णरजतताम्रैर्वा सूत्रैः कार्पासकैस्तु वा ।
पीतुरं बन्धयेद्धिम स्वस्वबीजमनुस्मरन् ॥ २३ ॥
ब्रह्म विष्णुं च रुद्रं च ईश्वरं च सदाशिवम् ।
वर्षे(शैले)ष्टकादिदण्डान्तमधिदेवान्क्रमान्न्यसेत् ॥ २४ ॥
नैवेद्यं दापयेद्देवं ताम्बूलं च निवेदयेत् ।
प्रत्येकं नववस्त्रेणाऽऽच्छादयेत्कूर्चसंयुतम् ॥ २५ ॥
अभितः कलशा(ल्शा)नष्टौ सकूर्चान्सापिधानकान् ।
गन्धा(न्धा)म्बुपूरि(तान्) नवरत्नपुण्यसमन्वितान् ॥ २६ ॥

फलपल्लवसंयुक्तानष्टौ विद्येश्वराधिपान् ।
संस्थाप्य स्वस्वमन्त्रेण नैवेद्यान्तं समर्चयेत् ॥ २७ ॥
ततो होमः प्रकर्तव्यो ह्यग्न्याधानादिकं कुरु ।
समिधाज्यचरुलाजैर्यवान्सर्षादिभिर्वु(र्चर्वाज्यलाजैश्च यवैः सद्ध-
त्रिधा यु)भः ॥ २८ ॥
शतं वा शतमर्धं वा प्रत्येकं जुहुयात्क्रमात् ।
परब्रह्मपडङ्गैश्च क्षुरिकाबीजमुख्यरै(कैः) ॥ २९ ॥
आज्येन जुहुयाद्धोमान्प्रत्येकं पञ्चविंशतिम् ।
जयादिराष्ट्रा(नाऽभ्याता)नैश्च राष्ट्रभिर्धैव(भृद्भिश्च) होमयेत् ॥
ब्रह्मादिबीजमन्त्रैस्तु ह्यवाप्या(हुत्वाऽऽज्या)नि तथाऽऽहुति(तीः) ।
एवं जागरणं रात्रौ प्रभाते विपुले शुभे ॥ ३१ ॥
आचार्य(र्यो)मूर्ति वै(भिः)सार्धं स्नानं कृत्वा विधानतः ।
नव स्वधरोष्णीषो(नववस्त्रोष्णीषधरो) भस्मरुद्राक्षधारकः ॥ ३२ ॥
एवं यज्ञोपवीताढ्यः सितमाल्यानुलेपनः ।
हेमाङ्गुलीयकटककुण्डलाद्यैरलंकृतः ॥ ३३ ॥
वस्त्रयुग्मादिसंयुक्तं भूषणैर्भूषि(ष्य)शिल्पिनम् ।
आचार्यो मण्डपं गत्वा दण्डेनाष्टघनानलान् ॥ ३४ ॥
गन्धपुष्पादिभिर्यष्ट्वा होमं कृत्वा जयादिभिः ।
स्विष्टप्रेतिमन्त्रेण पूर्णाहुतिं समाचरेत् ॥ ३५ ॥
स्थित(र)राश्यु(श्यु)दये विशेषपराश्युदयेऽपि वा ।
मीनो(ने)वा शुक्रसंयुक्ते तलोद्रि(तथा द)ष्टेऽथवा पुनः ॥ ३६ ॥
आचार्यशिल्पिभिश्चैव ने ह्यन्त्वानुग्रहोपरि ॥(।)
पुण्याहवाचनं घृष्य मूर्न्येष्टकां निधापयेत् ॥ ३७ ॥
इष्टकास्तूपिकल्पश्च ब्राह्मधामप्रदक्षिणे ।
नानालंकारसंयुक्ताः कृत्वा दर्भेऽनुलेपयेत् ॥ ३८ ॥
उत्तराभिमुखो भूत्वा आचार्यो मन्त्र(र्योऽनन्य)चेतसा ।
ब्रह्म विष्णुं च रुद्रं च ईश्वरं च सदाशिवम् ॥ ३९ ॥
विचिन्त्य स्वस्वमन्त्रैस्तु चतस्रो हीष्टका न्यसेत् ।
पृथिव्यात्मकं कर्म तु सौम्याग्रं शांकरेषु च ॥ ४० ॥

सुपे स्थाने यथा(त्वा)ग्नेयमा,श्रित्य भागग्रं रत्न(रत्न)म्भसात्मकम् ।
सुपे नैर्ऋत्यमाश्रित्य सौम्याग्रं सलिलात्मकम् ॥ ४१ ॥
सुपे वि(वा)यव्यमाश्रित्य भागग्रं मरुतात्मकम् ।
एवं क्रमान्न्यसेद्(श्मा)त् सुनिच्छिद्रं समाचरेत् ॥ ४२ ॥
माणिक्यमरतकं(कतं)चैव वैडूर्यं त्विन्द्रनीलकम् ।
मौक्तिकं स्फटिकं चैव पद्मरागं प्रवालकम् ॥ ४३ ॥
वज्रं मध्ये दिपु(शि)स्थाप्यं शक्तिबीजमनुस्मरन् ।
तदूर्ध्वे स्थापयेत्स्तूपिदण्डमीशानमन्त्रतः ॥ ४४ ॥
कलशस्योदकैः प्रोक्ष्य दण्डं चाश्म(पाषाण)पञ्चकम् ।
सप्तमूर्तीः समभ्यर्च्य गन्धैः पुष्पैश्च धूपकैः ॥ ४५ ॥
गलाम्भसा च सुदृढं स्थापयेद्वास्तुनिश्चलम् ।
ततोऽधक्षेपशिखरं कर्तव्यं स्थो(चो)क्ता तथा ॥ ४६ ॥
शिखरोपरिष्टाच्च स्तूपिं प्रागुक्तविधिना कुरु ।
कराला़दींस्ततः कुर्यान्निश्चलं सुदृढं यथा ॥ ४७ ॥
स्वर्णैर्वा रजतैर्वाऽथ ताम्रैर्वाऽऽच्छादयेद्दृढम् ।
काञ्च(गां च) तत्कृतार्थे च मा(आ)चार्याय प्रदापयेत् ॥ ४८ ॥
दक्षिणां दापयेत्तस्मै दशनिष्कं हिरण्मयम् ।
यागोपकरणं सर्वमाचार्याय च दापयेत् ॥ ४९ ॥
शिल्पिनो भो(नः पू)जयेत्पश्चाद् गोभूमिकाञ्चनादिभिः ।
एवं यः कुरुते मर्त्यः सोऽयाति(सयाति)शुभदं फलम् ॥५०॥

इति श्रीकाश्यपशिल्पे मूर्धेष्टकाविधानं द्विचत्वारिंशः पटलः ।

---

अथ त्रिचत्वारिंशः पटलः ।

---

प्राकारः ।

---

अथ वक्ष्ये विशेषेण प्राकाराणां च लक्षणम् ।
रक्षार्थं शोभनार्थं च शाला(या)स्तु(या)सदनस्य च । १ ॥

प्रासादस्य विशालार्ध(र्धे)गुणभागेन(क)मेव वा।
चतुर्भागैकभागं वा अन्तर्मण्डलविस्तृतम्॥ २॥
अन्तर्हारविशालं तु तद्द्वाभ्यां द्विगुणं हि तत्।
मध्यहारविशालास्तु(लं तु)वाह्यान्तं मण्डलत्रयम्॥ ३॥
मध्यादेस्तु विशालं च बाह्ये त्वादिचतुर्गुणम्।
महामर्यादिविस्तार आद्यैः पञ्चगुणो भवेत्॥ ४॥
प्रासादचरणाद्विप्र छोत्रा(द्धोमा)द्वा प्रथमस्य तु।
प्रथमाद्द्वितीयनीवं तु द्वितीयात्तृतीयनीव्रकम्॥ ५॥
तृतीयाच्चतुर्थं निष्क्रान्तं तस्मान्नीव्रं च पञ्चमम्।
प्राकारं प्रतिनिष्क्रान्तं तस्मान्नीव्रं तु पञ्चमम्(तन्नीव्रं कुड्यसीमकम्)॥ ६॥
कुड्यमध्यमा(ध्याव)सानं वा कुड्यपार्श्वं तथापि वा।
अथवा शेषविमाणां नीव्रं होमाद्विधीयते॥ ७॥
प्रथमं प्रकृतेस्तुल्यं तस्माद्गुणाद्गुल्लं नतम्।
द्वितीयार्धं तु पञ्चान्तं तद्वदेव नतं क्रमात्॥ ८॥
कल्पनं(ल्पं वै)हर्म्यमानेन हस्तमानमथोच्यते।
त्रिपञ्चसप्तहस्तेन प्रथमं त्रिविधं भवेत्॥ ९॥
नवैकादशहस्तं च त्रयोदशं द्वितीयकम्।
त्रिपञ्चसप्तदशहस्तं मै(तये)कोनविंशतिः॥ १०॥
मध्यहारं त्रिधा प्रोक्तं मर्यादास्तु ततः शृणु।
एकविंशत्रयोविंशपञ्चविंशाकरं भवेत्॥ ११॥
सप्तविंशं नवविंशमेकत्रिंशत्करेण तु।
महामर्यादिविस्तार एवं त्रिविधमुच्यते॥ १२॥
एवमामासहर्म्याणां विकल्पानां च कल्पयेत्।
सप्तहस्तं समारभ्य पञ्चत्रिंशावसानकम्॥ १३॥
प्रत्येकं प्रथमादीनां सालानां त्रित्रिमानकम्।
त्रिपञ्चसंख्यया प्रोक्तं हर्म्याणां चन्द्रसंख्यया॥ १४॥
नवहस्तं समारभ्य हस्तत्रिंशावसानकम्।
मान्ये सालसमाख्या तु हर्म्याणां जातिसंज्ञका॥ १५॥
प्रागुक्तहर्म्यमानैश्च शालायन्त्यं च संमतम्।
पञ्चप्राकारमेवं हि त्रिप्राकारमथोच्यते॥ १६॥

द्वितीयं तृतीयशालं च चतुर्थं च प्रगृह्यताम् ।
यत्र यद्विहितं सालं हर्म्यहर्चं तु लक्षयेत् ॥ १७ ॥
तस्यामुखे मुखायामं कल्पयेत्कल्पवित्तमः ।
बीजात्पादवीजं त्वर्धं त्रिपादं च समं तु वा ॥ १८ ॥
द्विगुणं त्रिगुणं वाऽथ चतुःपञ्चगुणं तु वा ।
कल्पयेत्तु मुखायामं बीजमूर्त्ने द्विजोत्तम ॥ १९ ॥
अन्तर्मण्डलभित्तेस्तु विस्तारो व्योमहस्तकः ।
तस्माच्छिमात्रवृद्ध्या वा पणार्धं वाऽथ वर्धयेत् ॥ २० ॥
सार्धहस्तद्विहस्तं तु महामध्यावसानकम् ।
भित्तिव्यासं समाख्यातमुत्सेधं शृणु सुव्रत ॥ २१ ॥
तद्व्यासाद्विचतुष्पञ्चगुणं वा सालतुङ्गकम् ।
अथवोत्तरसीमान्तं नीव्रान्तं वाजनान्तकम् ॥ २२ ॥
प्रस्तरेषु गलो वाऽथ सालतुङ्गमुदाहृतम् ।
ऋजुवीजतलोपेतं वाह्ये त्वभ्यन्तरार्जवम् ॥ २३ ॥
कुड्यमूलस्य विस्तारवस्त्वं(स्वं)शोनाग्रविस्तरम् ।
मूलादग्रं क्रमात्क्षीणं वस्वंशांशं द्विजोत्तम ॥ २४ ॥
अथवा हस्तमानेन सालोत्सेध वदाम्यहम् ।
प्रथमं फलकान्तं तु द्वितीयं फलकान्वितम् ॥ २५ ॥
पोध्यंतं स्याद्वितीयं तु चतुर्थं मञ्चमा(का)न्तकम् ।
पञ्चमं तु कपोतान्तं पञ्चचा(सा)लोदयं क्रमात् ॥ २६ ॥
एतद्धि पञ्चशा(सा)लेषु तामाप्नुक्तो ह्ययं विधिः ।
आवृतं मालिका वा स्यात्तद्दकारमथापिवा ॥ २७ ॥
मण्डपाकृतिकं वाऽथ ऋजुमध्यमथापिवा ।
भूतवेदगुणं पक्षव्योमभूममथोच्यते ॥ २८ ॥
कुड्यस्योपरि कुड्यं स्यात्पादं पादोपरि न्यसेत् ।
तलं प्र(प)ति तलं कुर्यात् पादं मत्यलपनासिका ॥ २९ ॥
वक्ष्येऽहं पादमानं च पङ्क्तिमानं द्विजोत्तम ।
मूलहर्म्ये तु होमादि उत्तरान्तं यदुन्नतम् ॥ ३० ॥
तन्मानं सप्तधा भज्य षडांशं शु(सु)षिरातलम् ।
दशर्न्द(शांश)पाददीर्घं तु पादं सव्याङ्गसंयुतम् ॥ ३१ ॥

धरातलं तदुक्तं वा सुजेयं वा प्रकल्पयेत् ।
मूलहर्म्ये तु हेमादि उत्तरांशं नवांशके ॥ ३२ ॥
धरातलं द्विभागं स्यात्सप्तांशं चरणोदयम् ।
उत्तरान्तं तु हेमादि रुद्रभागविभाजिते ॥ ३३ ॥
अधिष्ठानं गुणांशं स्याच्छेषं पादोदयं भवेत् ।
मूलप्रासादतुल्यं वा चरणं च धरातलम् ॥ ३४ ॥
पादोत्सेधांशमानं तु षट्सप्ताष्टौ तु वा भजेत् ।
एकांशे पादविष्कम्भं द्वार(र)बाह्यमथं तु वा ॥ ३५ ॥
तत्त्रिभागं द्विभागं वा त्रिपादं वाऽर्धं एव वा ।
कुड्यपादस्य विस्तारं सर्वत्र परिकल्पयेत् ॥ ३६ ॥
त्रिचतुष्पञ्चहस्तं वा परितो मालिकाकृति ।
हस्तद्वयं समारभ्य पञ्चहस्तावसानकम् ॥ ३७ ॥
गुणाङ्गुलमहृद्ध्या च पङ्क्त्यायां पञ्चविंशतिः ।
भेदेन कथितं विप्र सर्वत्र समपङ्क्तयः ॥ ३८ ॥
युग्मायुग्मं तु वा पङ्क्तिः सर्वत्र परिकल्पयेत् ।
मूलभागविशालं तु धर्मनन्दाष्टभाजिते ॥ ३९ ॥
एकांशरहिताग्रं स्यान्मूलादग्रं क्रमात्कृशम् ।
अग्रपादविशालं तु दण्ड इत्यभिधीयते ॥ ४० ॥
दण्डं त्रिपादमर्धं च क्रमाच्छ्रेष्ठान्तराधमम् ।
उत्तरोत्सेधमाख्यातं विस्तारं मूलपादवत् ॥ ४१ ॥
मध्यपादसमं वाऽथ अग्रपादसमं तु वा ।
उत्तरव्याससमाख्यातं श्रेष्ठान्तराधमं क्रमात् ॥ ४२ ॥
उत्तरोच्चत्रिभागैक(र्वा)मनोत्सेधानि(र्धं तु)नीव्रकम् ।
उत्तरोत्सेधतुल्यं तु तुलानीव्रमुदाहृतम् ॥ ४३ ॥
तदर्धं वा त्रिपादं वा तस्य विस्तारमेव हि ।
वाजने च(गु)लकोर्ध्वे वा तुलास्थापनमाचरेत् ॥ ४४ ॥
तुलार्धनीव्रविस्तारं जयन्तस्य तुलोपरि ।
जयन्त्य(न्ता)र्धविशालोच्चमनुपार्गमुदाहृतम् ॥ ४५ ॥
तुलान्तरं तुलोच्चं तु जयन्त्याश्च तदन्तरम् ।
मनुपार्गं तथा कल्प्यं दण्डमानेष्टकान्तरम् ॥ ४६ ॥

कपोतादीनि नीध्राङ्गप्रस्तारोक्तवदाचरेत् ।
अथवा तुलोपरिष्टात्तु इष्टकास्तरणं कुरु ॥ ४७ ॥
सुधया गुडतोयैश्च इष्टकास्तरणं भवेत् ।
करालमृद्गुलमाः सम्यक्चिक्कणमाचरेत् ॥ ४८ ॥
इष्टकास्तरणं हीतच्छिला चेन्दुतलोपरि ।
शैलजोत्फलकाभिश्च च्छादयेत्तु विशेषतः ॥ ४९ ॥
वाजनोर्ध्वे तु नाऽऽसान्न सुधारूपं समाचरेत् ।
एवमादितलं मोक्षमूर्ध्वभूमि यदाश्रयम् ॥ ५० ॥
मूलाग्रस्तम्भतुङ्गं तु मन्दमूलाग्रभाजिते ।
एकाक्षरादिताङ्घ्रिश्च तथोर्ध्वोर्ध्वभूमयः ॥ ५१ ॥
प्रस्तरं च तथार्धावमेकानेकतलोऽपि च ।
प्रस्तरोपरि कर्तव्यं शिखिमेव परोदयम् ॥ ५२ ॥
छत्राकारं शिरोपेत सदाकारमथापि वा ।
गोपानमथवा वाज सदा कल्प्यान्तरे द्विज ॥ ५३ ॥
मृन्मयैर्लोष्टकैर्वाऽथ सारदारुमयैस्तथा ।
गोपान छादनं कुर्यात्लुपक्रियाशिरोन्वितम् ॥ ५४ ॥
समाकारमिदं कुर्यात यथेष्टं तेषु कल्पयेत् ॥ ५५ ॥
जातिपश्चतल कुर्यात छन्दवेदतलं भवेत् ॥ ५६ ॥
विकल्प तथल विंशादाभासस्येव भूमिके ।
शाल्यादीनां तु हर्म्याणां योग्य सालतलं कुरु ॥ ५ ॥
मर्यादिसालमाश्रित्य पात(व)के पचनालयम् ।
नैर्ऋत्य आयुधस्थानं वायव्यं शयनाहकम् ॥ ५८ ॥
शाङ्करे योगशाला स्यादमृशभागेऽथवा पुनः ।
आग्निश(येय)याम्ययोर्मध्ये कर्तव्यं जननालयम् ॥ ५९ ॥
सना(शक)शाकरयोर्मध्ये मज्ज(ज्ज)नालयमेव हि ।
धान्यस्थानं च तत्पार्श्वे भृङ्गराजन(प)थेऽपि वा ॥ ६० ॥
निर्ऋतिवारुणीमध्ये पुस्तकारक्षता(ना) महालयम् ।
तत्पार्श्वयोः प्रकर्तव्यं व्यञ्जनालयमुत्तमम् ॥ ६१ ॥
सोमवायव्ययोर्मध्ये वस्त्राणामालयं कुरु ।
सोमशङ्करयोर्मध्ये गोर्वानाम प्रकल्पयेत् ॥ ६२ ॥

दक्षपार्श्वे शयनस्थानं पर्यङ्केन समन्वितम् ।
पुष्पदन्तपदे चाऽथ महेन्द्र(माहेन्द्रे)पुष्पमण्डपम् ॥ ६३ ॥
गृहक्षपपदे कुर्याद्धान्यालयं द्विजोत्तम ।
पाचि(रि)तो मालिकानां च एवमेव प्रकल्पयेत् ॥ ६४ ॥
मालिकास्वंरेपि(न्ते तु सो)मांशे कूपस्थानमुदाहृतम् ।
अथवाऽन्यप्रकारेण वक्ष्ये संदेशनिर्णयम् ॥ ६५ ॥
शक(शक्र)शंकरयोर्मध्ये विद्यास्थानमुदाहृतम् ।
शंकरस्यांश(श्रीद)योर्मध्ये धनन्यास(स्थान)मुदाहृतम् ॥ ६६ ॥
याम्यपावकयोर्मध्ये पुष्पमण्डप उच्यते ।
याम्यनैरुम(नैर्ऋत)योर्मध्ये स्नानाम्बुकोष्ठमुच्यते ॥ ६७ ॥
निर्ऋतिवारुणीमध्ये धर्मश्रवणमण्डपम् ।
वायव्यवारुणीमध्ये आयुधस्थानमुच्यते ॥ ६८ ॥
वायव्यसौम्ययोर्मध्ये शयनस्थानमुच्यते ।
ईशानसौम्ययोर्मध्ये यागार्थं मण्डपं कुरु ॥ ६९ ॥
जयन्ते मज्जनशाला(नागार)स्यादा(मा)ग्नेये पवनाद(ल)यम् ।
परितो मालिकायां तु सकलस्थानमुच्यते ॥ ७० ॥
शांकरे नृत्तमूर्तिस्तु आग्नेयां वृषवाहनम् ।
उमां स्कन्दं च सहितं नैर्ऋत्ये परिकल्पयेत् ॥ ७१ ॥
कङ्कालं वायुदिग्भागे भिक्षाटनं जयन्तके ।
सुखासं तु सत्यांशे वितथे त्रिपुरान्तकम् ॥ ७२ ॥
सुग्रीवे हरिकृद्धं स्याद् गन्धर्वे चन्द्रशेखरम् ।
शेषांशे कामदहनं मुख्ये कालारिमूर्तिकम् ॥ ७३ ॥
चदितेऽर्धनारिमूर्तिस्तु महेन्द्रे कल्याणसुन्दरम् ।
क्षेत्रपालं तु पर्जन्ये याम्ये वै दक्षिणेश्वरम् ॥ ७४ ॥
वारुणे लिङ्गमुद्भूतं सौम्ये तु गजहारिणम् ।
इत्यर्धेधर्मे (हर्म्ये )ईशांश्च अन्तरालेषु कल्पयेत् ॥ ७५ ॥
मूलहर्म्यं समीपस्थैव सकलस्थापनं कुरु ।
प्राकारेषु चतुर्दिक्षु द्वाद(र)शोभादि कल्पयेत् ॥ ७६ ॥
प्राकारततिमध्ये तु दीर्घपर्य्यन्तिवेचनम् ।
अथवा मूलहर्म्यस्य मध्यसूत्राश्रितं भवेत् ॥ ७७ ॥

प्रधानद्वारमेकं वा द्वयं वाऽन्यत्तु जालकम् ।
प्राकारमेवमाख्यातं बाह्ये विधिर्विधीयते ॥ ७८ ॥
एकद्वित्रिचतुष्पञ्चदण्डबाह्यादिविस्तृतम् ।
तद्बाह्ये तु मयश्रेणिमनेन विधिना कुरु ॥ ७९ ॥
शैवानां परिवाराणां प्राच्यमावासमुच्यते ।
प्राच्यां वा सौम्यदेशे वा देशिकावासमुच्यते ॥ ८० ॥
दैवज्ञाम्बष्ठभिषजां वासस्थानं च याम्यके ।
निबन्धाहारजातानां पश्चिमे वासमुच्यते ॥ ८१ ॥
सर्वेषामपि भक्तानां वासमुत्तरपार्श्वके ।
अग्नौ महाव्रतस्थानं याम्ये पाशुपतालयम् ॥ ८२ ॥
कलामुखं तु नैर्ऋत्ये चोर्ध्वालयं तु वारुणे ।
वायौ तु आर्हतस्थाने सौम्ये मृदुरसत्रकम् ॥ ८३ ॥
ज्ञानाभ्यासादधः कुर्याद्वैश्यानां तु विशेषतः ।
तद्बाह्ये त्वीशदिग्भागे कार्यं महाजलाशयम् ॥ ८४ ॥
याम्यपावकयोर्मध्ये गोशालांशं प्रकल्पयेत् ।
वारुणीनैर्ऋतीमध्ये सूतिकावासमुच्यते ॥ ८५ ॥
वारुणानिलयोर्मध्ये रोगार्तानां निवासकम् ।
सौम्यवानिल(यव्य)योर्मध्ये बालशिक्षार्थमण्डपम् ॥ ८६ ॥
सोमशंकरयोर्मध्ये धान्यमञ्जलिका भवेत् ।
तद्बाह्ये वलिते विप्र दासीनां गणिकादिनाम् ॥ ८७ ॥
नृत्तगेयाभ्यसानां (सतां) तु क्रयविक्रयजीविनाम् ।
चक्रिनां (चक्रिणां) वापकानां च कुलालानां तथैव च ॥ ८८ ॥
मत्स्यमांसोपजीवानां न तु (नृत)कारकयोष्ठना(पिता)म् ।
पिताश्मशूद्रकानां तु गोपालानां च कारुणाम् ॥ ८९ ॥
करणानां शूद्रश्रेणीवासस्थानपरिग्रहम् ।
परितः कल्पयेद्ग्रामान्पूर्वाद्यावसानकम् ॥ ९० ॥
तद्बाह्ये त्वीशदिग्भागे श्मशानं परिकल्पयेत् ।
दक्षिणे चोत्तरे वाऽपि स्थापत्यादिनिवासकम् ॥ ९१ ॥
ग्रामो बाह्ये तु कर्तव्यं रजकानां निवासकम् ।
तद्बाह्ये के(क्रो)शमात्रे तु चण्डालश्रेणिरुच्यते ॥ .२ ॥

प्राकारलक्षणं ह्येवं प्रोच्यते द्विजसत्तम ॥ ९३ ॥

इति काश्यपशिल्पे प्राकारलक्षणं त्रिचत्वारिंशः पटलः ।

---

अथ चतुश्चत्वारिंशः पटलः ।

---

## मण्डपः ।

---

अथ वक्ष्ये विशेषेण मण्डपानां तु लक्षणम् ।
प्रासादस्त्वे(स्यै)कभूमौ तु प्रोच्यते मुखमण्डपः ॥ १ ॥
जातिश्च(च)न्द्रविकल्पानामाभासानां तथैव हि ।
प्रासादादिमुखे चैव दिशासु विदिशासु वा ॥ २ ॥
ग्रामादीनां तु मध्ये वा दिशासु विदिशासु च ।
उद्याने वा नदीतीरे तटाके वाऽथवा पुनः ॥ ३ ॥
देवार्थं मण्डपं कुर्यादष्टदिङ्मुखमण्डपम् ।
प्रासादस्याग्रतः कुर्यान्मडपं तु (पानां) चतुष्टयम् ॥ ४ ॥
मुखमण्डपमादौ तु प्रतिमामण्डपं ततः ।
स्नापनार्थं तृतीयं तु नृत्तार्थं च चतुष्ट(र्थक)म् ॥ ५ ॥
तेषु वै प्रथमं प्राग्वद्द्वितीयादीनि चो(दिरथो)च्यते ।
अन्तप्राराणि चैतानि(द्वारांश्च तानेतान्)मध्यद्वारादि(रांश्च) वा कुरु ॥
मण्डपं द(पान्म)ण्डपं तत्र शालाद्वा मण्डपान्तरम् ।
अन्तरालमिति स्यात्तमादौ तल्लक्षणं शृणु ॥ ७ ॥
एकद्वित्रिश्चतुष्पञ्चषट्सप्ताष्टकरं तु वा ।
नवधर्मप्रथ(यो)वाऽपि रुद्रहस्तमथापि वा ॥ ८ ॥
अन्तरालविशालं तु(लस्य) रुद्रसंख्या प्रकीर्तिता ।
यत्र यन्मण्डपं कुर्यात्तस्मिन्पङ्क्त्या विशेषतः ॥ ९ ॥
एकद्वित्रिचतुष्पञ्चभक्त्या त ऽप्यन्तरालकम् ।
सावकाशान्तरालं वा भित्तिमध्यमथापि वा ॥ १० ॥
भित्तिमध्यान्तरालं चेत्पार्श्वयोर्वंशसंयुतम् ।
एकद्वित्रि अ(त्र्य)ङ्घ्रिपादं वा केशं (वेशं)भक्त्येकमेव वा ॥ ११ ॥

द्वयोर्मध्ये(ध्ये च)द्वारं वा जालकं वा प्रकल्पयेत् ।
उत्तरे जलधाराश्च स्नानार्थं परिकल्पयेत् ॥ १२ ॥
युग्मायुग्मं तु पङ्क्तिर्वाऽभ्यन्तरालं द्विजोत्तम ।
अधिष्ठानादिसर्वाङ्गं मण्डपस्य समं भवेत् ॥ १३ ॥
अन्तरालं समाख्यातं शृणु मण्डपलक्षणम् ।
त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात् ॥ १४ ॥
एवमेकोनविंशं तु नवधा मण्डपं भवेत् ।
आभाससदनानां तु आभासं मण्डपं भवेत् ॥ १५ ॥
एकविंशतिहस्तादिद्विद्विहस्तविवर्धनात् ।
सप्तत्रिंशतिहस्ता(स्करा)न्तं च विकल्पं नवधा भवेत् ॥ १६ ॥
आभासानां च न्योग(ग्यं)स्वस्वयोग्यमथापि वा ।
नवत्रिंशतिरा(तमा)रभ्य द्विद्विहस्तविवर्धनात् ॥ १७ ॥
पञ्चाधिकं तु पञ्चाशत्करान्तं छन्दमुच्यते ।
सप्तपञ्चकराऽऽरभ्य द्विद्विहस्तविवर्धनात् ॥ १८ ॥
साधिसप्ततिहस्तान्तं प्रभूता जातिरुच्यते ।
तद्विस्तारसमं दीर्घं समाश्रं मण्डपं भवेत् ॥ १९ ॥
अर्धहस्तमारभ्य षडङ्गुलवर्धनात् ।
पञ्चहस्तविधिर्या(स्तावधि या)वत् पङ्क्तिव्यासं तु कल्पयेत् ॥ २० ॥
अर्धहस्तं समारभ्य यावत्पञ्चकरावधि ।
गुणाङ्गुलविवर्ध(र्धना)त्तु पङ्क्तिव्यासं प्रकल्पयेत् ॥ २१ ॥
सार्धद्विहस्तमारभ्य षडङ्गुलविवर्धनात् ।
स्तम्भानामुदये ह्येवं स्तम्भव्यासमथोच्यते ॥ २२ ॥
पञ्चाङ्गुलं समारभ्य अर्धाङ्गुलविवर्धनात् ।
एकोनविंशमात्रं तु त्रयोविंशाङ्गुलिविस्तृतम् ॥ २३ ॥
पादोच्चं भानुरंशे दश वै चाष्ट वा भजेत् ।
मूलाग्रारं वदेनाश्च दण्डपूर्तुनमग्रकम् ॥ २४ ॥
तालिवा(पा)र्वलोत्तुङ्गं सामान्यं सर्वमण्डपे ।
चर्मी(तलि)पोच्चे तु भूतांशे द्विभागं च सलोदयम् ॥ २५ ॥
अद्रिमतङ्गाग्निवेदैकभागं वाऽपि मयूरपम् ।
उपपीठमधिष्ठानं वेदांशं वा मसूरकम् ॥ २६ ॥

धरातलसमं प्रोक्तं द्विगुणं त्रिगुणं [illegible] वा ।
उपपीठोदयं ख्यातमुपपीठार्धय(र्धत्र)त्तु वा ॥ २७ ॥
उपपीठमधिष्ठानं चरणं प्रस्तरं तथा ।
नीव्रेशमलंकारं गुण्यं मार्गेत्र विद्यते ॥ २८ ॥
पङ्क्तित्रयसमायुक्तं षोडशस्तम्भसंयुतम् ।
चल्लालपनासिकोपेतं मध्ये कूटं तु एव वा ॥ २९ ॥
मण्डितं पादस्य सर्वत्र चतुर्द्वारं इति(युतं)तु वा ।
अष्टिदिग्वा(ष्टदिग्द्वा)रमेकं वा द्वय वा जालकोष्ठदिक् ॥ ३० ॥
बाह्ये सोपानसंयुक्तं चित्रितं तोरणादिभिः ।
तोरणादिविहीनं वा कल्पेवं प्रथमं भवेत् ॥ ३१ ॥
चतुर्भक्त्या विशालं तु अष्टदिग्द्वारसंयुतम् ।
पूर्वेऽपरे(वोपर)द्विपत्ये(ङ्क्त्ये)कभक्त्या विस्तारनीव्रकम् ॥ ३२॥
मध्यस्थाङ्घ्रिं परित्यज्य ऊर्ध्वे कूटं द्विभक्तिकम् ।
वसुपञ्जरसंयुक्तं द्वितीयं मण्डपं भवेत् ॥ ३३ ॥
पञ्चभक्त्या विभाश्रं(शालं)तु मध्ये कूटं द्विभागया ।
मण्डपं परितोऽष्टोनद्वात्रिंशच्चरणान्वितम् ॥ ३४ ॥
भानुद्विगुणसंराष्ट्रं पञ्जराष्टकसंयुतम् ।
इष्टदिग्द्वारसंयुक्तं द्वारन्य(म)न्नेककुड्यकम् ॥ ३५ ॥
द्वारस्थाने तु सोपानं सर्वालङ्कारसंयुतम् ।
कुड्यकुम्भलताद्यैस्तु भूषितं तु तृतीयकम् ॥ ३६ ॥
चतुरश्रं [illegible] षड्भक्त्या मध्ये कूटं विभागया ।
तत्कूटमष्टपादाढ्यं मध्ये रङ्गसमायुतम् ॥ ३७ ॥
चतुर्द्वारसमायुक्तमिष्टदिग्द्वारमेव वा ।
द्विभक्त्याऽपि हृतं चैव भक्त्यादिप्रथमायुतम् ॥ ३८ ॥
अष्टदिग्भद्रसंयुक्तं चतुर्दिग्भद्रमेव वा ।
चत्वारिंशत्रिचाष्टाङ्घ्रियुक्तं वा तत्र पादिवम् ॥ ३९ ॥
चतुर्विंशाल्पनासाढ्यं कुड्यकुम्भलतादिक(न्वित)म् ।
तोरणाष्टकसंयुक्तं तृतीयं मण्डपं त्विदम् ॥ ४० ॥
चतुरश्रं तु सप्तांशं षष्ठयङ्घ्रिकसमायुतम् ।
नवभागेन तन्मध्ये कूटं वा मण्डिताङ्गणम् ॥ ४१ ॥

द्वात्रिंशद्व(त्त्व)नासाढ्यं चतुर्दिग्भद्रसंयुतम् ।
त्रिभागैकांशविस्तारं निर्गमं मुखभद्रकम् ॥ ४२ ॥
मध्यरङ्गसमोपेतं द्विष्ट(त्वष्टि)कुड्यसंयुत(समन्वित)म् ।
सर्वालंकारसंयुक्तं पञ्चमं परिकीर्तितम् ॥ ४३ ॥
युगाश्रमष्टपङ्क्त्या तु अशीतिचरणान्वितम् ।
चतुर्भागेन सन्मध्ये ऊर्ध्वकूटं प्रकल्पयेत् ॥ ४४ ॥
चतुर्दिग्द्वारसंयुक्तमिष्टदिग्वा(द्वा)रमेव वा ।
मुखसोपा(पा)नमन्यंशैर्वासनीव्रसमन्वितम् ॥ ४५ ॥
मध्यरङ्गसमायुक्तं षडष्टनासिकान्वितम् ।
सर्वालंकारसंयुक्तं सप्तमं मण्डपं भवेत् ॥ ४६ ॥
चतुरश्रं दशांशं तु भाद्वावि(न्वधि)कशाङ्घ्रिकम् ।
मध्ये चैवाष्टदिग्भागनवकूटसमायुतम् ॥ ४७ ॥
कूटोपरि नीव्रनांशे तु अ(न्त)न्तरालं प्रकल्पयेत् ।
पार्श्वोन्मुखेन सोपानं दिशि भद्रसमन्वितम् ॥ ४८ ॥
सर्वालंकारसंयुक्तमष्टमं मण्डपं भवेत् ।
रुद्रभक्त्या युगाश्रं तु मध्ये द्व्यंशेन कूटकम् ॥ ४९ ॥
मुखे सोपानसंयुक्तमिष्टदिग्भद्रसंयुतम् ।
द्वारन्य(म)त्रैन कुड्यांशमिष्टभागावसानकम् ॥ ५० ॥
सर्वालंकारसंयुक्तं नवमं मण्डपं भवेत् ।
द्वादशांशे युगाश्रं तु मध्ये द्व्यंशेन कूटकम् ॥ ५१ ॥
मण्डपस्य तु बाह्ये तु अंशेनालिन्द्रमिष्यते ।
तद्विंशेन तु विस्तारनिष्क्रान्तः स्याच्चतुर्दशी ॥ ५२ ॥
साष्टपादसमं पादमाद्यङ्के तु प्रकल्पयेत् ।
सर्वालंकारसंयुक्तं दशमं मण्डपं भवेत् ॥ ५३ ॥
पेतमण्डपस्य तदायतम् ।
यस्योचितविभागं तु कृत्वा वा मण्डलं कुरु ॥ ५४ ॥
पङ्क्तित्रयविशालं तु पञ्चपङ्क्त्या विशालकम् ।
एकपार्श्वे पुरे वाऽथ पा(द्वा)रमंशेन कल्पयेत् ॥ ५५ ॥
पार्श्वे पा(द्वा)रयुतं द्वे तु त्रिंशदङ्घ्रिसमन्वितम् ।
तदेव परितोंऽशेन मण्डपाभ्यन्तरे रसः ॥ ५६ ॥

लुपादोर्ध्वे हर्न कुर्यादष्टाविंशाङ्घ्रिसंयुतम् ।
पुरे पारयुतं चेत्तु चरणं चाष्टविंशतिः ॥ ५७ ॥
अथवा पारहीनं तु त्रिरष्टचरणान्वितम् ।
पादं मत्स्यल्पनासाढ्यं वेदिजालकतोरणम् ॥ ५८ ॥
नानाकुम्भलताद्यैस्तु कल्पितं प्रथमं भवेत् ।
चतुर्भित्तित्रिशाले तु आयामे तु षडंशकम् ॥ ५९ ॥
मण्डपं परितोऽशेन कूटपञ्चान्तरेतरम् ।
द्विभाक्तिविसृ(स्तृ)तं चैकभक्त्या तु मुखभद्रकम् ॥ ६० ॥
द्वार्त्रि(द्वात्रि)शच्चरणोपेतं मण्डपस्य द्वितीयकम् ।
विशालं पञ्चभक्त्या स्यादायामे सप्तभग(भक्त)यः ॥ ६१ ॥
त्रिपञ्चपक्ति(ङ्क्ति)विस्तारं दीर्घा मध्ये सभा भवेत् ।
मण्डपं परितोऽशे तु इष्टदिग्भद्रसंयुतम् ॥ ६२ ॥
चत्वारिंशतिपादाढ्यं सर्वालंकारसंयुतम् ।
वेदिकाद्यैः समायुक्तं तृतीयं मण्डपं भवेत् ॥ ६३ ॥
रसभाक्तिविशालं तु वसुभक्त्यायतं भवेत् ।
द्विचतुर्भक्तिविस्तारं दीर्घमध्ये महोदयम् ॥ ६४ ॥
मण्डपं परितोऽष्टांशमिष्टदीर्घकभद्रकम् ।
षष्टिसंख्याङ्घ्रिसंयुक्तं चतुर्थं मण्डपं भवेत् ॥ ६५ ॥
तारे सप्तविभागे तु नवभक्त्याधु(य)तान्वितम् ।
त्रिभक्तिविस्तृतं पञ्चभक्त्यायामसमं करम् ॥ ६६ ॥
तारत्रयोदशांशेन मध्यर्ध(ध्यांश)शेन कूटकम् ।
इष्टदिक्कुड्यसंयुक्तं चतुर्दिग्भद्रसंयुतम् ॥ ६७ ॥
प्रमुखे नन्दभागेन मुखभद्रं प्रकल्पयेत् ।
सद्वयं नवतीभक्त्या भक्त्याऽङ्घ्रिन(क)समन्वितम् ॥ ६८ ॥
सर्वालंकारसंयुक्तं द्वादशं मण्डपं भवेत् ।
त्रिपञ्चपङ्क्तिविस्तारमायामं चतुरश्रकम् ॥ ६९ ॥
मध्ये कूटं गुणांशेन श्वेने ऊर्ध्वसमन्वितम् ।
गुणांशं विस्तृतायामं मुखभद्रसमन्वितम् ॥ ७० ॥
इष्टदिक्कुड्यसंयुक्तमन्य(माय)ताङ्घ्रिसमन्वितम् ।
पञ्चांशं त्रिद्वयार्धिष्या द्विशतं चरणायतम् ॥ ७१ ॥

सर्वालंकारसंयुक्तं मण्डपं तु त्रयोदशम् ।
षोडशांशे युगाश्रं तु मध्ये कूटं द्विभागया ॥ ७२ ॥
साष्टात्रिंशेसमायुक्तं द्विशतं पादमुच्यते ।
मुखभद्रमथांशेन तदर्धे(र्धे)नेतरे दिशि ॥ ७३ ॥
सर्वालंकारसंयुक्तो मण्डपः स्याच्चतुर्दशः ।
एवं हि मनुभेदेन युगाश्रं मण्डपं विदुः ॥ ७४ ॥
तत ऊर्ध्वं चतुस्त्रिंशदंशं सीमावसानकम् ।
चतुरश्रो मण्डपः स्यात्सर्वालंकारसंयुतः ॥ ७५ ॥
भित्तिस्तम्भं च परितः कर्तुरिच्छावशान्नयेत् ।
सभाश्रममण्डपं त्वेतदायामाश्रमथोच्यते ॥ ७६ ॥
विस्तारं पङ्क्तितुल्येव सा(त्वं स्यात्सा)यते वाऽथ पङ्क्तयः ।
विस्तारं पङ्क्तिमानं तु गुणाङ्गुलविवर्धनात् ॥ ७७ ॥
सप्तविंशाङ्गुलं यावत्तावदायमवोदितम् ।
मधोक्षीणं तथा वाऽथ मण्डपे न(म)रुरोदितम् ॥ ७८ ॥
नाश्रयेत्तु करं पूर्वे(र्वं)मण्डपं तु समाचरेत् ।
अशेषपदसंख्या तु मानवदायासि(म)माचरेत् ॥ ७९ ॥
मण्डपे परितोऽष्टांशे द(इ)ष्टदिग्भद्रसंयुतम् ।
त्रिभक्तिविस्तृतं चैव भक्त्या तन्मुखभद्रकम् ॥ ८० ॥
सप्ताधिकपदद्वयाधिकयं पादमित्यभिधीयते ।
सर्वालंकारसंयुक्तं पञ्चमं मण्डपं भवेत् ॥ ८१ ॥
वसुभक्तिविशालं च दशभक्त्या तथाऽन्वितम् ।
द्विचतुर्भागविस्तारदीर्घमध्यस(म)होदयम् ॥ ८२ ॥
परितो-मण्डपो ह्यंशो मध्यस्तम्भविवर्जितम् ।
इन्द्रदिन्द्रमुखाभद्रा(द्रमुखभद्रं च)चतुर्दर्थेशेन सुव्रत ॥ ८३ ॥
षण्णवत्यद्ध्रिसंयुक्तं सर्वालंकारसंयुतम् ।
षष्ठं मण्डपं ह्येव प्रोच्यते तु शिवार्हकम् ॥ ८४ ॥
नवभक्त्या तयाऽल्लं तु रुद्रभक्त्या तथान्वितम् ।
एकत्रिभक्तिविस्तारं दीर्घमध्ये सभा भवेत् ॥ ८५ ॥
परितो देवभागं तु मण्डपं परिकल्पयेत् ।
त्रिचतुर्भागविस्तारं दीर्घस्यामुखभद्रकम् ॥ ८६ ॥

सर्वालंकारसंयुक्तमष्टमं मण्डपं भवेत् ।
इष्टादिवचारुरकृत्तु स्यात्कल्पयेत्परितो भवेत् ॥ ८७ ॥
एवं हि मनुभेदं च सायतं मण्डपं विदुः ।
त्रिचतुष्पञ्चषट्सप्तअङ्कणस्य तु एव वा ॥ ८८ ॥
सर्वेषां मण्डपानां च भित्तिव्यासं तु पञ्चधा ।
पादायामविशालेन दारुपादेन वा स्थय(सम)म् ॥ ८९ ॥
सर्वेषां मुखभद्राणां करणं मण्डपाकृति ।
पार्श्वे सोपानसंयुक्तं हस्तिहस्तविभूषितम् ॥ ९० ॥
पञ्चषट्सप्तनवाष्टदण्डं वा तस्य विस्तृतम् ।
सपादं सार्धदण्डं वा हस्तिहस्तोदयान्वितम् ॥ ९१ ॥
यष्टिनानूर्ध्वफलं वा स्वग्रं हस्तिकहस्ति(स्त)कम् ।
सशीर्षं किपुरेरस्य अग्रं ककुन्ताकृति ॥ ९२ ॥
मूलादष्टांशरहितमग्रवा(म)स्तु क्रमात्कृशम् ।
हस्तिहस्त्यन्तरं विम युग्मं वाऽयुग्मद(प)दृपः ॥ ९३ ॥
दण्डं सपाददण्डं वा सार्धं वा द्विगिमात्रकम् ।
द्विदण्डं वाऽथ पीठश्च विस्तारं स्यात्तदेव हि ॥ ९४ ॥
नेन द्विगुणनीव्र तु अभयस्थानमण्डपे ।
षष्ठ्यचाग्निभागैकं भागं स्यादामलोदयम् ॥ ९५ ॥
आदौ समतले स्थित्वा सव्यपादपुरःसरम् ।
सोपानारोहणं विप्रान्मर्त्यानां तु विधीयते ॥ ९६ ॥
मण्डपं ह्येवमाख्यातं गोपुरं शृणु सुव्रत ॥ ९७ ॥

इति काश्यपशिल्पे मण्डपलक्षणं चतुश्चत्वारिंशः पटलः ।

---

अथ पञ्चचत्वारिंशः पटलः ।

---

## गोपुरलक्षणम् ।

---

अथ वक्ष्ये विशेषेण गोपुराणां तु लक्षणम् ।
अन्तर्मण्डलसालोदिप्यसुन(विपुलं)मोच्यते क्रमात् ॥ १ ॥

द्वारशोभा द्वारशाला द्वारप्रासादहर्म्यकम् ।
द्वारगोपुरमित्येते क्रमान्नाम्ना प्रकीर्तिताः ॥ २ ॥
एकद्वित्रितला वाऽपि द्वारशोभां प्रकल्पयेत् ।
द्विभूमिर्वा त्रिभूमिर्वा चतुर्भूमिरथापि वा ॥ ३ ॥
द्वारशाला तु कर्तव्या साले स्यात्तु द्वितीयके ।
त्रिचतुष्पञ्चभूमिर्वा द्वारप्रासादमारभेत् ॥ ४ ॥
चतुष्पञ्चतलं वाऽथ षट्तलं वाऽथ हर्म्यकम् ।
पञ्चषट्सप्तभूमिर्वा द्वारगोपुरमिष्यते ॥ ५ ॥
अथवा सर्वसालेषु एकद्वित्रितलं तु वा ।
सोपपीठमधिष्ठानं.. ... विनावाऽप्युपपीठकम् ॥ ६ ॥
तयोरुच्चयतः सर्वे नवपञ्च वदाम्यहम् ।
मूलप्रासादविस्तारं सप्ताष्टनवभाजिते ॥ ७ ॥
दशैकादशभागे च एकांशरहितं क्रमात् ।
शोभादिगोपुरान्तानां विपुलं कीर्तितं क्रमात् ॥ ८ ॥
त्रिकपादा(भा)सहर्म्याणां गोपुराणां ततस्त्विमे ।
मूलालयविशालं तु चतुष्पञ्चषडंशके ॥ ९ ॥
सप्ताष्टांशेन हीनं तु च्छन्दशोभोदयं भवेत् ।
मूलगेहत्रिभागैकं भागमर्धांशमेव च ॥ १० ॥
त्रिद्व्यंशं चतुरंशं तु गुणांशे च तथैव च ।
पञ्चभागे तु वेदांश सालेषु प्रथमादिषु ॥ ११ ॥
शोभादिगोपुरान्तानां पंक्तिर्जात्यायमा(जात्यायता)लयम् ।
तस्यैव हर्म्यमानं स्यादथ मानवशात्ततः ॥ १२ ॥
द्विहस्तादिद्विरष्टान्तमेकहस्तविवर्धनात् ।
शोभादिगोपुरान्तानां प्रत्येकं त्रित्रिमानकम् ॥ १३ ॥
विस्तारायामयोरेव चन्द्रहर्म्ये च लक्ष्यते ।
गुणहस्तं समारभ्य सप्तदशकरावधि ॥ १४ ॥
एकहस्तद्वि(त्रि)वृद्ध्या तु शोभादीनां त्रयं त्रयम् ।
चतुर्हस्तं समारभ्य यावदष्टादशं करम् ॥ १५ ॥
शोभादीनां क्रमाद्व्यासं जातिहर्म्ये विधीयते ।
प्रत्येकं त्रित्रिरावरनन्दपञ्चावधिर्भवेत् ॥ १६ ॥

हस्तमानेन विस्तारं क्षुद्राणामर्द्धकं क्रमात् ।
स्वस्वोदितं विकर्तव्यं विपरीतं विपत्करम् ॥ १७ ॥
अथवा त्रिचतुष्पञ्चषट्सप्ताष्टनवं करम् ।
दशैकादशहस्तं तु अधमादित्रयं त्रयम् ॥ १८ ॥
सर्वहर्म्ये तथा शा(सा)ले यथेष्टं परिकल्पयेत् ।
महत्तरे तु श्रेष्ठाश्चिल्पन्तरे मध्यमत्रयम् ॥ १९ ॥
क्षुद्राल्पयोः प्रशस्ता(स्ता,नि कन्यासत्रैवमुच्यते ।
सर्वसालेषु कर्तव्यं कर्तव्यं सर्वदेशिके ॥ २० ॥
अथवाऽन्यप्रकारेण शोभादीनां च विस्तरम् ।
पञ्चहस्तं समारभ्य द्विद्विहस्तविवर्धनात् ॥ २१ ॥
त्रयोदशकारान्तं तु शोभाव्यासं तु कल्पय ।
पञ्चविंशत्कारारभ्य(भ्यं)त्रयस्त्रिंशत्कारान्तकम् ॥ २२ ॥
द्वारप्रासादविस्तारं पञ्चधा परिकीर्तितम् ।
पञ्चत्रिंशत्कारारभ्यं चत्वारिंशत्त्रयाधिकम् ॥ २३ ॥
पञ्चधा द्वारहर्म्यस्य विस्तारः परिकीर्तितः ।
सपञ्चचत्वारिंशत्पञ्चाशिव(श्वाशद्गो)पुरान्तकम् ॥ २४ ॥
द्विद्विहस्तविवृद्ध्या तु पञ्चधा गोपुरान्तकम् ।
द्वारामघनसाधाय(रसाधनमाख्यातं)ततेना(त आ)यततनं शृणु ॥ २५ ॥
सपादं सार्धपादोनद्विगुणं द्विगुणं तु वा ।
सत्रिभागैकभागं तु द्विभागं वाऽऽयतं भवेत् ॥ २६ ॥
सो(शो)भादिगोपुरान्तानामित्यायामं प्रकीर्तितम् ।
तेषु किञ्चिद्विशेषोऽस्ति तं विशेषं ण(न)नं शृणु ॥ २७ ॥
वि(द्वि)हस्तमानविस्तारं गृहीत्वैव विशेषतः ।
आयामं स(पू)र्वसत्कस्यमनेकोष्विष्टमायतम् ॥ २८ ॥
हस्तच्छन्दं प्रशस्या चायन्यद्वा पूर्वमाचरेत् ।
आयादिशोभनोपेतं हस्तमानेन कल्पयेत् ॥ २९ ॥
तं विना हर्म्यमूलस्य वंशे द्वे कल्पितस्य तु ।
व्यासायामः समाख्यातस्तेषां तुङ्गमथोच्यते ॥ ३० ॥

विस्तारं सप्तधा भज्य शोभच्छं (भोच्चं) रुद्रभागया ।
ताराध्यर्धिक(र्धाधिक)तुङ्गं तु द्वारशालोच्छ्रयं भवेत् ॥ ३१ ॥
सप्तभागे तु रुद्रांशं मान्त्यंशं वा तृतीयके ।
विस्तारे तु नवांशे तु मध्यमं शो(स्या)च्चतुर्थके ॥ ३२ ॥
विस्तारजीवनोत्सेधे महागोपुरमुच्यते ।
शोभादिस्तूपिपर्यन्तं माचो(नो)च्चं तु प्रकीर्तितम् ॥ ३३ ॥
विस्तारायामयोर्मानं सूत्रं प्राग्वाद्यमुच्यते ।
तद्बाह्ये कूटकोष्ठादिनीव्रं प्रासादच(व)द्भवेत् ॥ ३४ ॥
विस्तारस्य त्रिभागैकं चतुर्भागैकमेव वा ।
पञ्चभागे त्रिभागे वा प्राग्वाह्ये तु निसर्गवत् ॥ ३५ ॥
सार्धहस्तं समारभ्य षट्षडङ्गुलवर्धनात् ।
पञ्चहस्तावधिर्यावत्क्षुद्राणां द्वारविस्तृतम् ॥ ३६ ॥
अल्पानां च तथा प्रोक्तं संनराणां ततः शृणु ।
त्रिहस्तं तु समारभ्य यावत्सप्तकरावधि ॥ ३७ ॥
षडङ्गुलविवृद्ध्या तु द्वारव्यासं प्रकीर्तितम् ।
चतुर्हस्तं समारभ्य .... पञ्चदश याकरान्तकम् ॥ ३  ॥
दसमात्रविवृद्ध्या तु महते द्वारविस्तृतम् ।
तारे सप्तांशविंशांशं सप्तांशे तु दशांसकम् ॥ ३९ ॥
अध्यर्ध (र्धं) पादहीनं तु द्विगुणं द्विगुणोन्नतम् ।
सार्धपादं तु पादं वा द्वारोत्सेधं तु सप्तधा ॥ ४० ॥
लिङ्गस्य मध्यमद्वारं मध्यमं तु वदाम्यहम् ।
हस्तेश भूतयोर्मध्ये नवांशकविशेषतः ॥ ४१ ॥
लिङ्गमध्यं तु वामे तु द्वारमध्यं प्रयोजयेत् ।
शोभादिगोपुरान्तानां द्वारमध्यं क्रमोदितम् ॥ ४२ ॥
तन्मध्ये गोपुरायामं स्तम्भयोः पार्श्वयोः समम् ।
द्वारयोगकवाटं च द्वारलक्षणवत्कुरु ॥ ४३ ॥
गुणपङ्क्तिं समारभ्य यावदेकोनविंशतिः ।
तावत्पङ्क्तिस्तु विस्तारेऽत्रमेवं प्रकल्पयेत् ॥ ४४ ॥
यावद्विन्द्रकनिर्व्यस्तास्तावद्देवाथ पङ्क्तयः ।
विस्तारे पञ्चभागे तु गुणांशं गर्भगेहकम् ॥ ४५ ॥

शेषं कुड्यविशालं स्यादेकभूमौ द्विलोचम ।
परितः कुड्यविस्तारं मानेनैव प्रकल्पयेत् ॥ ४६ ॥
एवमेकतलं ख्यातं द्वितलं तु तथोच्यते ।
विस्तारे पञ्चभागं स्यादायामेऽपि तथैव च ॥ ४७ ॥
दशांशं गर्भगेहं तु सार्धांशं कुड्यविस्तृतम् ।
कर्णकूटं तु मे(मी)नांशं शालादीर्घं विशालकम् ॥ ४८ ॥
हारान्तरं तदंशेन विस्तारे त्वेवमेव च ।
शालादीर्घं तु पञ्चांशमायामे तु प्रकल्पयेत् ॥ ४९ ॥
हारान्तरं तु कूटं च एकैकांशेन कल्पयेत् ।
कूटान्तरसमायामं शेषं हारान्तरेऽ(रा)न्वितम् ॥ ५० ॥
हारान्तरार्धमानेन भद्रं वा भद्रपञ्जरम् ।
द्वितलं त्वेवमाख्यातं त्रितलं त्वधुनोच्यते ॥ ५१ ॥
नवांशं विभजेद्वा(द्व्याम)मायामं च तलं भवेत् ।
गर्भगेहं गुणांशं स्यादंशेन ग्रहपिण्डिका ॥ ५२ ॥
अलिन्द्रं त्वेकभागेन हारव्यासं शिवांशकम् ।
कर्णकूटं शिवांशेन शालादीर्घं गुणांशकम् ॥ ५३ ॥
एकांशं पञ्जरं स्यात्तमधांशं हारयोत्तरम् ।
कल्पैवा(स्यैव)मादिभूमिं च द्वितलं पूर्ववद्भवेत् ॥ ५४ ॥
अथवाऽन्यप्रकारेण त्रितलं शृणु सुव्रत ।
द्वारभागं तु विस्तारं रुद्रांशं तु तदायतम् ॥ ५५ ॥
गुणांशं गर्भगेहं तु गृहपिण्ड्यंशमुच्यते ।
त्रितलं तत्समाख्यातं हारभागेन कल्पयेत् ॥ ५६ ॥
अलिन्द्रांशं तु कुड्यं वा गर्भगेहान्वितं तु वा ।
आयामे पञ्चभागेन कोष्ठदीर्घं प्रकल्पयेत् ॥ ५७ ॥
शेषं पूर्ववदुद्दिष्टं द्वितीयं द्वितलोक्तवत् ।
त्रितलं चैवमाख्यातं चतुर्भूमि(स्तल)मथोच्यते ॥ ५८ ॥
विस्तारे तु दशांशे तु तद्वदायामपङ्क्तयः ।
गर्भगेहत्रिभागं हि सार्धांशं कुड्यविस्तृतम् ॥ ५९ ॥

आलिन्द्रं शिवभागेन हारव्यासं तथैव च ।
पञ्जरं कर्णकूटं च एकैकांशेन कल्पयेत् ॥ ६० ॥
कूटतारसमायामं शेषं हारान्तरेऽन्वितम् ।
शालायामे तु वेदांशे अर्धांशं हारयोत्तम(र)म् ॥ ६१ ॥
आदिभूम्येवमाख्यातमूर्ध्वे पूर्ववदाचरेत् ।
विस्तारे तु दशांशे तु भान्वंशे तु तदालयम् ॥ ६२ ॥
पूर्वेऽपरे च शालायां पञ्चभागेन कल्पयेत् ।
शेषं पूर्ववदुद्दिष्टं चतुर्भूमि(स्तल)मिदं परम् ॥ ६३ ॥
तारमेकादशांशं तु आयामं च तथैव हि ।
पूर्वेऽपरे च पार्श्वे च शालापञ्चांशमायतम् ॥ ६४ ॥
एकांशं पञ्जरव्यासं कूटव्यासं शिवांशकम् ।
हारान्तरं तथाऽर्धांशं कल्प्यैवं(कल्प्यं वै) मपमं तलम् ॥ ६५ ॥
तस्योर्ध्वे त्र(भू)मयः सर्वे(र्वाः)पूर्ववत्परिकल्पयेत् ।
तारमेकादशांशे तु तद्दीर्घे तु त्रयोदशे ॥ ६६ ॥
गुणांशं गर्भगेहं च द्विभागं भक्तिविस्तृतम् ।
अलिन्द्रं भागया (तः) कल्प्यं हारभागेन कल्पयेत् ॥ ६७ ॥
पार्श्वे शाला तु वेदांशं षडंशं मुखपृष्ठयोः ।
हारान्तरं शिवांशं स्याद्व्योमपञ्जरकूटयोः ॥ ६८ ॥
शेषं पूर्ववदुद्दिष्टं रसभूम्येवमेव तु ।
त्रयोदशांशविष्कम्भे आयामे च तथैव हि ॥ ६९ ॥
भूतांशं गर्भगेहं तु गृहपिण्डी द्विभागया ।
अलिन्द्रं तु शिवांशेन खण्डहर्म्यं शिवांशकम् ॥ ७० ॥
कोष्ठायामं भूतांशं रसांशेन च पञ्जरम् ।
कूटपंशेन कर्तव्यं हारान्तरं तथैव च ॥ ७१ ॥
अथवा तत्र दशान्तरपायामं तु त्रिपञ्चकम् ।
मुखे मुखे महाशाला सप्तांशेन प्रकल्पयेत् ॥ ७२ ॥
पञ्चभागेन कर्तव्यं पार्श्वयोः कोष्ठदीर्घकम् ।
शेषं पूर्ववदुद्दिष्टं सर्वालंकारसंयुतम् ॥ ७३ ॥
सप्तभूमिसमाख्यातं महागोपुरकं भवेत् ।

अलिन्द्रं वा विनाऽलिन्द्रं कल्पयेत्कल्पवित्तमः ॥ ७४ ॥
विनाऽलिन्द्रकृतं चेत्तु कुड्यगर्भगृहं तु वा।
आलिन्द्रांशं तु संयोज्य कारयेत्तु द्विजोत्तमः ॥ ७५ ॥
आदिभूम्येवमाख्यातमूर्ध्वं षट्तलवद्भवेत्।
सप्तभूमि समाख्यातं तेषां मण्यमथोच्यते ॥ ७६ ॥
पादाधिष्ठानयोस्तुङ्गं मूलप्रासादमूलकम्।
चतुष्पञ्चषडंशं वा सप्ताष्टनव एव वा ॥ ७७ ॥
दशैकादशभागं वा कृत्वैकांशोपपीठकम्।
अथवा हस्तमानेन द्वारं मानं(रमानं) यथोचितम् ॥ ७८ ॥
तदुच्चं तु चतुष्पञ्चषट्सप्ताष्टौ तु वा भवेत्।
नवरुद्रांशभागं वा कृत्वैकांशं विशेषतः ॥ ७९ ॥
उपपीठोन्नतं स्यात्तं शेषं तु गुणभाजिते।
अधिष्ठानं तदेकांशं द्विभागं चरणायतम् ॥ ८० ॥
शोभादुत्तरसीमान्तं द्वारमानं विधीयते।
पादबन्धमधिष्ठानं द्वारशोभादिना कुरु ॥ ८१ ॥
स्तूप्यन्तमुत्तरान्तं च रसभागविभाजिते।
मस्तरोर्ध्वं सपादांशं अर्ध्यंशं गलमानकम् ॥ ८२ ॥
पादोनगुणभागं तु शिरःशेषं शिखोदयम्।
एवमेकतलं प्रोक्तं द्वितलं शृणु सुव्रत ॥ ८३ ॥
उत्तरादि शिखान्तं च नवभागविभाजिते।
मस्तरं तु सपादांशं द्विभागं चरणोदयम् ॥ ८४ ॥
मञ्चमानं शिवांशं स्यात्तत्समं कंधरोदयम्।
शिखरं सार्धपञ्चांशं सपादांशं शिखोदयम् ॥ ८५ ॥
द्वितलं ह्येवमाख्यातं त्रितलं चाधुना शृणु।
उत्तरस्तूपिपर्यन्तं भानुभागविभाजिते ॥ ८६ ॥
सपादं प्रस्तरोत्सेधं सार्धद्वयंशाङ्घ्रिकोदयम्।
मस्तरं शशिभागेन द्विभागं चरणोदयम् ॥ ८७ ॥
मञ्चमानं शिवांशं स्यादंशं ग्रीवोदयं भवेत्।
पक्षांशं शिखरं ज्ञेयमेकांशं स्तूपिमानकम् ॥ ८८ ॥

त्रितलं हेत्रमाख्यातं चतुर्भूमपथोच्यते ।
उत्तरादिशिखांशं(न्तं) तु द्विनवांशविभाजिते ॥ ८९ ॥
पादोनद्व्यंशं मञ्चोच्चं गुणांशं चरणोदयम् ।
तदर्धं मस्तरोत्सेधं सार्धद्व्यंशाङ्घ्रिकोदयम् ॥ ९० ॥
तदर्धं मस्तरोत्सेधं युग्मंशाङ्घ्रितुङ्गकम् ।
तदर्धं मञ्चमानं स्यात्सार्धांशं गलमानकम् ॥ ९१ ॥
सार्धद्व्यंशं शिरोत्सेधं शिखामानं शिवांशकम् ।
चतुर्भूमि(मं)समाख्यातं पञ्चभूमि(म)मथो शृणु ॥ ९२ ॥
शिखाग्रादुत्तरान्तं तु त्रयोविंशतिभाजिते ।
द्विभागं मस्तरोत्सेधं सार्धद्व्यंशाङ्घ्रितुङ्गकम् ॥ ९३ ॥
तदर्धं मञ्चमानं स्यात्पादायामं गुणांशकम् ।
तस्यार्धं मस्तरोत्सेधं सार्धद्व्यंशाङ्घ्रितुङ्गकम् ॥ ९४ ॥
तदर्धं मञ्चमानं तु द्विभागं चरणोदयम् ।
मस्तरोच्चं शिवांशेन कंधरोच्चं तथैव च ॥ ९५ ॥
सार्धद्व्यंशं शिरोत्तुङ्गमेकांशं स्तूपिमानकम् ।
पञ्चभूमि(मं) समाख्यातं षड्भूमि(मं) त्वधुना शृणु ॥ ९६ ॥
उत्तरादिशिखान्तं च एकोनत्रिंशदंशके ।
द्विभागं मस्तरोत्सेधं पादोच्चं चतुरंशकम् ॥ ९७ ॥
सत्रिपादशिवांशं तु भूमि(भूमि)सामान्य(न्य)मीरितम् ।
सार्धाग्न्यंशाङ्घ्रितुङ्गं तु तदर्धं मस्तरोदयम् ॥ ९८ ॥
शिवांशं तु शिखामानं षट्तलं त्वधुनो(सप्तभूममथो)च्यते ।
उत्तरादिशिखांशं(न्तं) तु मानं षट्त्रिंशदंशके ॥ ९९ ॥
पादद्विभागं मञ्चोच्चं सार्धवेदांशमङ्घ्रिकम् ।
द्विभागं मस्तरोत्सेधं वेदांशं चरणोदयम् ॥ १०० ॥
पादोनद्व्यंशं मञ्चं स्यात्सार्धाग्न्यंशाङ्घ्रिमानकम् ।
पादोनद्व्यंशं मञ्चोच्चं गुणांशं पादमानकम् ॥ १०१ ॥
तदर्धं मस्तरोत्सेधं सार्धपक्षाङ्घ्रितुङ्गकम् ।
तदर्धं मञ्चमानं तु द्विभागं चरिता(रणा)यतम् ॥ १०२ ॥
मस्तरं शशिभागेन शिवांशं गलमानकम् ।
पादहीनाग्निभागं तु शिरःशेषं शिखोदयम् ॥ १०३ ॥

एवं सुक्षनलं स्यात्तमलंकारम(स्त्व)थोच्यते ।
मण्डपाभां यथा द्वारशोभां कुर्याद्द्विजोत्तमः ॥ १०४ ॥
मण्डं वा द्वारशाला स्यात्प्रासादं सदनाकृति ।
मालिकाकृति कर्तव्यं द्वारहर्म्यं द्विजोत्तम ॥ १०५ ॥
शालाकारं प्रकर्तव्यं द्वारं गोपुरमेव वा ।
सर्वं तु गोपुरान्तं वा प्रकल्पयेत्कल्पवित्तमः ॥ १०६ ॥
तेष्वादौ द्वारशोभां तु वक्ष्येऽहं द्विजसत्तम ।
एकद्वित्रितलं वाऽपि सर्वालंकारसंयुतम् ॥ १०७ ॥
मुखे मुखे महानन्द्यपार्श्वयोर्वेशनासिका ।
स्वस्त्याकृत्यल्पनासाढ्य प्रागुक्तविधिना द्विज ॥ १०८ ॥
युक्तस्तूपिसमायुक्तं लुपरोहशिरस्तु वा ।
दण्डपाकृतिकं वाऽपि श्रीकान्तं तदुदाहृतम् ॥ १०९ ॥
शालाकारशिरस्तस्मिन्पण्णासि(णासयो)मुखपृष्ठयोः ।
पार्श्वयोर्वेशनासाढ्य मुक्तस्तूपीव संयुतम् । ११० ॥
अन्तः पादोत्तरैर्युक्तामिति कान्तमिदं परम् ।
मुखे मुखे च पण्णासि पार्श्वयोर्विश(र्व)शनासिका ॥ १११ ॥
सहा(भा)कारं शिरस्कन्धं कान्तं विजयमेव हि ।
एवं त्रिविधनित्यां तु द्वारशोभां प्रकल्पयेत् ॥ ११२ ॥
मुखे मुखे महानासी पार्श्वयोश्च तथैव च ।
अर्धकोटिपतत्साढ्यं पञ्जरं च तदाकृति ॥ ११३ ॥
शालाकारं शिरोपेतमयुग्मस्तूपिसंयुतम् ।
विश्वं विशालमेतद्धि विशालालयमुच्यते ॥ ११४ ॥
अर्धकोटिसहसाङ्गं पार्श्वयोर्भद्रनासिका ।
पार्श्वयोर्वेशनास्यङ्गमयुग्मस्तूपिकान्वितम् ॥ ११५ ॥
पादं प्रत्यल्पनासाढ्यं सर्वावयवसंयुतम् ।
विप्रतीकान्त(न्ता)लकारं वक्ष्यते तु विशेषतः ॥ ११६ ॥
पूर्ववद्भूमिभागं च चतुर्दीप(दिग्भ)द्रसंयुतम् ।
महानासीचवसा(तुष्का)ढ्य शिरोभद्रसमन्वितम् ॥ ११७ ॥
अन्तः पादोत्तरैर्युक्तमयुग्मस्तूपिकान्वितम् ।
त्रिविधा द्वाद(र)शाला स्याद्द्वारप्रासादमुच्यते ॥ ११८ ॥

अन्तः पादाधारयुक्तं मन्धाध्याणै(मण्टपाणै)रलंकृतम् ।
द्वारे द्वाराङ्गसंयुक्तं द्वारं नन्द्यावर्तसंयुतम् ॥ ११९ ॥
पूर्वेऽपरे च शालायाः सभद्रं भद्रनासिका ।
नानामसूरकं स्तम्भवेदिकाजालतोरणम् ॥ १२० ॥
अन्तः पादोपरैर्युक्तं मध्यवा(मो)रणसंयुतम् ।
पार्श्वयोर्दण्डवक्का(क्र-)द्यं क्षुद्रनास्य(सी)विभूषितम् ॥ १२१ ॥
शालाकारं शिरोपेतं आस्फादिविभूषितम् ।
केशाविशालालंकारं भूमिभागे च पूर्ववत् ॥ १२२ ॥
पार्श्वयोश्च मुखे पृष्ठे महानासीचतुष्टयम् ।
अयुग्मस्तूपिकायुक्तं द्वारमासादकुट्यकम् ॥ १२३ ॥
मध्येऽहं तारं(द्वार)हर्म्यस्य लक्षणं द्विजसत्तम ।
मायुक्तपरमकर्तव्यं भूमिभागे द्विजोत्तम ॥ १२४ ॥
सभाशिरस्यसंयुक्तं स्वस्तिकाकृतिनासिकम् ।
पादोत्तरैर्युतं युग्मं..........स्तूपिनाऽन्वितम् ॥ १२५ ॥
कूटं शिखरनासाढ्यमयुग्मस्तूपिनासिकम् ।
कूटादिभूमिभागं च मानेनैव प्रकल्पयेत् ॥ १२६ ॥
अपरे(रे च)परे नासि(सी)सतारे द्व्यंशनीव्रकम् ।
शालाकार्य(रं) शिरः कार्यं यश्वं(वस्त्रं)स्तूपिकान्वितम् ॥१२७॥
शालानिष्कान्तसंयुक्तं नानालंकारसंयुतम् ।
नानाधिष्ठानचरणैर्युक्तं वत्सोपपीठकम् ॥ १२८ ॥
द्वारहर्म्यं त्रिधा प्रोक्तं शृणु गोपुरलक्षणम् ।
चतुर्दिग्भद्रसंयुक्तमन्तः पादोत्तरैर्युतम् ॥ १२९ ॥
शालाकारशिरोयुक्तं भद्रनासी मुखे मुखे ।
पार्श्वयोश्च महानासि(सी)पादं प्रत्यल्पनासिका ॥ १३० ॥

शशिभद्रसमायुक्तं मध्ये वारणसंयुतम् ।
नानामसूरकस्तम्भवेदिकाद्यैरलंकृतम् ॥ १३४ ॥
सभाकारं शिरो वाऽपि शालाकारमथापि वा ।
मुखे मुखे महानासी पार्श्वयोर्द्विद्विनासिका(के) ॥ १३५ ॥
अन्तः पादोत्तरैर्युक्तं प्रस्तरे तु तलं प्रति ।
अन्तःस्थो(सो)पानसंयुक्तं मध्ये वारणसंयुतम् ॥ १३६ ॥
एवं त्रिधा समुद्दिष्टं द्वारगोपुरमध्यमम् ।
अलिन्द्राणां च कुड्यं वा रूपभस्त(स्थ)लमेव वा ॥ १३७ ॥
तुल्यपादैः प्रस्तरं चाऽस्य अलिन्द्राङ्गं यथोचितम् ।
शालाकारं सभाकारं मालिकाकारमेव च ॥ १३८ ॥
यद्यदिष्टं तु यद्द्वारे तत्तथैव प्रकल्पयेत् ।
पार्श्वे पार्श्वेऽङ्घ्रि पा(पा)दाभ्यां मध्यकुड्ययुतं तु वा ॥ १३९ ॥
गृहपिण्डी गर्भगेहं भागिधैव प्रकल्पयेत् ।
अलिन्द्रं हारयोर्माने विहृताङ्घ्रिकमेव वा ॥ १४० ॥
प्रस्तरेदिष्टभूम्यन्तं सोपानादिसमन्वितम् ।
कूटकोष्ठाद्यलंकारमूर्ध्वस्तम्भम(स्मान्म)कल्पयेत् ॥ १४१ ॥
भूमिभागवलंकारं गलान्तं परिकल्पयेत् ।
शीर्षं दण्डाग्रं शालाभं शालाकारं तदुच्यते ॥ १४२ ॥
तुपारोप्य तथायत्तं सभाकारकमुच्यते ।
प्रस्तरं प्रतिसंछाद्य मण्डपं यथाविधिना ॥ १४३ ॥
मालिकाकृतिकं ख्यातं मण्डपे तु परस्परम् ।
गोपुरं त्वेवमाख्यातं परिवारविधिं शृणु ॥ १४४ ॥

इति काश्यपशिल्पे गोपुरलक्षणं पञ्चचत्वारिंशः पटलः समाप्तः ।

---

अथ षट्चत्वारिंशः पटलः ।

---

॥ परिवारः ॥

---

अथ वक्ष्ये विशेषेण परिवारविधिं परम् ।
अष्टौ च षोडशं चै(वा त्वे)व द्वात्रिंशच्च यथाक्रमम् ॥ १ ॥

अन्तर्मण्डलगैः सर्वैः परिवारं न कल्पयेत् ।
संकल्पान्तं चारधारा परिवाराष्टकं द्विज ॥ २ ॥
फलाऽस्य परिवारास्तु समाहारे प्रकल्पयेत् ।
प्राकारे तु चतुर्थो तु द्वात्रिंशत्परिवारकम् ॥ ३ ॥
तत्तत्प्राकारमध्ये वा सालकुड्याश्रितं तु वा ।
मुखायामं विना वीजं चतुरश्रे कृते सति ॥ ४ ॥
नवांशं विभजेद्बीजमर्धांशे मूलहर्म्यकम् ।
तथा दृष्टार्धभागेषु पूर्वादिक्रमयोगतः ॥ ५ ॥
प्राच्यां वै वृषभं स्थाप्य अनलं त्वग्निगोचरे ।
अग्निदुग्धां[तु] वायव्ये सप्तमातरमातृणाम् ॥ ६ ॥
दक्षिणे वीरभद्रं वा वामेऽ(विघ्न)विनायकं तथा ।
एव(कु)बेरं तु वायव्ये नैर्ऋत्यां विघ्नविनायकम् ॥ ७ ॥
कुमारं वारुणे देशे ज्येष्ठं वै वायुगोचरे ।
सौम्ये तु केशवस्थानं तत्र कात्यायनी तु वा ॥ ८ ॥
भास्करं स्मकरे देशे ते पीठे प्रतिमं तु वा ।
प्रतिमा स्यालयोपेता पीठं चेदालयं विना ॥ ९ ॥
इन्द्रानलशिवाशस्थाः पश्चिमाभि(दि)मुखस्थिताः ।
धृतिवारुणवायुश्च सर्वाश्च प्राङ्मुखस्थिताः ॥ १० ॥
विष्णुश्चेत्प्रमुखः सौम्ये दुर्गा चेद्दक्षिणानना(ना) ।
मातरः सौम्यवक्त्रास्तु विदेशः पश्चिमाननः ॥ ११ ॥
मातृवामस्थविघ्नेशः प्राच्यामाननमुच्यते ।
आदौ वा द्वित्रिसाले वा अंशे चण्डेश्वरालयम् ॥ १२ ॥
त्रिदण्डे बलिपीठाग्रे वृषस्थानं परं भवेत् ।
अपरध्वजदण्डेन तयोर्मध्येऽष्टभाजिते ॥ १३ ॥
नवधा स्यात्पुरस्थानं गोपुरद्वारनिर्गतिः ।
मण्डपाद्वाऽथ तन्नीत्रं वृषपीठान्तरं भवेत् ॥ १४ ॥
परिवाराष्टम(कं)ह्येवं षोडशं त्वधुना शृणु ।
वीजे तु पञ्चपञ्चांशे शकेभागादिषु क्रमात् ॥ १५ ॥
इन्द्रश्चाग्न्यासरोहिश्च पितरश्चायमस्तथा ।
रोहिणी निर्ऋतिश्चैव अप्सरोगण एव च ॥ १६ ॥

वरुणाद्विषयश्चैव वायुरुद्रस्तथैव च ।
सोमश्च क्षेत्रपालश्च ईशकद्वारसभास्करः ॥ १७ ॥
मूलगेहं समीक्ष्यास्ते स्थापयेत्तु प्रदक्षिणम् ।
कर्णभागमतान्देवान्भागदेशे पश्चिमाननान् ॥ १८ ॥
पश्चिमे सौम्यभागगौ कल्पयेत्कल्पवित्तमः ।
षोडशं होवमाख्यातं द्वात्रिंशद्धुनोच्यते ॥ १९ ॥
चतुर्थं तालबीजं तु नन्दमन्वत्रिभाजिते ।
बाह्ये तु चतुरष्टांशे पूर्वादिक्रमयोगतः ॥ २० ॥
अनकार्यभवश्चैव मोटिसूक्ष्मं तथैव च ।
गौरीशसर्वस्तथाभासाद्याशिरोत्तमाभूरतथा ॥ २१ ॥
ईशानः कौशिकश्चैव एकासोऽर्विध एव च ।
सरस्वती तथा लक्ष्मीरेकरुद्रस्थैव च ॥ २२॥
पशुपतिर्वसुश्चैव महादेवास्त्रिमूर्ति च ।
धनदो रुद्रकालाग्नी श्रीषण्डो नागदेवता ॥ २३ ॥
हिमं च पृथिवी चैव शिखण्डि मरुतस्तथा ।
अग्निः शनैश्चरश्चैव द्वात्रिंशत्परिवारकाः । २४ ॥
अथाऽऽसु पृथिवीस्थाने गौरीस्थापनमाचरेत् ।
गौरीस्थाने न्यसेत्पृथ्वीं शेषं पूर्ववदाचरेत् ॥ २५ ॥
अभ्यन्तरानना सर्वान्स्थापयेत्तु विशेषतः ।
गौर्यास्तु धनमालाऽथ विमानं वाऽथ कल्पयेत् ॥ २६ ॥
अन्येषामपि देवानां विमानं वाऽथ मण्डपम् ।
मूलहर्म्यत्रिपादं वा अर्धं वा पादमेव वा ॥ २७ ॥
गर्भगेहसमं वाऽपि गर्भार्धं वा त्रिपादकम् ।
त्रिचतुष्पञ्चहस्तं वा परिवारालयं भवेत् ॥ २८ ॥
आभाससदने तेन मानेनैव समाचरेत् ।
शक्तिकादिषु यन्मूलं गेहमेवं तथैव हि ॥ २९ ॥
कारत्तेरथनितत्र ( येत्सदनं ? ) म्यं विपरीतं विपल्करम् ।
त्रिवर्गमण्डपाकारं चतुरर्धासमन्वितम् ॥ ३० ॥
उक्षावासं प्रकर्तव्यं शेषाणां तु यथोचितम् ।
परिवारालयं प्रोक्तं प्रतिमालक्षणं शृणु ॥ ३१ ॥

परिवारालये द्वारगर्भमानं नयेद्बुधः ।
सकलानां तु यन्मानं तन्मानं तत्र गृह्यताम् ॥ ३२ ॥
सर्वस्य स्थानकं वासनं तु वा ।(?)
[1]द्वात्रिंशत्परिवारं तु जातिहर्म्ये प्रकल्पयेत् ॥ ३३ ॥
छन्दे तु षोडशं ख्यातं शेषेषु त्वष्टकं भवेत् ।
अथवा सर्वहर्म्येषु सर्वं वा परिकल्पयेत् ॥ ३४ ॥
ना(जा)त्याद्यासकभावी(माना)नि प्रतिमालक्षणोक्तवत् ।
आदौ तु परिवाराणां वक्ष्ये वृषभलक्षणम् ॥ ३५ ॥
तुङ्गे पञ्चदशांशे तु एकांशं चाङ्गुलं भवेत् ।
[1]चत्वारिंशाङ्गुलायामं गलात्पृष्ठावसानकम् ॥ ३६ ॥
मूर्धादिगलपर्यन्तं षण्मात्रमुदाहृतम् ।
तस्मांद्ग्रीवोच्चमष्टांशं पूर्वोक्तं षोडशाङ्गुलम् ॥ ३७ ॥
ऊरुदीर्घं चतुःस्थानैः षण्मात्रं परिकीर्तितम् ।
जानुमानं द्विमानं स्याज्जङ्घामानं षडङ्गुलम् ॥ ३८ ॥
खुरमानं द्विमानं स्यात्तुङ्गमेवं प्रकल्पयेत् ।
शृङ्गान्तरं तु वस्वंशं शृङ्गोच्चं चतुरंशकम् ॥ ३९ ॥
शृङ्गमूलविशालं तु चतुरङ्गुलमुच्यते ।
[1]अर्धाङ्गुलं तदग्रं स्याद्व्यासमूलात्क्रुशं क्रमात् ॥ ४० ॥
किंचिद्वक्रसमायुक्तौ शृङ्गमध्यन्तरे बुधः ।
ललाटवा(व्या)सनन्दांशं मुखव्यासं शराङ्गुलम् ॥ ४१ ॥
घनं च तत्समाख्यातं नेत्रमेकाङ्गुलं भवेत् ।
नेत्रमध्यललाटोच्चं वेदमात्रमुदाहृतम् ॥ ४२ ॥
नेत्रात्कर्णान्तपर्यन्तंपञ्चांशं कर्णदीर्घकम् ।
कर्णमूलविशालं तु द्विमात्रमिति विद्यते ॥ ४३ ॥
मध्यवा(व्यासं)चतुर्मात्रमग्रमङ्गुलविस्तृतम् ।
घनमर्धाङ्गुलं ख्यातं घ्राणं सार्धाङ्गुलायतम् ॥ ४४ ॥
व्यासमेकाङ्गुलं ख्यातं गाढं तत्सममुच्यते ।
अङ्गुलं नासिकादूर्ध्वं तुङ्गमित्यभिधीयते ॥ ४५ ॥
आस्यं पञ्चाङ्गुलायाममधरोष्ठं द्व्याङ्गुलम् ।
त्रिमात्रं चोत्तरोष्ठं च युक्तितः कल्पयेत्क्रमात् ॥ ४६ ॥

जिह्वायामविशालोच्चं त्रिद्व्येकाङ्गुलमुच्यते ।
ग्रीवाव्यासो दशांशः स्यात्तन्मूलं द्वादशाङ्गुलम् ॥ ४७ ॥
पृष्ठग्रीवस्य मूलस्य व्यासमष्टाङ्गुलं भवेत् ।
पृष्ठग्रीवाग्रविस्तारं षडङ्गुलमुदाहृतम् ॥ ४८ ॥
ककुदुच्चं चतुर्मात्रं तस्य व्यासं षडङ्गुलम् ।
ग्रीवस्याग्रघनं चापि अत्यर्धाङ्गुलमुच्यते ॥ ४९ ॥
शरीरे मध्यमे वा(व्या)सं चतुर्विंशाङ्गुलं भवेत् ।
अपरे व्यासमान्वंशं शक्तियुक्त्या समाचरेत् ॥ ५० ॥
पूर्वपादोरुमूलस्य व्यासं पञ्चाङ्गुलं भवेत् ।
तदूर्ध्वाग्र चतुर्मात्रं जङ्घामूलं च तत्समम् ॥ ५१ ॥
जङ्घाग्रं गुणमात्रं स्यात्सार्धाग्न्यंशं खुरास्ततम् ।
अपरे चोरुमूलं स्याद्व्यासवेदं क्रमात्कृतम् ॥ ५२ ॥
अग्रमष्टाङ्गुलं व्यासं मा(व्या)समूलं षडङ्गुलम् ।
जङ्घाग्रं चतुरङ्गुल्यं खुरस्या(व्या)सं युगांशकम् ॥ ५३ ॥
ऊरुपञ्चाङ्गुलायामं जानुदीर्घं द्विमात्रकम् ।
जङ्घापञ्चाङ्गुलं दीर्घं त्रिमात्रं खुरमानकम् ॥ ५४ ॥
पुच्छव्यासं त्रिमात्रं वा मूलाग्रे सार्धमात्रकम् ।
पुच्छं जङ्घाग्रसीमान्तं वालदेशे विशेषतः ॥ ५५ ॥
पुच्छाग्रे केशसहितव्यासं वेदाङ्गुलं भवेत् ।
मूलाग्रं चैकमात्रं स्यात्केशदीर्घं युगाङ्गुलम् ॥ ५६ ॥
बीजायामविशालं तु सर्वं वस्वङ्गुलं क्रमात् ।
द्विमात्रं घनमित्युक्तं शेफायामं युगाङ्गुलम् ॥ ५७ ॥
उदयादङ्गुलत्रयमघनमित्यभिधीयते ।
स्थितं वा शयितं वाऽपि पद्मे वा भद्रपीठके ॥ ५८ ॥
बुधस्पष्टकागर्भशिलालोहात्क्रमेण वा । (?)
स्वर्णजं ताम्रजं वाऽपि लोहजं वृषभं कुरु ॥ ५९ ॥
किंचिद्धीनं न कर्तव्यं मानोन्मानप्रमाणके।
तदा कर्तुस्तु कर्तृत्वं तस्माल्लक्षणमन्वितम् ॥ ६० ॥
कर्तव्यं विपरीतं चेद्विपरीतफलप्रदम् ।
वृषभे लक्षणं स्यातं शृणु वह्नेस्तु लक्षणम् ॥ ६१ ॥

अनलेश्वरलक्षणम्—

उत्तमं दशतालेन कर्तव्यमनलेश्वरम् ।
द्विवक्त्रं त्वेकहृदयं द्विनासं च पट्कुक्षि तु ॥ ६२ ॥
त्रिमेखलं त्रिपादं च सप्तजिह्वाभिरावृतम् ।
दक्षवक्त्रे [च]तुर्जिह्वा वामवक्त्रे त्रिजिह्वया ॥ ६३ ॥
मेषारूढं चतुःशृङ्गं जटामुकुटमण्डितम् ।
दक्षिणे तु चतुर्हस्तं वामपार्श्वे त्रिहस्तकम् ॥ ६४ ॥
उपाशक्तिरग्निस्तथा स्रुक्स्रुवं वै दक्षिणोत्तरे ।
( शक्तिमग्नं स्रुवस्रुवौ च बिभ्रद्दे दक्षिणेकरे ) ॥
तोमरं व्यजनं वामे घृतपात्रं विशेषतः ॥ ६५ ॥
वपुः स्वर्णमिदं ख्यातं नेत्रेपिङ्गलसंनिभम् ।
प्रभामण्डलसंयुक्तं पद्मपीठोपरि स्थितम् ॥ ६६ ॥
दुकूलवसनोपेतं कल्पयेदनलेश्वरम् ।

सप्तमातृकालक्षणम्—

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ ६७ ॥
वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ।
दक्षिणेऽदक्षिणे चैव वीरभद्रविनायकौ ॥ ६८ ॥
चतुर्भुजौ त्रिनेत्रौ च जटामुकुटमण्डितौ ।
सर्वाभरणसंयुक्तौ श्वेतवर्णवृषध्वजौ ॥ ६९ ॥
सशूलाभयहस्तौ च दक्षिणे तु करद्वयम् ।
गदावरदहस्तौ च वामपार्श्वे करद्वयम् ॥ ७० ॥
श्वेतपद्मासनासीनौ वटवृक्षसमाश्रितौ ।
चतुर्वक्त्रचतुर्बाहुसंयुक्ता हेमसंनिभा ॥ ७१ ॥
दक्षिणाभयशूलं च वरदं चाक्षमालिकाम् ।
रक्तपद्मासनासीन(मीना) हंसवाहनकौतुका ॥ ७२ ॥
जटामुकुटसंयुक्ता पीताम्बरधरा वरा ।
ब्राह्मणीत्येवमाख्याता ब्रह्मवृक्षसमन्विता ॥ ७३ ॥

चतुर्भुजा त्रिणे(ने)त्रा च अतिरक्तसमप्रभा ।
शूलाभयकराऽसर्वे(व्ये) वामे वरदहस्तका ॥ ७४ ॥
जपमालासमायुक्ता जटामुकुटसंयुता ।
ईश्वरेण समा ह्येषा ईश्वरीति प्रकीर्तिता ॥ ७५ ॥
चतुर्भुजा त्रिनेत्रा च रक्तवस्त्रनिभान्विता ।
सर्वाभरणसंयुक्ता वाचिकाबद्धकुट्टिमा ॥ ७६ ॥
शक्तिकुक्कुटहस्ता च वरदाभयपाणिका ।
मयूरध्वजवाहीं(हा) च उदुम्बरसमाश्रिता ॥ ७७ ॥
शङ्खचक्रधरा देवी वरदाभयपाणिका ।
सुस्तना चारुवदना श्राम्या(श्यामा)मा च सुलोचना ॥ ७८ ॥
पीताम्बरधरा देवी किरीटमुकुटान्विता ।
राजवृक्षं समाश्रित्य गरुडध्वजवाहिनी ॥ ७९ ॥
वैष्णवीं कारयेद्देवीं विष्णुभूषणभूषिताम् ।
करञ्जद्रुमसंयुक्ता महिषध्वजवाहिनीम् ॥ ८० ॥
चतुर्भुजां त्रिनेत्रां च सर्वाभरणभूषिताम् ।
किरीटमकुटोपेतां विद्रुमस्य निभाननाम् ॥ ८१ ॥
अङ्कुशं चाभयं सव्येऽवामे वरदशक्तिनी ।
कल्पद्रुमं समाश्रित्य गजध्वजाऽजवाहिनी ॥ ८२ ॥
चतुर्भुजा त्रिनेत्राच रक्तवर्णा(र्णो)र्ध्वकेशिनी ।
कपालशूलहस्ता च वरदाभयपाणिनी ॥ ८३ ॥
शिरोमालापरीता च पद्मपीठोपरि स्थिता ।
व्याघ्रचर्माम्बरधरा नागेन्द्राच्छादितस्तनी ॥ ८४ ॥
दंष्ट्राकरालवदना वटवृक्षसमाश्रिता ।
चामुण्डालक्षणं ह्येव मेकबेरं च तद्भवेत् ॥ ८५ ॥
दक्षपादस्थिताः सर्वा वामपादं तु लम्बितम् ।
एवं वै सप्तमातॄणां लक्षणं कथितं मया ॥ ८६ ॥

इति काश्यपशिल्पे सप्तमातृकालक्षणं षट्चत्वारिंशः पटलः ।

## अथ सप्तचत्वारिंशः पटलः ।

---

विनायकलक्षणम्—

अथ वक्ष्ये विशेषेण विनायकस्य लक्षणम् ।
पादाद्युष्णीषसीमान्तं चतुःषष्ट्यंशकं भवेत् ॥ १ ॥
मूर्धमस्तकसीमान्तमङ्गुलद्वयमुच्यते ।
तस्मादितेन सूत्रान्तं चतुर्मात्रमुदाहृतम् ॥ २ ॥
ऊरू षडर्धमात्रं स्याज्जानुदीर्घं गुणाङ्गुलम् ।
जङ्घा चोरुसमं दीर्घं गुणांशं पादव(पत्त)लोदयम् ॥ ३ ॥
सप्ताङ्गुलं तथायाममङ्गुष्ठाग्रावसानकम् ।
पादाङ्गुष्ठायतं द्व्यंशं सार्धांशं तु कनिष्ठिका ॥ ४ ॥
तर्जन्यादिकनिष्ठान्तं प्रत्येकं तु करोन्नतम् ।
त्रयोदशाङ्गुलं बाहु प्रकोष्ठाया(वा)नवाङ्गुलम् ॥ ५ ॥
चतुर्मात्रं तलायाममन्यंशं मध्यमाङ्गुलम् ।
तर्जन्यनामिके द्वे च एकविंशत्यवायतम् ॥ ६ ॥
कनिष्ठाङ्गुष्ठयोश्चैव दीर्घं सप्तदशायतम् ।
द्वादशाष्ट नवाष्टौ च सप्तसंख्यायवं(तं)क्रमात् ॥ ७ ॥
अङ्गुष्ठादिकनिष्ठान्तं व्यासमित्यभिधीयते ।
तत्तद्व्यासत्रिपादं स्यान्नखव्यासमुदाहृतम् ॥ ८ ॥
नखव्यासत्रिपादं स्यान्नदीर्घाग्रवृत्तवत् ।
खेदं करतलव्यासं मणिबन्धोदकं भवेत् ॥ ९ ॥
प्रकोष्ठकं युगाङ्गुल्यं बाहुव्यासं विदर्धकम् ।
बाहुमूलं तु यस्त्र्यंशं हस्तकोष्ठाङ्गुलान्तकम् ॥ १० ॥
सप्ताङ्गुलं तु तद्भिन्नो(न्नं) मुखमध्ये दशाङ्गुलम् ।
हस्तमूलं षडङ्गुल्यं द्वात्रिंशत्पस्यदीर्घकम् ॥ ११ ॥
तदङ्गुलाग्रविस्तारं सार्धमात्रं द्विजोत्तम ।
क्रमेण कृत्वा हस्ते तन्मध्ये सुषिरद्वयम् ॥ १२ ॥
वामदन्तायतं वेदमात्रमित्यभिधीयते ।
दक्षिणे दन्तमूलं स्याद्वामाग्रयमतलं भवेत् ॥ १३ ॥

अधरस्य निष्क्रान्तं लम्बनद्वयमङ्गुलम् ।
नेत्रायामं विशालं च षड्यवं परिकीर्तितम् ॥ १४ ॥
कण्ठं भूताङ्गुलव्यासमुत्सेधं चैव तद्भवेत् ।
अर्धाङ्गुलं घनं तस्य कर्णमूलं द्वयाङ्गुलम् ॥ १५ ॥
षड्गजाननं तदुत्कर्तव्यं तु मुखं द्विज ।
बाहो(हु)पर्यन्तविस्तारं द्वात्रिंशदङ्गुलं भवेत् ॥ १६ ॥
एकोनविंशदङ्गुल्यं कक्षान्तरमुदाहृतम् ।
स्था(स्त)नान्तरं दशाङ्गुल्यं हिक्कायाश्च द्विजो बहिः ॥ १७ ॥
स्था(स्त)नाभं द्वय (द्वि)यवव्यासं द्व्यङ्गुलं स्तनमण्डलम् ।
स्था(स्त)नाधःस्थविशालं तु त्रिपञ्चाङ्गुलमुच्यते ॥ १८ ॥
द्वाविंशदङ्गुलं स्यात्तं मध्योदरविशालकम् ।
नाभिनिम्नविशालं तु अत्यर्धा(र्धो)ङ्गुलमुच्यते ॥ १९ ॥
लिङ्गायामं गुणाङ्गुल्यं तस्यार्धं तस्य विस्तृतम् ।
मुष्कायामविशालं तु गुणाङ्गुलमुदाहृतम् ॥ २० ॥
ऊरुव्यासं तु भान्वंशं जानुव्यासं नवाङ्गुलम् ।
जङ्घामूलविशालं तु सप्तमात्रमुदाहृतम् ॥ २१ ॥
नखविस्तृतकं चापि सार्धं द्व्यङ्गुलमुच्यते ।
तदग्रं स्यात्तदासार्धं षण्मात्रमिति विद्यते ॥ २२ ॥
पौष्ण्यायामविशालं तु गुणाङ्गुलमुदाहृतम् ।
द्वादशार्धौ षडष्टौ च पञ्च षट्कयवं क्रमात् ॥ २३ ॥
अङ्गुष्ठादिकनिष्ठान्तं पादाङ्गुलविशालकम् ।
सन्निपादनवव्यासं तदर्धायतमण्डलम् ॥ २४ ॥
स्थानकं वाऽऽसनं वाऽपि पद्मपीठे विशेषतः ।
स्वदन्तं दक्षिणे वा(ह)स्ते वामहस्ते कपित्थके ॥ २५ ॥
मोदकं गजहस्ते तु अङ्कुशं दक्षिणे करे ।
वामहस्ते तु पाशं वा नागं चैवाक्षमालिका ॥ २६ ॥
त्रिनेत्रं हेमसंकाशं दुकूलवसनान्वितम् ।
अभङ्गं समभङ्गं वा स्थानके तु प्रकल्पयेत् ॥ २७ ॥
आसनं स्वासनं चेत्तु वामपादं तु चायतम् ।
मानान्तरे मूर्ध्नि पादे पादौ तु कुटिकां विना ॥ २८ ॥

ईषद्वक्रतनुर्वामे कर्तव्यं तु विशेषतः ।
व्यालयज्ञोपवीतं तु किरीटमुकुटान्वितम् ॥ २९ ॥
करं मुकुटकूटं वा जटामौलिकमेव वा ।
सर्वाभरणसंयुक्तं महाकायं महोदरम् ॥ ३० ॥
एवं विनायकं ख्यातं शृणु षण्मुखलक्षणम् ॥ ३१ ॥

इति काश्यपे विनायकलक्षणं सप्तचत्वारिंशः पटलः ।

---

अथाष्टचत्वारिंशः पटलः—

---

षण्मुखलक्षणम् ।

पश्चात् प्रोक्तमेनैव (मानेन) स्कन्दं कुर्याद्विलक्षणम् ।
मानोन्मानादय(दिकं) सर्वं प्रोक्तं वै स्कन्दलक्षणे ॥ १ ॥
द्विभुजं वा चतुर्हस्तं षड्भुजं भानुहस्तकम् ।
शक्तिं बाणं च खड्गं च चक्रं पाशप्रसारितम् ॥ २ ॥
सव्ये वामे तु पिच्छं तु खड्गकाकुटकं तथा ।
धनुर्दण्डं हलं चैव भानुहस्तान्विते स्थितम् ॥ ३ ॥
षड्भुजस्य द्वयं खड्गं शक्तिर्दक्षिणपार्श्वके ।
खेटकं चाक्षमाला च कुक्कुटं वामहस्तके ॥ ४ ॥
चतुर्भुजेऽभयं शक्तिं दक्षिणे तु करद्वयम् ।
कुक्कुटं चाक्षमाला च वामहस्ते धृतो गुहः ॥ ५ ॥
द्विभुजं कुक्कुटं वामे शक्तिर्दक्षिणहस्तके ।
अनुक्तं तु यत्सर्वं उमास्कन्दसहोक्तवत् ॥ ६ ॥
स्कन्दलक्षणमाख्यातं ज्येष्ठाविधिमतः परम् ।

अथ ज्येष्ठादेवीलक्षणम्—

द्विभुजाऽनलसंकाशा लम्बोष्ठा तुङ्गनासिका ॥ ७ ॥

लम्बमानस्तना कुक्षिनीला वा रक्तवाससी ।
उत्पलं दक्षिणे हस्ते वामे तु करकं न्यसेत् ॥ ८ ॥
भद्रपीठे सुखासीना द्विपादं चैव लम्बिता ।
सर्वाभरणसंपन्ना वाचिकाबन्धकुटिका ॥ ९ ॥
काकध्वजसमायुक्ता सानुगा तिलकान्विता ।
तस्या दक्षिणपार्श्वे तु वृषो वै वृषवाहनः ॥ १० ॥
द्विभुजे दक्षिणे हस्ते दण्ड वामेन सूचिधृत् ।
लम्बितं दक्षिणं पादं वामयुत्कुटिकासनम् ॥ ११ ॥
श्वेतवर्णो महाकायः सर्वाभरणभूषितः ।
करण्डमुकुटोपेतो दुकूलवसनान्वितः ॥ १२ ॥
वृषं वै दक्षिणे स्वेवं वामे त्वश्विमथोच्यते ।
सुस्तना यौवनाङ्गा च सर्वाभरणभूषिता ॥ १३ ॥
कृष्णाञ्जननिभा रक्ता वस्त्रेणैव विभूषिता ।
एवं ज्येष्ठा समाख्याय दुर्गालक्षणमुच्यते ॥ १४ ॥
चतुर्भुजा द्विनेत्रा च सा तु श्यामनिभाम्बरा ।
सौम्या पीताम्बरोपेता पीनोरुजघनस्तना ॥ १५ ॥
करण्डमुकुटोपेता सर्वाभरणभूषिता ।
अभयं दक्षिणे हस्ते कटकं वामहस्तके ॥ १६ ॥
परहस्ते तु सव्ये च चक्रं वामे तु शङ्खधृत् ।
समपादस्तना कुर्यात्पद्मपीठोपरिस्थिताम् ॥ १७ ॥
नागेन्द्रेण स्तनं बद्ध्वा रक्तकञ्चुकधारिणी ।
एवं दुर्गा समाख्याता विष्णुलक्षणमुच्यते ॥ १८ ॥

विष्णुलक्षणम् —

विष्णुं किरीटमुकुटकटिसूत्रादिमण्डितम् ।
पीताम्बरधरं सौम्यं चतुर्भुजसमन्वितम् ॥ १९ ॥
अभयं दक्षिणे हस्ते कटकं वामहस्तके ।
गदापद्मं च वामे तु शङ्खचक्रं तु दक्षिणे ॥ २० ॥

पद्मपीठोपरिस्थं तु सस्यया(श्या)मनिभाकृतिम् ।
आसीनं वा स्थितं वाऽपि सव्यसव्ये श्रियान्वितम् ॥ २१ ॥
संयुक्तां वा केवलां वा विष्णुमूर्तिं प्रचक्षते ।
एकवक्त्रां द्विहस्तां च जातिलिङ्गसमप्रभाम् ॥ २२ ॥
ईषद्विजृम्भपद्मौ द्वौ स्कन्देनैव करोधृतौ ।
करण्डमुकुटोपेतं सर्वाभरणभूषितम् ॥ २३ ॥
शार्ङ्गं दक्षिणहस्ते तु वामहस्ते कुशान्वितम् ।
विशालोदरं तथा(लम्बउदर)ग्रीवं वामे श्रियसमन्वितम् ॥२४ ॥
द्विनेत्रं सौम्यवदनं सिंहासनोपरि स्थितम् ।
आसीनं वा प्रकर्तव्यं गजारूढमथापि वा ॥ २५ ॥
इन्द्रमेवं समाख्यातमश्विनावथ वक्ष्यते(क्ष्यहम्) ।

अश्विनोर्लक्षणम्—

भद्रसिंहासनासीनावश्विनौ विश्वरूपिणौ ॥ २६ ॥
दाडिमीपुष्पसंकाशावश्वमयौ सोपपीनतौ(ठकौ) ।
फुल्लरक्तोत्पलाक्षौ च कमण्डलु सुधारिणौ ॥ २७ ॥
नासत्यौ दस्रनामानौ चूडामुकुटधारिणौ ।
करद्वयसमायुक्तौ सम्भूषणविभूषितौ ॥ २८ ॥
अभयं दक्षिणे हस्ते पुस्तकं वामहस्तके ।
लम्बितौ दक्षिणौ पादौ वाममुत्कुटिकासनौ ॥ २९ ॥
देवानां भिषजावेतौ द्वौ चिकित्साविधायकौ ।
तयोः पार्श्वद्वये विप्र ...वामे च.... दक्षिणक्रमात् ॥ ३० ॥
धृतिः संजीवनीचैव संस्थितौ चामरौ धृतौ।
पृष्ठे विशल्यकरणी द्वे स्त्रियौ पीतपिङ्गलौ ॥ ३१ ॥
वामे धन्वन्तरिश्चैव वामात्रेयस्तथैव च ।
पीतरक्तनिभावेतौ संगतौ कृष्णवाससौ ॥ ३२ ॥
खड्गखेटकसंयुक्तौ सर्वाभरणभूषितौ ।
अश्विनौ तु समाख्यातौ वह्निः पूर्ववदेव हि ॥ ३३ ॥

अथ पितरः

पितरः पीतवर्णाभा वृद्धास्ते केशकुञ्चिताः ।
यज्ञसूत्रसमायुक्ता द्विभुजाः श्वेतवाससः ॥ ३४ ॥
नागाभरणसंयुक्ताः शशितुल्यनिभाननाः ॥ ३५ ॥
फलकाभद्रपीठस्थाः पितरस्तु महासनाः ।
वामजानूपरिन्यस्तवामहस्तसमन्विताः ॥ ३६ ॥
सूचिदक्षिणहस्तास्तु पितरस्तु(तृणां रूप)मुच्यते ।
पितरस्तु समाख्याताः शृणु वैवस्वतं ततः ॥ ३७ ॥

अथ वैवस्वतः ।

द्विभुजं कृष्णवर्णं तु खड्गखेटकधारिणम् ।
करालदंष्ट्रवदनं रक्तमाल्यानुलेपनम् ॥ ३८ ॥
रक्तवस्त्रधरं चोग्रं किरीटमुकुटाञ्चितम् ।
दीप्ताग्निसदृशाक्षं च महामहिषवाहनम् ॥ ३९ ॥
वैवस्वतस्य पार्श्वस्थौ समीपस्थौ ग्रहोग्रकौ ।
चित्रगुप्तः किंनरश्च द्वारपार्श्वे तु संस्थितौ ॥ ४० ॥
कृष्णश्यामनिभौ तौ च रक्तवस्त्रधरावुभौ ।
पीठपार्श्वे स्थितौ मृत्युसहितौ च्य(तावु)ग्रतेजसौ । ४१ ॥
नीललोहितसंकाशौ द्वौ चामरधृतास्त्रियौ ।
पुरतः संस्थितौ विप्र शर्वधर्मसमाह्वयौ ॥ ४२ ॥
यमः सिंहासनासीनो महिषीरोहितस्तथा ।
यमलक्षणमाख्यातं रोहिणीलक्षणं शृणु ॥ ४३ ॥

अथ रोहिणीलक्षणम्—

द्विभुजा करण्डमकुटा रक्तवर्णा सुशोभना ।
सर्वाभरणसंयुक्ता नागहस्ता सिताम्बरा ॥ ४४ ॥
आसीना वा स्थिता वापि सप्तसंख्या हि रोहिणी ।
रोहिण्येवं समाख्याता नैर्ऋतेर्लक्षणं ततः ॥ ४५ ॥

अथ निर्ऋतिलक्षणम्—

निर्ऋतिर्नीलवर्णस्तु द्विभुजश्च महातनुः ।
खड्गं दक्षिणहस्ते तु वामहस्ते च खेटकम् ॥ ४६ ॥

पीतवस्त्रधरं रौद्रं करालमुखदंष्ट्रकम् ।
सर्वाभरणसंयुक्तं श्वारूढं जगत्पतिम् ॥ ४७
रक्तकेशसमायुक्तं स्थितं वासितमेव वा ।
निर्ऋतिस्त्वेवमाख्यातस्ततस्त्वप्सरसः शृणु ॥ ४८ ॥

अथाप्सरोलक्षणम्—

अतिकान्तियुता रक्ताः केशभारालकान्विताः ।
नानाबन्धनसंयुक्ता नानापुष्पैरलंकृताः ॥ ४९ ॥
दुकूलवसनाः सर्वाः पीनोरुजघनस्तनाः ।
मध्यसूक्ष्माश्च सौम्याश्च किंचिस्मितहसिताननाः ॥ ५० ॥
नानागन्धानुलिप्ताङ्गा भद्रपीठोपरि स्थिताः ।
सप्तमङ्गयुताः सप्तसंख्या अप्सरसां गणाः ॥ ५१ ॥
अप्सरस्त्वेवमाख्याता वरुणस्त्वथ वक्ष्यते ।

अथ वरुणलक्षणम्—

वरुणः श्वेतवर्णस्तु द्विभुजः पाशहस्तकः ।
सर्वाभरणसंयुक्तः करण्डमुकुटान्वितः ।
पीतवस्त्रधरः शान्तो महाबलसमन्वितः ॥ ५३ ॥
यज्ञसूत्रसमायुक्तो मकरस्थो(स्था)नकासिन(स)नः ।
ऋषयः पीतवर्णास्तु नानावर्णाम्बरान्विताः ॥ ५४ ॥
वृद्धाश्च द्विभुजाः शान्ता जटाचूडासमन्विताः ।
चुलुकाहृदयान्ताश्च यज्ञोपवीतसंयुताः ॥ ५५ ॥
भस्मनैव त्रिपुण्ड्रः स्यात्स्थानकासनं तथा ।
दण्डं दक्षिणहस्ते तु च्छत्रं वामकरोद्धृतम् ॥ ५६ ॥
छत्रदण्डौ विना वाऽथ सव्ये तु ज्ञानमुद्रिका ।
वामजानूपरिन्यस्तवामहस्तसमन्विताः ॥ ५७ ॥
भृगुरगस्त्यवासिष्ठगौतमाङ्गिरसस्तथा ।
विश्वामित्रो भरद्वाज ऋषयः सप्त कीर्तिताः ॥ ५८ ॥

अथ मरुल्लक्षणम्—

द्विभुजस्तु महावीर्यो धूम्राभो धूम्रसंनिभः ।
ध्वजं वै दक्षिणे हस्ते वामहस्ते च दण्डधृक् ॥ ५९ ॥

कुञ्चितभुज(भुग्नबाहु)युतो वायुः शबलाम्बरभूषितः ।
नानाभरणसंयुक्तः केशैस्तु सुविकर्णकः ॥ ६० ॥
सिंहासनोपरिष्टात्तु शीघ्रयात्रोत्सुकः स्थितः ।
वायुरेवं समाख्यातो रुद्रलक्षणमुच्यते ॥ ६१ ॥

अथ रुद्रलक्षणम्—

चतुर्भुजास्त्रिनेत्राश्च जटामुकुटमण्डिताः ।
दृग्धपवस्त्रधराः सर्वे शुक्लवर्णाः प्रकीर्तिताः ॥ ६२ ॥
समपादस्थानकाश्च पद्मपीठोपरि स्थिताः ।
सर्वाभरणसंयुक्ताः सर्वपुष्पैरलंकृताः ॥ ६३ ॥
अभयं परशुं सव्ये कृष्णं वरदवामके ।
महादेवः शिवो रुद्रः शंकरो नीललोहितः ॥ ६४ ॥
ईशानो विजयश्चेशो देवदेवो भवोद्भवः ।
कपालीशस्त्वपि ज्ञेया रुद्रास्त्वेकादश स्मृताः ॥ ६५ ॥
सोमसिंहासनासीनं कुन्दशङ्खनिभद्यु(द्यु)तिम् ।
प्रभामण्डलसंयुक्तं द्विभुजं सौम्यवक्र(क्त्र)कम् ॥ ६६ ॥
आसीनं वा स्थितं वाऽपि कुमुदोत्पलहस्तकम् ।
हेमयज्ञोपवीताङ्गं सर्वाभरणभूषितम् ॥ ६७ ॥
शुक्लवस्त्रधरं शान्तं सर्वपुष्पैरलंकृतम् ।
त्रिविधं क्षेत्रपालं तु सात्त्विकं राजसं तमः ॥ ६८ ॥
श्वेतं रक्तं तथा कृष्णं सात्त्विकादिगुणं भवेत् ।
द्विभुजं चतुर्भुजं शान्तं राजसं षड्भुजान्वितम् ॥ ६९ ॥
तामसं चाष्टदोर्दण्डं त्रिनेत्रं समपादुकम् ।
स्थानकं पद्मपीठे तु भद्रपीठे तु वा यथा ॥ ७० ॥
शूलं दक्षिणहस्ते तु कपालं त्वितरे धृतम् ।
द्विभुजं क्षेत्रमाख्यातं चतुर्हस्तमथोच्यते ॥ ७१ ॥
परहस्तं तु सव्ये च खट्वाङ्गं खड्गमन्यके ।
अथवा पूर्वहस्ते तु अभयं वरदान्वितम् ॥ ७२ ॥
पूर्ववत्परहस्तौ द्वौ घण्टिके वामहस्तके ।
सात्त्विकं क्षेत्रमाख्यातं राजसं शृणु सुव्रत ॥ ७३ ॥

शूलं खड्गं [illegible] घण्टां च दक्षिणे तु करत्रये ।
खेटकं च कपालं च नागं पाशं तु दक्षिणे ॥ ७४ ॥
तामसे तु धनुर्बाणं दक्षिणे [illegible] करे धृतम् ।
शेषं राजसवत्स्यात् रक्तकेशोर्ध्वमण्डलम् ॥ ७५ ॥
उग्रदृष्टिसमायुक्तं नानानागविभूषितम् ।
त्रिनेत्रमग्निरूपं च क्षेत्रपालं प्रकल्पयेत् ॥ ७६ ॥
ईशो वै द्विभुजः शान्तः सर्वाभरणभूषितः ।
जटामुकुटसंयुक्तः शुक्लवस्त्रयुगैः स्थितः ॥ ७७ ॥
शुक्लयज्ञोपवीतश्च शुक्लपद्मोपरि स्थितः ।
शूलं दक्षिणहस्ते तु कपालं वामहस्तके ॥ ७८ ॥
ईश एवं समाख्यातस्ततो वै भास्करः क्रमात् ।

अथ भास्करलक्षणम् ।

द्विभुजाः पद्महस्ताश्च रक्तपद्मासने स्थिताः ॥ ७९ ॥
रक्तमण्डलसंयुक्ताः करण्डमुकुटान्विताः ।
रक्ताम्बरधराः सर्वे सर्वाभरणभूषिताः ॥ ८० ॥
छन्नवीरसमायुक्ता भास्करा द्वादशस्मृताः ।
विकर्तनो विवस्वांश्च मार्तण्डो भास्करो रविः ॥ ८१ ॥
लोकपालः प्रकाशश्च लोकसाक्षी त्रिविक्रमः ।
आदित्यश्च तथा सूर्यः अंशुमाली दिवाकरः ॥ ८२ ॥
एते वै द्वादशाऽऽदित्या उत्तरादिक्रमास्स्थिताः ।
एवं षोडश सख्याता द्वात्रिंशदथ वक्ष्यते ॥ ८३ ॥
सौम्यश्चतुर्भुजोऽनन्तः सर्वाभरणभूषितः ।
जपापुष्पनिभाकारः करण्डमुकुटान्वितः ॥ ८४ ॥
सितवस्त्रधरः शान्तस्त्रिनेत्रः पद्मसंस्थितः ।
अभयं वरदोपेतं कटकं शूलधृक्छुचिः ॥ ८५ ॥
अर्कश्चतुर्भुजः शान्तः सर्वाभरणभूषितः ।
हिरण्यसदृशमरूपः, दुकूलवसनान्वितः ॥ ८६ ॥
अभयो वरदोपेत खड्गखेटकधारकः ।
सुस्थितः पद्मपीठे तु आर्यमेवं प्रकल्पयेत् ॥ ८७ ॥

अभयश्चतुर्भुजः शान्तो जटामुकुटमण्डितः ।
अतिरक्तः समभङ्गः सर्वाभरणभूषितः ॥ ८८ ॥
हिरण्यसदृशप्रख्यो दुकूलवसनान्वितः ।
अभयो वरदोपेतः शूलपाशधरो भवः ॥ ८९ ॥
भोगिहस्तद्वयोपेतः सौम्यात्मा च त्रिनेत्रकः ।
अत्यन्तसुन्दरी शान्ता सर्वाभरणभूषिता ॥ ९० ॥
नानागन्धानुलिप्ता वा वा(पी)तपुष्पोपशोभिता ।
करण्ड(कुरण्ड)मकुटोपेता पद्मपीठोपरि स्थिता ॥ ९१ ॥
किंचिद्विलसकुक्षी च दी(पी)नोरुजघनस्तना ।
दुकूलपट्टदेवाङ्गनानावस्त्रधरा परा ॥ ९२ ॥
सस्यश्यामनिभाकारा रक्तोत्पलधृकरा (धरा करे) ।
आजानुलम्बहस्ता च सव्ये समभङ्गिका ॥ ९३ ॥
सूक्ष्मानिलनिभा शान्ता हेमवस्त्रधरा वरा ।
चतुर्भुजा त्रिनेत्रा च सर्वाभरणभूषिता ॥ ९४ ॥
अभया वरदोपेता टङ्कशूलधरा तथा ।
गौरीलक्षणमाख्यातं यथासकललक्षणे ॥ ९५ ॥
तथैव कारयेद्धीमान् स्थापयेत्केवलात्मिकाम् ।
शर्वश्चतुर्भुजः शान्तः सर्वाभरणभूषितः ॥ ९६ ॥
जटामुकुटसंयुक्तः कह्लकुन्देन्दुसंनिभः ।
अभयो वरदोपेतः खड्गखेटकधारकः ॥ ९७ ॥
पद्मपीठोपरिष्टात्तु स्थानकः शर्व एव हि ।
चतुर्वक्त्रश्चतुर्बाहुर्हरितास्य(ल)समप्रभः ॥ ९८ ॥
जटामुकुटसंयुक्तः पिङ्गाक्षः सर्पभूषणः ।
कृष्णाजिनोत्तरीयश्च यज्ञसूत्रसमन्वितः ॥ ९९ ॥
शुक्लवस्त्रधरः शान्तः कटिसूत्रः समेखलः ।
शुक्लमाल्यानुलेपश्च कर्णौ कुण्डलमण्डितौ ॥ १०० ॥
दक्षिणे चाक्षमालां च कूर्चं चैव तु धारयेत् ।
कमण्डलुं कुशं वामे दक्षिणे स्रुवस्रुचौ तथा ॥ १०१ ॥
आज्यस्थालीं कुशांश्चैव वामहस्ते तु धारयेत् ।
अभयं वरदौ पू(वरदाभययुक्पू)र्वहस्तौ चास्य द्विजोत्तम ॥१०२॥

आसने तूभयागाङ्घ्रि(यौ चाङ्घ्री)रोधयेत्तु परस्परम् ।
मेद्रमूलोपरिष्टात्तु वामहस्तोर्ध्वेनत्तककम् ॥ १०३ ॥
सव्यहस्तं च तस्योर्ध्वे तत्र न्यस्त्वा समास्थितम् ।
दक्षिणे चाक्षमालां च वामहस्ते कमण्डलुम् ॥ १०४ ॥
सरस्वती दक्षिणे(दक्ष) भागे सावित्री वामपार्श्वके ।
आसीना वा स्थिता वाऽपि पद्मपीठोपरि द्विज ॥ १०५ ॥
शिवोऽसमश्वेतवर्णश्चतुर्दोर्भिः समन्वितः ।
सर्वाभरणसंयुक्तः शुक्लवस्त्रोपवीतकः ॥ १०६ ॥
नेत्रद्वयसमायुक्तः करण्डमुकुटान्वितः ।
अभयो वरदोपेतः शूलपाशभृतः शुचिः ॥ १०७ ॥
पद्मपीठोपरिष्टात्तु स्थानकं समपादकम् ।
भृगुः शुक्लनिभः शान्तः शुक्लवस्त्रधरस्तथा ॥ १०८ ॥
करण्डमकुटोपेतो हस्तद्वयसमन्वितः ।
अभयो वरदोपेतः सर्वाभरणभूषितः ॥ १०९ ॥
स्थानकं वाऽऽसनं वाऽपि पद्मपीठो भृगुः शुभः ।
पूर्वमेवोदितस्त्वीशस्तथाऽगस्त्यं कल्पयेत् ॥ ११० ॥
अगस्त्यवत्कौशिकं च स्थापयेत्स्थापकोत्तमः ।
एकनेत्रश्चतुर्बाहुर्नेत्रत्रयसमन्वितः ॥ १११ ॥
क्षौमवस्त्रधरः शान्तो बन्धूककुसुमप्रभः ।
जटामुकुटसंयुक्तः सर्वाभरणभूषितः ॥ ११२ ॥
अभयो वरदोपेतो टङ्कशूलसमन्वितः ।
विश्वेशं पूर्ववत्कृत्वा स्थापयेद्देशिकोत्तमः ॥११३ ॥

अथ सरस्वती—

सरस्वती चतुर्हस्ता श्वेतपद्मासनान्विता ।
जटामुकुटसंयुक्ता शुक्लवर्णा सिताम्बरा ॥ ११४ ॥
यज्ञोपवीतसंयुक्ता रत्नकुण्डलमण्डिता ।
सर्वाभरणसंयुक्ता मुक्ताहारा सुलोचना ॥ ११५ ॥
व्याख्यानं चाक्षसूत्रं च दक्षिणे तु करद्वये ।
पुस्तकं कुण्डिका चापि त्रिनेत्रा चारुरूपिणी ।
ऋग्यजुःसामभिस्तेन मुनिभिः सेविता वरा ॥ ११६ ॥

एवं लक्षणसंयुक्ता वाग्देवी परिकीर्तिता ।

अथ लक्ष्मीः—

लक्ष्मीः पद्मासनासीना द्विभुजा काञ्चनप्रभा ॥ ११७ ॥
हेमरत्नोज्ज्वलं तत्र कुण्डलं कर्णमण्डितम् ।
सुयौवना सुरम्याङ्गा कुञ्चितभ्रूः सविभ्रमा ॥ ११८ ॥
रक्ताक्षी पीनगण्डा च कम्नुचूद(काठय)स्तनद्वयी ।
शिरसो मण्डनं शङ्खचक्रसीमन्तपङ्कजम् ॥ ११९ ॥
अम्बुजं दक्षिणे हस्ते वामे श्रीफलमिष्यते ।
सुमध्या विपुलश्रोणी शोभनाम्बरवेष्टिता ॥ १२० ॥
मेखलाकटिसूत्रा च सर्वाभरणभूषिता ।
एकादशदशस्त्वेकरुद्रं कुर्याद्विशेषतः ॥ १२१ ॥
पशुपतिं पूर्ववच्च स्थापयेद्देशिकोत्तमः ।
धरो ध्रुवश्च सोमश्च आपस्त्वनल एव च ॥ १२२ ॥
अनिलः प्रत्युषाश्चैव प्रभावश्च तथैव च ।
वसवश्चाष्टकास्ते वै रक्तवर्णा द्विदोष्किकाः ॥ १२३ ॥
पीताम्बरधराः सर्वे आसीना वा स्थिताश्च वा ।
खड्गखेटकहस्तास्ते सर्वाभरणभूषिताः ॥ १२४ ॥
करण्डमुकुटोपेता रौद्राः सर्वे प्रकीर्तिताः ।
कर्तव्यः पशुपतिवन् महादेवो द्विजोत्तम ॥ १२५ ॥
एकरुद्रवत्कर्तव्यस्त्रिमूर्तिर्द्विजसत्तम ।
सत(धन)दः सर्वयक्षेशः सर्वाभरणभूषितः ॥ १२६ ॥
तप्तकाञ्चनसंकाशहस्तद्वयसमन्वितः ।
वरदाभयहस्तश्च गदां वा वामहस्तके ॥ १२७ ॥
पद्मपीठोपरिष्टात्तु द्विनेत्रो मेघवाहनः ।
रक्ताम्बरधरः सौम्यः शङ्खपद्मनिधीयुतः ॥ १२८ ॥
शङ्खपद्मनिधी द्वौ च भूताकारमहाबलः(लौ) ।
आसीनौ पद्मपीठे तु पद्महस्तौ द्विजोत्तम ॥ १२९ ॥
करण्डमुकुटोपेतौ सितवासोत्तरीयकौ ।
दक्षिणेऽदक्षिणे शङ्खनिधिं पद्मनिधिं क्रमात् ॥ १३० ॥

धनदस्य तु वामे च देवीं कुर्यात्सलक्षणाम् ।
धनदो शैवमाख्यातः माग्वदिन्द्रान्मकल्पयेत् ॥ १३१ ॥
कालाग्निरुद्रमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना ।
चतुर्भुजं त्रिनेत्रं च ज्वालामालोपशोभितम् ॥ १३२ ॥
खड्गखेटकसंयुक्तं अग्राङ्कुशधृतं परम् ।
रक्तवस्त्रधरं रौद्रं सर्वाभरणभूषितम् ॥ १३३ ॥
रक्तोर्ध्वकेशसंयुक्तं सिंहासनोपरि स्थितम् ।
चतुर्भुजं त्रिनेत्रं च नीलोत्पलसमप्रभम् ॥ १३४ ॥
करण्डमुकुटोपेतं सर्वाभरणभूषितम् ।
अभयं वरदोपेतं टङ्कशूलधृतं परम् ॥ १३५ ॥
रक्तवस्त्रसमायुक्तं पद्मपीठोपरि स्थितम् ।
श्रीकण्ठो शैवमाख्यातो नगदेवस्त्वथोच्यते ॥ १३६ ॥
त्रिनेत्रं चतुर्भुजं सौम्यं रक्ताभं सितवाससम् ॥
अभयं वरदोपेतं परहस्ते तु नागधृत् ॥ १३७ ॥
करण्डमुकुटोपेतं नागं पञ्चफणान्वितम् ।
सर्वाभरणसंयुक्तं पद्मपीठोपरि स्थितम् ॥ १३८ ॥
भीमश्चतुर्भुजो रौद्रः सर्वाभरणभूषितः ।
अभयं वरदं चैव शूलं पाशं च धारयेत् ॥ १३९ ॥
सितवस्त्रधरश्चैव उग्रदृष्टिः सदंष्ट्रकः ।
सस्याङ्कुरनिभाभूमीनीलालकसमन्वितः ॥ १४० ।
करण्डमुकुटोपेतः सर्वाभरणभूषितः ।
पीताम्बरधरश्चैव प्रसन्नवदनान्वितः ॥ १४१ ॥
पद्मं वाऽप्युत्पलं वाऽपि उभयोर्हस्तयोर्धृतः ।
पद्मपीठोपरिष्टात्तु आसीनो वा स्थितस्तु वा ॥ १४२ ॥
शिखण्डः कज्जलाभस्तु चतुर्भुजसमन्वितः ।
खड्गखेटकसंयुक्तः पद्मपीठोपरि स्थितः ॥ ४३ ॥
मरुद्गणा धूम्रवर्णा द्विभुजाश्च समुद्गराः ।
केशभारसमायुक्ताः सर्वाभरणभूषिताः ॥ १४४ ॥
दुकूलवसनाः सर्वे नानापुष्पैरलंकृताः ।
टङ्कशूलसमायुक्ताः पीनोरुघनस्तनाः ॥ १४५ ॥

पादपीठोपरिष्टात्तु अष्टावेतान्प्ररुद्राणान् ।
उग्रश्चतुर्भुजो रौद्रो रक्तवस्त्रसमन्वितः ॥ १४६ ॥
करण्डमुकुटोपेतः सर्वाभरणभूषितः ।
अभयं वरदोपेतं टङ्कशूलधृतः परः ॥ १४७ ॥
स्थानकं पद्मपीठे तु शुक्लवस्त्रधरः शुचिः ।
शनैश्चरः कृष्णवर्णो द्विभुजः सितवक्र(वस्त्र)कः ॥ १४८ ॥
करण्डमुकुटोपेतः सर्वाभरणभूषितः ।
दण्डं दक्षिणहस्ते तु वरदं वाम उच्यते ॥ १४९ ॥
स्थानकं पद्मपीठे तु आसीनं वा विशेषतः ।
ईषत्कुञ्चितमिवस्थानं ईषद्रूस्वतनुः स्मृतः ॥ १५० ॥
प्रथमं शैवमाख्यातं पीठं सल्लक्षणं शृणु ।
प्रासादस्य तु विस्तारं यत्तदण्डमिहोच्यते ॥ १५१ ॥
भानुद्वयाङ्गुलं तारमुत्सेधं भानुमात्रकम् ।
गुणाङ्गुलं समुत्सेधं पद्मोत्सिक्तगुणालयम् ॥ १५२ ॥
षडङ्गुलं पद्मविस्तारं शेषोर्ध्वे कम्पनीत्रकम् ।
शिलाभिरिष्टकाभिर्वा सुधया वा प्रकल्पयेत् ॥ १५३ ॥
परिवारविहीनो ह्येवं महापीठविधिं शृणु ।
प्रासादस्य तु विस्तारं यत्तद्दण्डमिहोच्यते ॥ १५४ ॥
मूलहर्म्यं समालभ्य पदष्टमण्डलान्वितम् ।
दशद्वादशदण्डो वा मनुदण्डावसानकम् ॥ १५५ ॥
षोडशेऽष्टादशे वाऽपि महापीठं प्रकल्पयेत् ।
अथवाऽन्यप्रकारेण पीठस्थानं विधीयते ॥ १५६ ॥
तृतीये वा चतुष्पञ्च सालेऽप्यायाममध्यमे ।
महापीठं प्रकर्तव्यं तस्य लक्षणमुच्यते ॥ १५७ ॥
मूलधामस्य द्वारोच्चमुत्तमं पीठविस्तृतम् ।
त्रिपादं मध्यमं प्रोक्तं द्वारतुङ्गार्धकन्यसम् ॥ १५८ ॥
शुद्धद्वारस्य विस्तारं मध्यमं पीठमुच्यते ।
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं श्रेष्ठमुच्यते ॥ १५९ ॥
अथवा कन्योमहस्तं तु अधमं पीठविस्तृतम् ।
द्विहस्तं मध्यमं प्रोक्तं त्रिहस्तं तूत्तमात्मकम् ॥ १६० ॥

दुर्मुखं सौम्यदिग्भागे वायुभूतं तदेव हि ।
अविघ्नं कर्णिकोर्ध्वे तु व्योमात्मकमुदाहृतम् ॥ १६१ ॥
तामसं त्वनले पद्मे वा स्यान्नैर्ऋते दले ।
सात्त्विकं वायुदिग्भागे विघ्नकर्तारमीशके ॥ १६२ ॥
विघ्नकर्तारमित्युक्तमात्मनत्वमुदाहृतम् ॥
भूम्यन्तरिक्षं स्वर्गं च सर्वभूतगुणात्मकम् ॥ १६३ ॥
तत्सर्वमात्ममित्युक्तं महापीठं द्विजोत्तम ।
तामसादि निवृत्त्यर्थं नित्यं बल्यन्तमर्चयेत् ॥ १६४ ॥
तासामात्मापहाराय नित्योत्सवैः प्रदक्षिणम् ।
भूमिप्रदक्षिणं स्यादौ द्वितीयं त्वन्तरिक्षकम् ॥ १६५ ॥
स्वर्गप्रदक्षिणं पश्चात्कृतवद्धात्रिनां हितम् ।
जगदार्तिविनाशार्थं कल्प्यैवं साधकोत्तमः ॥ १६६ ॥
पश्चिमाभिमुखे ह्यर्थे किंचिद्भेदं वदाम्यहम् ।
स्कन्दस्थाने कुमारं तु कौमारे ह्यर्थं विन्यसेत् ॥ १६७ ॥
वारुणं तु महापीठं शेषं पूर्ववदाचरेत् ।
परिवारविधिः प्रोक्तः पश्चाल्लिङ्गस्य लक्षणम् । ॥ १६८ ॥

इति काश्यपशिल्पे परिवारविधिरष्टचत्वारिंशः पटलः ।

---

अथैकोनपञ्चाशत्तमः पटलः ।

---

## लिङ्गलक्षणम् ।

---

अथ वक्ष्ये विशेषेण शिवलिङ्गस्य लक्षणम् ।
संसारविषये भूता लयं गच्छन्त्यशेषतः ॥ १ ॥
यया सृष्टिस्तया तस्मात्सृष्टित्वाल्लिङ्गमुच्यते ।
संसारे निष्कलं शान्तं वाङ्मनोतीतगोचरम् ॥ २ ॥
मुक्तिदं सर्वभूतानां स्वात्मनः परमं विना ।
सर्वाभिन्यापिनं गुह्यं सर्वलोकैकनायकम् ॥ ३ ॥
तस्माद्धि सृष्टिकाले तु शान्तितत्त्वसमुद्भवः ।
तच्छान्तेः शक्तिः संभूता तस्या नादस्य संभवः ॥ ४ ॥

तस्माद्बिन्दुसमुत्पन्नं नादं सादाख्यमुच्यते ।
बिन्दुमानेन विख्याता तस्मादीश्वरसंभवः ॥ ५ ॥
ईश्वरान्महेश्वरस्य सृष्टिस्तस्मात्तु वैष्णवम् ।
तस्मात्प्रासादसद्भावः प्रादेशात्तु विशेषतः ॥ ६ ॥
त्रीणि चैव त्व( ▪ )त्रिंशच्च त्रिशतं त्रिसहस्रकम् ।
देवता ऋषयश्चैव दानवा रक्षयोनयः ॥ ७ ॥
संभवो ह्युदितो विप्र तेष्वादौ त्रीणि निष्कलम् ।
शिवं तं सकलं ख्यातं मिश्रनादं च बिन्दुकम् ॥ ८ ॥
नादं लिङ्गाकृति ज्ञेयं बिन्दुपीठाभमुच्यते ।
लिङ्गं शिवमयं ख्यातं पीठं तस्यात्मकामयम् ॥ ९ ॥
तस्माच्छिवात्मिका चैव अभिन्नेवानलोष्णवत् ।
जगदार्तिविनाशार्थं सर्वप्राणिहिताय वै ॥ १० ॥
देवादीनां हितार्थाय ध्यानपूजानिमित्तकम् ।
लिङ्गे योनिप्रकारेण सादाख्यं तत्त्वमुद्भवम् ॥ ११ ॥
सर्वेषामुद्भवार्थं तु मोच्यते लिङ्गलक्षणम् ।
तल्लिङ्गं त्रिविधं ख्यातं चलं चैवाचलं तथा ॥ १२ ॥
चलाचलं च विख्यातं क्रमेणैव विशेषतः ।
रत्नजं लोहजं वाऽथ लिङ्गं कृत्वा सयोनिकम् ॥ १३ ॥
लिङ्गद्रव्येतरं ख्यातं योनिं कृत्वा सलक्षणम् ।
शिरसो वर्तनोपेतं लक्षणोद्धारवर्जितम् ॥ १४ ॥
वृत्ताकारमशेषं तु कृते लिङ्गोदयार्धकम् ।
उदयेन लोकमार्गं वा वेदांशेन तथापि वा ॥ १५ ॥
पीठे निवेशयेच्छेषं द्वय(त्रय)मानसमन्वितम् ।
गमागम ... चेष्टदेशेऽन्यस्योद्धृतक्षयम् ॥ १६ ॥
यत्तल्लिङ्गं चलं वेशं द्वस्य चलाचलाचलम् ।
अश्मजं सूत्रसंयुक्तं बाणलिङ्गं तु तद्विना ॥ १७ ॥
तेष्वादौ त्वचलं लिङ्गलक्षणं वक्ष्यतेऽधुना ।
सुमासतिथिनक्षत्रलग्नवारे शिलां ग्रहेत् ॥ १८ ॥
आचार्यः शिल्पिसंयुक्तः शिलाग्रहणमाचरेत् ।
दिव्यान्तरिक्षभौमानि निमित्तान्युपलक्षयेत् ॥ १९ ॥

वायसं दक्षिणे वामादागतं च तथैव च ।
श्येनं वै दक्षिणे वामे गृध्र मांसेन संयुतम् ॥ २० ॥
कन्यागोदर्शनं चैव गावस्त्वावाहनं तथा ।
दधिना पूर्णकुम्भं च क्षीरकुम्भं तथैवच ॥ २१ ॥
पुष्पं पुष्पधृतं वाऽपि सुवर्णवीयु(यु)वतिस्त्रियः ।
अन्नं च मांसहारत्व(हारं च )शिवभक्तिपरायणम् ॥ २२ ॥
ज्वालानलं च दीपं च जलैः पूर्ण घटावृतम् ।
व(व)राहं च गजं चैव वेण्या चात्यन्तसुन्दरी ॥ २३ ॥
शुभान्येतानि भौमानि अशुभं विपरीतकम् ।
उल्कापातं दिशां दाहं महावातप्रवर्तनम् ॥ २४ ॥
अशुभान्यन्तरिक्षाणि भौमाशोभनमुच्यते ।
मुक्तकेशनराश्चैव कीर्णकेशास्तथैव च ॥ २५ ॥
तैलाभ्यक्ताश्च नग्नाश्च काषायवसनान्विताः ।
दर्शनेनैव मृद्भाण्ड तैलपात्रं तथैव च ॥ २६ ॥
छिन्ननासिकन्यां(साकर्णक)श्च हीनाङ्गश्चाधिकाङ्गवान् ।
पुत्रहीना तु नारी च विधवा च तथैवच ॥ २७ ॥
बहुभक्ष्याश्च भौमान्येतानि[पि]वर्जयेच्छुभे ।
शुभं चेद्गमनं कुर्यादशुभं चेद्विवर्जयेत् ॥ २८ ॥
अशुभे स्त्रग्निमास्तीर्य शिवेनैव शताहुतीः ।
सामिदाज्योदनैः कुर्याच्चागामे नामभूषणम् ॥ २९ ॥
दत्वा शिवं नमस्कृत्य गच्छेदाचार्यशिल्पि ■ ।
पर्वते सागरे तीर्थे क्षेत्रे चैव वने पुनः ॥ ३० ॥
क्षीरवृक्षसमीपे च देवहर्म्यसमीपके ।
नदीतटाकतीरे वा शिलां समृद्य शिल्पकः ॥ ३१ ॥
अन्यस्थाने न गृह्णीयाच्छ्रादितेरयाशुनाशनम् ।
श्वेता रक्ता च पीता च कृष्णा चैव चतुर्विधा ॥ ३२ ॥
गोक्षीरशङ्खकुन्देन्दुमुक्तास्फटिकसंनिभा ।
मल्लिकाकुसुमप्रख्या श्वेता सप्तविधा स्मृता ॥ ३३ ॥
जपाकिंशुकपुष्पाभा इन्द्रको(गो)पसमप्रभा ।
जातिलिङ्गनिभाकारा अग्ररक्तसमप्रभा ॥ ३४ ॥

दाडिमीपुष्पसंकाशा बन्धूककुसुमप्रभा।
कोरण्ट(कुरण्ट)कुसुमप्रख्या पीता शैला च सप्तधा ॥ ३५ ॥
महिषाक्षाञ्जनाभासा नीलोत्पलसमप्रभा।
भृङ्गमायूरकण्ठा(ण्ठा)भा मषीपत्रसमा तथा ॥ ३६ ॥
राजावर्तनिभाकारा कृष्णमुद्गसमप्रभा।
ह्रस्वमुद्गसमाकारा कृष्णशैला(ष्णशैल)दशा स्मृता ॥ ३७ ॥
श्वेता रक्ता च पीता विप्रादीनां क्रमाद्भवेत्।
धर्मकामार्थमोक्षांश्च दद्युः सततमेव च ॥ ३८ ॥
परेषां वाचकं श्रेष्ठं परेषामपरं विना।
प्रतिलोमानुलोमाभ्यां मिश्रयोगं न गृह्यताम् ॥ ३९ ॥
आचार्यशिल्पिनौ चैव सितवस्त्रधरावुभौ।
शुक्लगन्धानुलिप्ताङ्गौ पञ्चाङ्गभूषणान्वितौ ॥ ४० ॥
कुठारादीनि संगृह्य शिलां गच्छेत्समाहितौ।
यस्मिन्देशे शिला शेते तां कृत्वा तु प्रदक्षिणम् ॥ ४१ ॥
दोषवर्जां शिलां दृष्ट्वा परिच्छेद्य विशेषतः।
वस्त्र(र्ण)तपाग्निगन्धां च सुकीर्णां क्षारवारिणा ॥ ४२ ॥
दुर्देशस्थां तटस्थां च कर्मान्तरे तु योजिताम्।
शर्कराढ्यां च पङ्कां च जर्जरां रूक्षसंयुताम् ॥ ४३ ॥
रेखाबिन्दुकलङ्कादिसंयुक्तां परिवर्जयेत्।
सूत्रवद्वालदाकारा रविरश्मिसमायुता ॥ ४४ ॥
वर्षधारवदाकारा रेखा वै त्रिविधा स्मृता।
जम्बूफलसमाकारा वा द्राक्षासदृशोपमा ॥ ४५ ॥
अन्यद्वा वृत्तसंकाशा त्रिविधा बिन्दुरेव हि।
कृष्णलोहनिभाकारा कृष्णभ्रमरसंनिभा ॥ ४६ ॥
शिखिपिच्छसमाकारा कलङ्का च चतुर्विधा।
खर्जूरपत्रसंकाशा दूर्वास्तम्बनिभा तथा ॥ ४७ ॥
वैणवाङ्कुरसंकाशा लूतापादवदायता।
अन्यास्तु सितारेखा सर्वसम्पत्समृद्धिदा ॥ ४८ ॥
कृष्णकृष्णा विनाशाय श्वेतकृष्णास्तथैव हि।
यस्मात्सर्वप्रयत्नेन इतरा परिगृह्यताम् ॥ ४९ ॥

हरिता कृष्णा शिला ग्राह्या सितवर्णा विशेषतः ।
खर्जूरपत्रसदृशा दूर्वास्तम्बाकृतिः शुभा ॥ ५० ॥
अन्यकृत्वा (र्णाऽ)शुभा ख्याता गोधान्यधननाशनम् ।
सफलं रोगदं ज्ञेयं राजराष्ट्रविनाशनम् ॥ ५१ ॥
बिन्दुः पुत्रविनाशः स्याद्दारिद्र्यं श्रीविनाशनम् ।
एवं पर्येक्षि(रीक्ष्य)बहुधा कारयेल्लक्षणान्वितम् ॥ ५२ ॥
बाला युवतिर्वृद्धा च पुंस्त्रीनपुंसकं तथा ।
स्वरैराकृति भेदैश्च परिच्छेदविधिं शृणु ॥ ५३ ॥
खनत्कंसध्वनिर्ह्रस्वा शिला बाला इति स्मृता ।
घण्टाध्वनिसमा दीर्घा युवतिः सा प्रकीर्तिता ॥ ५४ ॥
विम(त)तध्वनिसंयुक्ता या सा वृद्धापि कीर्तिता ।
घण्टाध्वनिसमोन्नादा दीर्घा सा पुंशिला इव ॥ ५५ ॥
तालशब्दसमाकारा दीर्घा या सा शिला स्त्रियः ।
आश्लिष(श्लेष) झर्झरी ह्र(रू)क्षा स्वरहीना नपुंसका ॥ ५६ ॥
स्वरैरेव समाख्याता आकृत्या भेद उच्यते ।
चतुरश्रा च वस्वश्रा स्त्रीशिलेति प्रकीर्तिता ॥ ५७ ॥
आयताश्रा च वृत्ता च दशद्वादशकोणका ।
पुंलिङ्गा सा शिला ख्याता सुवृत्ता सा नपुंसका ॥ ५८ ॥
दशाग्रद्वादशाग्रा च बालवृद्धा च वर्जयेत् ।
पुंशिलाभिः कृतं लिङ्गं स्त्रीशिलाभिस्तु पिण्डिका ॥ ५९ ॥
नपुंसकशिलाभिस्तु पादाधारः समाचरेत् ।
कृतं च विपरीतं यत् महदा कर्तृनाशनम् ॥ ६० ॥
प्रागग्रां चोदगग्रां वा शिलां संग्राह्य देशिकः ।
प्रागग्रे पश्चिमं मूलमुदगग्रं तु दक्षिणे ॥ ६१ ॥
शङ्कुस्त्रीस्थापनं यत्र लिङ्गाग्रं तत्पर्शनिम्नम् ।
अधोभागं मुखं न्यस्तं पृष्ठपूर्वगतं भवेत् ॥ ६२ ॥
एवं परीक्ष्य संग्राह्य गर्भैः शास्त्रदृष्टा बुधः ।
तारयन्त्रेण संस्थाप्य गन्धपुष्पादिभिर्यजेत् ॥ ६३ ॥

तस्यास्तु प्राङ्मुखे देशे शान्तिहोमं तु कारयेत् ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ ६४ ॥
समिधो हृदयेनैव मूलेनाऽऽज्यं तु होमयेत् ।
चरुहोममघोरेण पुरुषेणैव तण्डुलम् ॥ ६५ ॥
तिलमीशानमन्त्रेण सर्षपं कवचेन तु ।
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ॥ ६६ ॥
स्विष्टकृतिमग्नेति(ग्ने)मन्त्रेण पूर्णाहुतिमथाऽऽचरेत् ।
ततो वह्निं समुद्वास्य पूजापर्युषितं त्यजेत् ॥ ६७ ॥
शिलाच्छेत्ताहर्क(दकरं)श(स्त्रमस्त्र)मन्त्रेण पूजयेत् ।
अपसर्पणमुच्चार्य शिलाच्छेदनमाचरेत् ॥ ६८ ॥
गर्भगेहं तु पञ्चांशं गुणांशं श्रेष्ठमुच्यते ।
गर्भगेहमाणं च द्वारमानं तथैव च ॥ ६९ ॥
स्तम्भं च कालमानं च हस्ततालाङ्गुलं तथा ।
लिङ्गमानं ध्रुवं सप्त भेदास्ते मत्यनेकधा ॥ ७० ॥
गर्भगेहं तु पञ्चांशं गुणांशं श्रेष्ठमुच्यते ।
गर्भार्धं मध्यमाख्यातं तयोर्मध्येऽष्टभाजिते ॥ ७१ ॥
श्रेष्ठमध्याधमं लिङ्गं प्रत्येकं त्रिविधा भवेत् ।
अथवा गर्भगेहं तु नवभागविभाजिते ॥ ७२ ॥
गर्भगेहसमासाधांत्तुत्तमादि त्रयत्रयम् ।
शुद्धद्वारसमं श्रेष्ठं भित्त्यर्धं तु कनीम(य)सम् ॥ ७३ ॥
तयोर्मध्येऽष्टभागे तु नन्दभेदं द्विजोत्तम ।
स्तम्भायामसमायां तु नवभागविभाजिते ॥ ७४ ॥
श्रेष्ठान्त(ध)मानि नवधा प्रोच्यते द्विजसत्तम ।
प्रासादे त्वादिभूमौ तु स्तम्भभागसमं हि तत् ॥ ७५ ॥
तन्मध्यमिति विख्यातं तस्यार्धमधमं भवेत् ।
तयोर्मध्येऽष्टभागेन नन्दभेदे द्विजोत्तम ॥ ७६ ॥
स्तम्भायामे तु तत्रैव नवभागविभाजिते ।
नवधा लिङ्गमानं तु स्तम्भमानं द्विजोत्तम ॥ ७७ ॥
अधिष्ठानोदयं विप्र स्तम्भमानवदाचरेत् ।
एकहस्तं समारभ्य स्वाष्टांशांशविवर्धनात् ॥ ७८ ॥

नवद्विविधियां(स्तावार्धं या )वत् संख्या पङ्क्तिः सपञ्चका ।
पञ्चदस्तद्विमानासि(नि)हर्म्ये हस्तवशान्नयेत् ॥ ७९ ॥
पञ्चहस्तादतो हर्म्ये लिङ्गस्तम्भवशं विना ।
हस्तादि गुणहस्तान्तं विकल्पाभासहर्म्ययोः ॥ ८० ॥
त्रिहस्तं षट्करान्तं तु लिङ्गच्छन्दविमानके ।
षट्करादि नवान्तं तु लिङ्गं जातिगृहोचितम् ॥ ८१ ॥
एवं हस्तवशात्ख्यातं तालमानमथोच्यते ।
तालादि नवतालान्तमेकतालविवर्धनात् ॥ ८२ ॥
लिङ्गे हि नव संख्याः स्युः कल्पं जातीतरालये ।
त्रयोदशाङ्गुलारभ्य यावत्षद(व)शताङ्गुलम् ॥ ८३ ॥
तावदेकोनपञ्चांशाल्लिङ्गं मानाङ्गुलेन तु ।
त्रिभागसहितं लिङ्गं हस्तक्षीणं न कारयेत् ॥ ८४ ॥
हस्तमानाक्षयं लिङ्गं वृत्ताकारमशेषकम् ।
वेदानवोल एत्रांशपङ्क्ति(विष्टि)रे योजयेद्बुधः ॥ ८५ ॥
शेषं तु हस्तमानं स्याद्विकल्पाभाससंय(हर्म्य)योः ।
विष्टरे चे(ई)शलिङ्गं तु विकल्पापगृहे विना ॥ ८६ ॥
एकाङ्गुलं समारभ्य यावद्राता(त्तसप्ता)ङ्गुलावधि ।
लोहजं रत्नजं तावदूर्ध्वे शैलजमुच्यते ॥ ८७ ॥
त्रयोदशाङ्गुलं लिंगं शैलजं तु न कारयेत् ।
एवं त्वनेकभेदेन प्रोच्यते लिङ्गमानकम् ॥ ८८ ॥
नागरं द्राविडं लिङ्गं वेसरं च वदाम्यहम् ।
लिङ्गोदये तु वेदांशे एकांशे कन्यसस्तथम् ॥ ८९ ॥
तुङ्गत्र्यंशे शिवांशं तु विस्तारं श्रेष्ठमुच्यते ।
तयोर्मध्येऽष्टभागे तु नवधा तारमुच्यते ॥ ९० ॥
अथोदये कलांशे तु पञ्चांशं शान्तिकं भवेत् ।
वेदांशं पौष्टिकं ख्यातं गुणांशं जयदं भवेत् ॥ ९१ ॥
अविचाराद्विभागः स्यादासमेवं चतुर्विधम् ।
एवं त्रयोदशव्यासं नागरे तु विधीयते ॥ ९२ ॥
लिङ्गोच्चे द्विर्नवांशे तु रसभूतयुगांशके ।
गुणांशे शान्तिकादिः स्याद्द्राविडे च चतुर्विधम् ॥ ९३ ॥

वेसरे लिङ्गतुङ्गे तु विंशत्यंशविभाजिते ।
अष्टवा सप्तषट्पञ्चभागैर्व्यासं प्रकल्पितम् ॥ ९४ ॥
शान्तिकं पौष्टिकं चैव जयदं च क्रमेण तु ।
वेसरं च चतुर्भेदं हर्म्यलिङ्गं च पिण्डिका ॥ ९५ ॥
पादाधाराशिलाश्चैव एकजातिस्वशङ्करम् ।
पादधारशिलाश्चैव एकजातिष्वसंङ्करम् ॥ ९६ ॥
यत्नैवं कल्पितं लिङ्गं वृद्धिहेतुरुदाहृतम् ।
अन्योन्यसंकरश्चेत्तु राज्ञो दुःखमयावहं ॥ ९७ ॥
तस्मात्सर्वप्रयत्नेन संकरं न समाचरेत् ।
लिङ्गानां नागरायेवं ख्यातमायादिकं शृणु ॥ ९८ ॥
लिङ्गस्योत्सेधमानं तु मानाङ्गुलेन भाजयेत् ।
मात्रच्छेदं मवृद्ध्या वा हन्याद्वा परिकल्पयेत् ॥ ९९ ॥
अष्टान्तरायाममात्रैर्मात्रपूर्णं परिग्रहेत् ।
उत्सेधमात्रमष्टाभिर्व्यधितं ऋक्षसंख्यया ॥ १०० ॥
त्वष्टां शे नन्दिनं ख्यातमश्विन्यादि द्विजोत्तम ।
नवभिर्गुणिते सप्तद्विते(हृते)स्वेकादिवारके ॥ १०१ ॥
अनले गुणिते चाष्टह्रद(ते)योनिमु(रु)दाहृतमु(ता) ।
अष्टभिर्वर्धिते भानुधृ(हृ)ते स्वायमुदाहृतम् ॥ १०२ ॥
नवभिर्गुणिते नाडीहृते शेषमृणं भवेत् ।
युगवृद्ध्या नवे ह्रासे त्वंशकं तस्करादयः ॥ १०३ ॥
आयाधिक्यं व्ययं क्षीणं संपदामास्पदं सदा ।
ध्वजसिंहवृषाहस्तिशुभयोनिरुदाहृता ॥ १०४॥
नृपकर्तुश्च जन्मर्क्षल(र्क्षाल्लि)ङ्गऋक्षावसानकम् ।
तथैर(व)वास्तुऋक्षादि गणयेत्तु शुभाय(श्र)था(वहम्) ॥ १०५ ॥
जन्मत्रयं च युग्मं च वेदाष्टऋतुनन्दकाः ।
शुभावहपिना(य विहिता) ह्येते शेषकास्त्वशुभावहाः ॥ १०६ ॥
लग्नाष्टर्क्ष च वै ... ... नराक्षसम् ।
वर्जितास्त्वशुभा ह्येते यत्नतः परिवर्जयेत् ॥ १०७ ॥
भानुवारादिसंयुक्ता शूर्पक्षा(सूर्यक्षा)दिचतुष्टयतुः ।
रिपुत्वं मरणं नाशममृतं च यथाक्रमात् ॥ १०८ ॥

तस्करं चमार्णि(र्भिणं)षण्ड(ण्ढं)मशकं परिवर्जयेत् ।
शेषाङ्कक परिग्राह्यं शुभमानं तु संग्रहेत् ॥ १०९ ॥
समलिङ्गं वर्धमानं शैवाधिकं तु स्वास्तिकम् ।
सर्वत्रो(तो)भद्रलिङ्गं च सार्वदेशिकमेव च ॥ ११० ॥
धारालिङ्गं मुखलिङ्गं लिङ्गमष्टविधं भवेत् ।
समलिङ्गं तु विप्राणां नृपाणां वर्धमानकम् ॥ १११ ॥
शैवाधिकं तु वैश्यानां शूद्राणां स्वस्तिकं भवेत् ।
सर्वेषामितरल्लिङ्गं सर्वकामफलप्रदम् ॥ ११२ ॥
एक एव महादेवो लिङ्गभेदान्नृणां हितः ।
इष्टायामविशालेन चतुरश्रीकृतं पुरा ॥ ११३ ॥
पश्चाद्भागत्रयं कल्प्यमनेन विधिना युतः ।
चतुरश्रमधोभाग ब्रह्मभागं समुच्यते ॥ ११४ ॥
मध्ये तु वसुकोणं स्याद्विष्णवंशं तत्प्रकीर्तितम् ।
ऊर्ध्वभागं तु वृत्तं स्यात्तच्छिवांशेति विद्यते ॥ ११५ ॥
अंशं प्रत्यभिधानास्ते अशेषं तु शिवस्वरूपम् ।
शिवातीन ... ... ॥ ११६ ॥

विष्कम्भमष्टधा कृत्वा मूले मध्ये तथाऽग्रके ।
भागहीनं तु संकल्प्य स्थूलमूलमुदाहृतम् ॥ १२४ ॥
ह्रासयेच्छिव भागादि शिरःस्थूलमुदाहृतं ।
एतदार्षमिति ख्यातमृषिभिः पूजितं वरम् ॥ १२५ ॥
गुणाग्रं पञ्चकोणं च षट्सप्तद्वादशाश्रकम् ।
दशधा षाऽश्रकं चापि अग्रेतरमनोहरम् ॥ १२६ ॥
फलकादर्पणाकारमेकरेखमरेखकम् ।
शिरसो वर्तनाहीनं मानोन्मानैरनन्वितम् ॥ १२७ ॥
सेव्यं स्वायंभुवं चेति ख्यातं देवैः सुपूजितम् ।
बाणेन पूजिताभोगि (गं) बाणलिङ्गमुदाहृतम् ॥ १२८ ॥
स्थूलं सूक्ष्मं शिरोमूलं क्रमेण परिपठ्यते ।
उत्तमं तु मुखं ख्यातं मधुवर्णं सुम(न)न्दनम् ॥ १२९ ॥
विष्टरे तु भवेशांशं सार्वदेशिकलिङ्गवत् ।
लोहजं रत्नजं चैव सार्वदेशिकलिङ्गवत् ॥ १३० ॥
लिङ्गभेदः समाख्यातः शिरसो वर्तनं शृणु ।
लिङ्गमूर्धादिकेशान्तं शिरसो वर्तनं भवेत् ॥ १३१ ॥
तस्माल्लिङ्गोदये कुर्याच्छिरसो वर्तनं द्विज ।
छत्राकारं भवेत्पूर्वं कुक्कुटाण्डं द्वितीयकम् ॥ १३२ ॥
तृतीयं त्रिपुराकारमर्धचन्द्रं तु मूर्धकम् ।
यस्य लिङ्गस्य विष्कम्भमष्टाया(ष्टधा)विभजेद्बुधः ॥ १३३ ॥
ऊर्ध्वादधोंशमालम्ब्य प्रथमं च त्रिशीर्षकम् ।
द्वात्रिंशद्विभजेत्तारमर्धाङ्गुलांशलम्बितम् ॥ १३४ ॥
छत्राभं तद्द्वितीयं स्यात्सप्तांशं तत्तृतीयकम् ।
चतुर्थं तु नवांशं तु छत्राभं च चतुर्विधम् ॥ १३५ ॥
द्विजानां च नृपाणां च छत्राभं सर्वकामदम् ।
सर्वेषामपि लिङ्गानां छत्राभं तु प्रशस्तकम् ॥ १३६ ॥
वा(ह्रा)से द्वात्रिंशदंशे तु मनुपक्षकलांशकैः ।
रुद्रादशांशकं चैव कुक्कुटाण्डं चतुर्विधम् ॥ १३७ ॥
वर्धमानं च लिङ्गं तु प्रशस्तं क्षत्रियार्हकम् ।
द्वात्रिंशांशे शिरस्तारं धर्मरुद्रांशकैः सदा ॥ १३८ ॥

भानुत्रयोदशांशैस्तु त्रिपुराभं चतुर्विधम् ।
शिवाधिकं च लिङ्गं तु शस्तं वैश्याह्नं मतम् ॥ १३९ ॥
त्रिंशत्रिंशे शिरस्तारे द्वाविंशत्येकविंशतिः ।
विंशदेकोनविंशांशैरर्धचन्द्रं चतुर्विधम् ॥ १४० ॥
स्वस्तिकाख्यं च लिङ्गं तु प्रशस्तं शूद्रवृद्धिदम् ।
सार्वदेशिकलिङ्गानामन्येषां च विशेषतः ॥ १४१ ॥
छत्राद्विशीर्षकारे वत् कर्तव्याश्रयं नयेत् ।
दैविकार्षप(ज)लिङ्गानां तेष्विष्टं शीर्षकं भवेत् ॥ १४२ ॥
शिरसो वर्तनोत्सेधौ गुणभागविभावयः(गतः) ।
स्थपतिश्च शुचिर्भूत्वा यज्ञसूत्रेत(यान्त)रान्वितः ॥ १४३ ॥
प्राग्वदग्निं समभ्यर्च्य स्विष्टपूर्णाहुतिं चरेत् ।
प्रतिसरं बन्धयेत्तत्र लिङ्गपीठे द्विजोत्तम ॥ १४४ ॥
स्वर्णारचितकार्पाससूत्रैर्वाहमयेन तु ।
प्रभाते सुमुहूर्ते तु लक्षणोद्धारमाचरेत् ॥ १४५ ॥
पायसं घृतसंयुक्तं शिरःस्थाने बलिं हरेत् ।
रक्तलिङ्गं परित्यज्य गन्धाद्यैरर्चयेद्बुधः ॥ १४६ ॥
रक्तेन धातुना लिङ्गमध्ये सूत्रं तु पातयेत् ।
मुखभागस्य मध्ये तु नालं कुर्यात्सलक्षणम् ॥ १४७ ॥
लिङ्गमानेन मतिमान्सूत्रविस्तारमुच्यते ।
रुद्रभागोच्च गृह्य शिरसो वर्तनान्वितम् ॥ १४८ ॥
सवेदविंशदं भागं कृत्वैकांशे तु विस्तृतम् ।
अङ्गुलं वसुधा भव्य एकांशं यवमुच्यते ॥ १४९ ॥
उत्तमोत्तमलिङ्गानां सूत्र पञ्चायत तत्तः ।
सर्वेषामपि लिङ्गानां यवार्धं प्रविहासयेत् ॥ १५० ॥
अधमाधमलिङ्गस्य सूत्रतारं यवं भवेत् ।
सूत्रविस्तारमेवं स्यात्त्यातं चैव तु तत्समम् ॥ १५१ ॥
एकांशमूर्ध्वतो वर्ज्यं स्तनादूर्ध्वं तदंशके ।
ततस्तदंशयोर्विप्र लक्षणोद्धारमाचरेत् ॥ १५२ ॥
व्रणं शिरसि व्याधिर्ललाटे मरणं भवेत् ।
नेत्रे कृते त्वपस्मारं आस्ये धान्यविनाशनम् ॥ १५३ ॥

चुबुके बन्धुनाशः स्यात्कण्ठे स्कन्धविनाशनम् ।
स्तनदेशे सुखं हन्ति तस्मादेतानि वर्जयेत् ॥ १५४ ॥
शिरसा व्यह(व्यास) रुद्रांशं गुणांश्च विभजेत्समम् ।
पद्मस्य मुकुलाकारं लिङ्गाकारं यथाकृति ॥ १५५ ॥
द्विजानामभिवृद्ध्यर्थं नृपाणां च जयावहम् ।
खड्गौ भल्यरिकाकारं कुञ्जराक्षमिवाकृतिः ॥ १५६ ॥
शङ्खाभं छत्रयोर्भेदाद्भूपाणामपि वृद्धये ।
कराञ्जलिसमाकारं गोकर्णाकृतिवद्भवेत् ॥ १५७ ॥
वैश्यानां तत्त्रिकोणं च शुक्लवृत्तायतं तथा ।
शूद्रवृद्धिकराणि सूत्रं गृह्य तु लक्षणम् ॥ १५८ ॥
लक्षणोद्धारणोक्तांशं रुद्रभागविभाजिते ।
मुकुलोदयमेकांशे तद्वा(द्व्या)सं चापि तत्समम् ॥ १५९ ॥
तन्मूलानां तु दीर्घत्वं नवभागमुदाहृतम् ।
तन्नालमेकसूत्रं वा सूत्राद्विगुणं तु वा ॥ १६० ॥
सूत्रमायश्रुतं चेत्तु सूत्रान्तरयवत्रयम् ।
य[व]द्वयान्तरं वाऽथ नालतारं द्विजोत्तम ॥ १६१ ॥
नालमूर्ध्ने च तस्याग्रे सीमासूत्रं समालिखेत् ।
तन्नालं त्वेकसूत्रं चेल्लिङ्गमध्ये विशेषतः ॥ १६२ ॥
सूत्रोक्तव्यासखातं च नालायामे तु कल्पयेत् ।
नालाधस्तात्तु व्योमांशं त्यजेद्विम्बंशकोपरि ॥ १६३ ॥
मणिरेखा ततः कार्या मुकुलं स्युल्लिङ्गमन्तगौ ।
मणिरेखयोरन्तर्विम पद्ममूलं समं तु वा ॥ १६४ ॥
पद्मतारं त्रियंकं वा वेदांशे ऽयंश एव वा ।
पञ्चांशे तु युगांशं वा पद्मतारार्धं एव वा ॥ १६५ ॥
मुकुलमूलेऽन्तरं ह्येवं नालमूलेऽन्तरं शृणु ।
नालायामसमं वार्धपादं पादयुगांशकौ ॥ १६६ ॥
त्रिभागं पञ्चभागं तु वेदभागमथापि वा ।
नालमूलसमं त्वेव मणिरेखाद्वयोत्तरम् ॥ १६७ ॥
मूलादग्रं क्रमात्क्षीणं मणिरेखान्तरं कुरु ।
धातुमूले समे तिर्यग्गत्वा पृष्ठे तु संधयेत् ॥ १६८ ॥

मणिरेखाव्याससंघातं लिङ्गस्योच्छ्रितं सूत्रयेत् ।
मणिरेखालम्बनं नालादिसार्द्धसममेव वा ॥ १६९ ॥
तस्मादामूलपर्यन्तं वसुभागविभाजिते ।
मणिरेखालम्बनं वाऽपि मण(न)त्रया परिकीर्तितम् ॥ १७० ॥
सर्वेषु लक्षणोद्धारेष्वष्टमं मणिरेखिके ।
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु ॥ १७१ ॥
लक्षणोद्धरणोर्ध्वांशं दशभागविभाजिते ।
मुकुलोदयमेकांशं वस्वंशं नालदीर्घकम् ॥ १७२ ॥
नालाधस्तात्तु व्योमांशं नीत्वा शेषं तु पूर्ववत् ।
द्वितीयं लक्षणं ख्यातं तृतीयं लक्षणं शृणु ॥ १७३ ॥
लक्षणोद्धारभागं तु धर्मभागविभाजिते ।
एकांशं मुकुलोच्चं तु नवांशं नालदीर्घकम् ॥ १७४ ॥
शेषं पूर्ववदुद्दिष्टं चतुर्थं लक्षणं शृणु ।
लक्षणांशं तु नवधा भज्यैकांशं तु कुड्मलम् ॥ १७५ ॥
सप्तांशं नालदीर्घं तु शेषं पूर्ववदाचरेत् ।
चतुर्थं लक्षणं प्रोक्तं पञ्चमं शृणु सुव्रत ॥ १७६ ॥
लक्षांशं वसुधा भज्य व्योमांशं मुकुलोदयम् ।
षडंशं नालदीर्घं तु नालाधस्ताच्छिवांशकम् ॥ १७७ ॥
तदेव सप्तभागं तु नालदीर्घमुदाहृतम् ।
शेषं प्रागिव कर्तव्यं सप्तमं लक्षणं शृणु ॥ १७८ ॥
लक्षार्धांशे तु सप्तांशे त्वेकस्यांशं मुकुलोदयम् ।
भूतांशं नालदीर्घं तु शेषं पूर्ववदेव हि ॥ १७९ ॥
षडंशं वाऽर्धतन्नालदीर्घशेषं तु प्रागिव ।
एवमष्टविधं ख्यातं नालायामं द्विजोत्तम ॥ १८० ॥
अग्राश्रारेऽन्जुमुकुलं भानुसंख्या तु सुव्रत ।
यथेष्टनालं कर्तव्यं नव संख्या तु देशिकः १८१ ॥
इत्थमूर्ध्वं प्रकर्तव्यं लिङ्गेपूक्तप्रमाणतः ।
स्थापयेत्तु ततो लिङ्गं प्रागग्रं दारुविष्टरे ॥ १८२ ॥
स्थापितपीठश्वाव(वि)तं लिङ्गं सौम्ये निपातयेत् ।
स्थापितैः कलशैः स्नाप्य लिङ्गपीठं हृदा पुष्पैः ॥ १८३ ॥

गर्वें(र्व्ये)र्गन्धोदकैः स्थाप्य गन्धपुष्पादिभिर्यजेत् ।
लम्बकूर्चसमायुक्तं सर्वालंकारसंयुतम् ॥ १८४ ॥
रथे तु शिबिकायां वा ग्रामं कृत्वा प्रदक्षिणम् ।
ततो जलाशयं प्राप्य जलाधिवासनं कुरु ॥ १८५ ॥
लक्षणोद्धारमाख्यातं प्रतिमालक्षणं शृणु ।

इति काश्यपशिल्पे लिङ्गलक्षणोद्धार एकोनपञ्चाशत्तमः पटलः ।

॥ अथ पञ्चाशत्तमः पटलः ॥

## प्रतिमालक्षणम् ।

प्रतिमालक्षणं वक्ष्ये शृणुष्वैकाग्रमानसः ।
अचलं च चलं चैव चलाचलमिति त्रयम् ॥ १ ॥
मृन्मयं शार्करं चैव लौयजं च चलि(वर्णं चाचलं)स्मृतम् ।
शैलजं दारुजं चैव धातुजं रत्नजं तथा ॥ २ ॥
चलाचलमिति ख्यातं चलमेवं तु लोहजम् ।
अर्धचित्रं च चित्रं च चित्राभासमिति त्रिधा ॥ ३ ॥
अर्धाङ्गादर्धदं बिम्बमर्धचित्रमिति स्मृतम् ।
सर्वावयवसंदृष्टं यत्र चित्रमितीर्यते ॥ ४ ॥
निम्नोन्नते पटे भित्तौ बिम्बं स्वाभासमुच्यते ।
अर्धचित्रं ॥ सुधया अन्यचित्रवशार्धकम् ॥ ५ ॥
आभासं धातुभिः कुर्याच्चित्रं चित्रार्धमेव वा ।
चित्राभासं तु देवानां फलं श्रेष्ठान्तराधमम् ॥ ६ ॥
इष्टिकाभिः परं पीठं पीठादाभासकं परम् ।
आभासार्धं तु तस्माद्वै मृन्मयं परमं परम् ॥ ७ ॥
मृन्मयं दा(यादा)रुजं श्रेष्ठं दारुजाच्छैलजं वरम् ।
शैलजाल्लोहजं श्रेष्ठं कर्तृणां तु फलं तथा ॥ ८ ॥

लोहजादुत्तमं स्वर्णं मध्यमं राजतं भवेत् ।
ताम्रजं कन्यसं रूपातं तेषु तेषु फलं तथा ॥ ९ ॥
बिम्बमानं च द्रव्यं च श्रेष्ठमध्याधमं भवेत् ।
सर्वद्रव्येषु देवत्वं सममेवं तु विद्यते ॥ १० ॥
समं चेति दि(दि)व्यं देवेश फलं श्रेष्ठादया( दिकं) कथम् ।
स्थलभेदेन ह्रस्वं च (साणां) भेदः क्षेत्रेषु विद्यते ॥ ११ ॥
तथा दिव्ये फले तुल्यं विन्यभेदफलप्रदम् ।
तस्मादेतु(षु)यथालाभं द्रव्येण सफलं कुरु ॥ १२ ॥
यो नरः कृतवान्भूमौ पुत्रमित्रकलत्रयुक् ।
यथेष्टविषयोपेतश(मि)ष्टादिविषयं सुखम् ॥ १३ ॥
भुक्तितेकृत(ह्व च क्रम )तो विम सालोक्यादिफलाश्रितम् ।
मनसा कर्मणा वाचा यो नरः स्तम्भकारिणा(रका) ॥ १४ ॥
सोऽपि कर्मानुसारेण सत्कृतत्कफलानुभाक् ।
तस्मादात्त(द्य) न कर्तव्यं सकलं तु शिवात्मकम् ॥ १५ ॥
सुखासनस्थितं बिम्बं उमास्कन्दसमं द्विज ।
तृतीयं चन्द्रमूर्तीनां चतुर्थं वृषवाहनम् ॥ १६ ॥
पञ्चमं नृत्तमूर्तिं तु गङ्गाधरमनंतरम् ।
सप्तमं त्रिपुरारिं अष्टमं कल्याणसुन्दरं तथा ॥ १७ ॥
नवमं सार्धनारीं तु दशमं गजहारिणम् ।
तथा पाशुपतं विद्यात्कङ्कालं द्वादशं स्मृतम् ॥ १८ ॥
त्रयोदशं हरिं विद्याद्भिक्षाटनं चतुर्दशम् ।
चण्डेश्वरप्रसादं तु पञ्चदशमुदाहृतम् ॥ १९ ॥
षोडशं दक्षिणामूर्तिं ततः कालारुणं भवेत् ।
सर्वेषां प्रतिमानां तु मानमादौ वदाम्यहम् ॥ २० ॥
सर्वेषामपि लिङ्गानां शिरोमानं विनोदयम् ।
गृहीतो विद्यमाने तु शिरसावर्तनं तथा ॥ २१ ॥
स्थूलदेशे परीणाहविस्तारं चैव सप्त वै ।
पूर्णांशं द्विगुणं ग्रासं द्वात्रिंशद्भिर्जरसमम् ॥ २२ ॥
तेषु वै सप्तविंशांशं पञ्चविंशांशमेव वा ।
त्रिभागाधिकविंशांशं एकविंशतिरेव वा ॥ २३ ॥

एकोनविंशदंशं वा षोडशं वा त्रयोदशम् ।
रुद्रांशं नन्दभागं वा सप्तांशं पञ्च एव वा ॥ २४ ॥
अथवा रुद्रभागोऽन्त्यं नवभागविभाजिते ।
तेष्वेकांशं समारभ्य एकैकांशविवर्धनात् ॥ २५ ॥
यावती( व )त्सप्तविंशांशं तद्वै च (तावद्वै)सप्तविंशतिः ।
पूजां(जना)शे तु बिम्बोच्चं साष्टत्रिंशत्रिभेदकम् ॥ २६ ॥
तथैव लिङ्गतारे वा लिङ्गनाभं (ङ्गना) हे च कल्पयेत् ।
लिङ्गाद्बिम्बोच्चभेदं तु तत्त्वाधिकशतं भवेत् ॥ २७ ॥
गर्भगेहं तथा नन्दभागं नन्दविदं भवेत् ।
अथवा गर्भगेहं तु त्रिनवांशविभाजिते ॥ २८ ॥
सप्तविंशतिमानं स्यादेतदेकांशवर्धनात् ।
पञ्चांशमुत्तमोत्सेधं मध्यमं चतुरंशकम् ॥ २९ ॥
अधमं तु गुणांशं स्यात् त्रिविधं द्वारमानकम् ।
अधमोत्तमयोर्मध्ये वसुभागविभाजिते ॥ ३० ॥
नवधा सफलोत्तुङ्गं द्वारमानं विधीयते ।
अथवा द्वारतुङ्गं तु सप्तविंशतिभाजिते ॥ ३१ ॥
एकैकांशविहीनेन बिम्बोच्चं सप्तविंशतिः ।
एवं हि द्वारमाने तु षट्त्रिंशं कौतुकोदयम् ॥ ३२ ॥
तथाऽधिष्ठानमानेन स्तम्भमाने च कल्पयेत् ।
सप्तवक्त्राद्यविस्तारे अथवैवं प्रकल्पयेत् ॥ ३३ ॥
एकादिनवहस्तान्तं नवधा हस्तमानकम् ।
तालादिनवतालान्तं तथा नवविधं भवेत् ॥ ३४ ॥
कर्तुश्चोदयतुल्यं वा यजमानवशादि दे(म्) ।
अथवा कन्तु(कर्तृ)तुङ्गं तु नवभागविभाजिते ॥ ३५ ॥
एकैकांशविहीनेन यावत्त्वं (त्त)सफलोदयम् ।
चतुर्विंशचतुर्भागं पूजांशोच्चं तु भाजिते ॥ ३६ ॥
एकांशं मङ्गलं स्यात्तं मूलं लिङ्गाङ्गुलं विदुः ।
मानाङ्गुलं तु वा प्रोक्तं परमासाद्यमानकम् ॥ ३७ ॥
कर्त्य(र्तु)र्दक्षिणहस्ते तु मध्यमाङ्गुलमध्यमे ।
पर्वदीर्घं तु तारं वा मानाङ्गुलं द्विधा स्मृतम् ॥ ३८ ॥

सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
त्रयोविंशाधिकं यावच्छान्तं त्रिभिरङ्गुलैः ॥ ३९ ॥
बिम्बमानं तु कर्तव्यमादौ द्वाभ्यां परार्थकम् ।
गृहे वाऽऽत्मार्थबिम्बानां मानमात्राङ्गुलेन तु ॥ ४० ॥
कर्तव्यमन्यथा श्व(च)त्तु कर्तव्ये कर्तृनाशनम् ।
अङ्गुले निर्मितं बिम्बं सर्वजात्यर्हकं परम् ॥ ४१ ॥
अङ्गुलाङ्गुलवृद्ध्याभिः आ(वृद्ध्या नि रा)यादिषट्शुभेक्षणम् ।
त्रिपडङ्गुलक्रमेणशूद्रजात्यायाश्च न रोपयेत् ॥ ४२ ॥
अङ्गुलादन्यय(द्य)न्मान स(स)वेदाशि(शी)ति या भवेत् ।
एनाश्च रोपयेत्तस्माज्जात्यश्च तद्द्विजार्हकम् ॥ ४३ ॥
द्विभागाधिकषष्ट्यश्च भागेकाशसमन्वितम् ।
नृपजात्यर्हकं ज्ञेयं नृपाणां वृद्धिकारणम् ॥ ४४ ॥
चतुर्विंशतिभागं तु कृत्वा भागसमन्वितम् ।
वैश्यजात्यर्हकं स्यात् वैश्यानामपि वृद्धिदम् ॥ ४५ ॥
षोडशांशे समारभ्य शूद्रवृद्धिकराशकम् ।
एवं जात्यर्हासंयुक्तमष्टमष्टगुणीकृते ॥ ४६ ॥
सप्तविंशतिसंख्या तु हृते शेषाद्दिनं भवेत् ।
तद्दिनं जातिनक्षत्रं स्यात्तद्दिनं सुखसंपदे ॥ ४७ ॥
सुशोभनं तु युक्तं चेत्कर्तुर्वास्तु नृपादिताम् ।
त्रिशच्छतान्तभागा तं बिम्बाच्च तु विभाजिते ॥ ४८ ॥
श्वरं रोपयेद्यावच्छुभयान्निसंभवम् ।
तस्मात् सोंतुरोच्च तु पादादुष्णिक(ष्णीष)सीमकम् ॥ ४९ ॥
कर्तुर्वांशकमिदं स्यातमशैरायादि कल्पयेत् ।
अष्टाभिर्वृद्धिदशाशभानुभिस्तु हृते द्विज ॥ ५० ॥
शेषमायमिति स्यातमशमष्टगुणीकृते ।
सप्तविंशतिहृच्छेषमाश्विन्यादिकं संभवेत् ॥ ५१ ॥
नवभिर्गुणिते त्वशराशिभिर्हासयेच्चत. ।
शेषं व्ययमिति स्यातमंशशेषानलेन तु ॥ ५२ ॥
धर्षयद्वसुभि. प्रोक्तं शेषं ध्वजादियोनयः ।
नवभिर्गुणिते सप्तहृते सौरवारादिकम् ॥ ५३ ॥

संभवं वर्धयेद्वेदसंख्या तु ह्रासयेच्चेदसंज्ञया ।
शेषभंशकमित्युक्तमेवमादि च षड्भवेत् ॥ ५४ ॥
आयाधिक्यं व्ययं क्षीणं पुष्कलाभं च शोभनम् ।
ध्वजधूमं च सिंहं च श्वानवृक्षाद्हस्ति च ॥ ५५ ॥
काकश्चयोनयश्चाष्टौ तेषु ह्यग्निवृषगजं ।
योनयः शुभदाज्ञेया इतराश्विपरीतकाः ॥ ५६ ॥
विधुरं चैव ये वेनांशकस्तथा ... .... ।
षष्ठाष्टमं भव्यशेषरिपुक्षयावहम् ॥ ५७ ॥
कर्तुश्च जन्मनक्षत्रं नृपवास्तुत्रिभिन्नया ।
गणयेद्बिम्बकक्षान्तं शोभनं च परिग्रहेत् ॥ ५८ ॥
वारं सोमादि शुभदं भौमवारश्च वर्जयेत् ।
सूर्यं वारं च सौरस्य मध्यं शेषोत्तमाः स्मृताः ॥ ५९ ॥
भानुवारादिसंयुक्तं विशाखादिश्चतुश्चतुः ।
वियोगं मरणं नाशममृतं च यथाक्रमम् ॥ ६० ॥
तस्करं भक्तिशक्तिश्च वनं राजं च षण्डकम् ।
अभयं धनमृणं चैव नवांशकमुदाहृतम् ॥ ६१ ॥
तेषु तस्करषण्डं च ऋणं चैव तु वर्जयेत् ।
गणेव्ययस्वरपालुपं योगमात्रं विवर्जयेत् ॥ ६२ ॥
एवं परीक्ष्य शोभाढ्यं माधुर्यं तु सुशोभयेत् ।
चतुर्णामभिवृद्ध्यर्थं जात्यंशकं प्रयोजयेत् ॥ ६३ ॥
तस्मादुगायभागौ च प्रशस्तमवेनकादयम् ।
उत्तमं दशताल्मादिलक्षणं वक्ष्यतेऽधुना ॥ ६४ ॥
मृण्मयं चेत्तु बिम्बं वै शूलस्थापनमाचरेत् ।
शैलजं प्रतिमं चेति शिलाग्रहणलिङ्गवत् ॥ ६५ ॥
लोहजं सकलं यत्तु मधूच्छिष्टेन निर्मितम् ।
स्थण्डिलं शालिभिः कुर्यात्कल्पाग्रे तु मण्डपे ॥ ६६ ॥
कुशेनयं तु संस्तन्य दर्भैः पुष्पैः परिस्तरेत् ।
तदूर्ध्वे फलकायादि दारजं भागुदाहृतम् ॥ ६७ ॥
आचार्यः शिल्पी कर्ता च शुभमानं परिग्रहेत् ।
तन्मानभ्योऽन्यिनाङ्गानि शिल्पिनैव गम्येत् ॥ ६८ ॥

प्राक्छिरश्चोर्ध्ववक्त्रं तु फलकायां निधापयेत् ।
गन्धपुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत् ॥ ६९ ॥
तस्य दक्षिणपार्श्वे तु शिवाग्निं तु प्रकल्पयेत् ।
समिदाज्यचरुद्रव्यं हुत्वा चाष्टशताहुतीः ॥ ७० ॥
द्रव्यान्तेऽप्याहुतिं हुत्वा पूर्णाहुतिं समाचरेत् ।
ध्यात्वा बिम्बाकृतिं स्वाग्नि मध्यमूलमुदाहृतम् ॥ ७१ ॥
आत्मनि यथा धूपं आघ्राणं तु समर्चयेत् ।
आग्नारक्रमात्संधानमाचरेत् ..... ........ ॥ ७२ ॥
शिरःसंधानमीशेन मुकुटं कवचेन तु ।
अस्त्रेण अस्त्रसंधानं पादौ सद्यः समर्चयेत् ॥ ७३ ॥
आदौ पश्चात्तु संधानं क्रमात्संपूर्णमाचरेत् ।
उपाङ्गं तु ततः कुर्यात्प्रत्यङ्गं तु ततः कुरु ॥ ७४ ॥
अष्टत्रिंशत्कलान्यासं तत्तदङ्गानि विन्यसेत् ।
वस्त्राभरणं चैव सूत्रं चोपाङ्गमिष्यते ॥ ७५ ॥
हस्तभूतिरितिच्छिन्नं प्रत्यङ्गमिति विद्यते ।
धर्मतालत्रितालान्तं श्रेष्ठान्तराधमं त्रयम् ॥ ७६ ॥
उत्तमं दशतालारूयं चतुर्विंशच्छताङ्गुलम् ।
मध्यमं दशतालं स्याद्भानुपङ्क्त्याङ्गुलं भवेत् ॥ ७७ ॥
फलाधिकशताङ्गुल्यधमं दशतालकम् ।
सप्ताढ्यशतं भागं नवतालोत्तमं भवेत् ॥ ७८ ॥
चतुर्णोत्तरशतांशं तु मध्यमं नवतालकम् ।
कन्यसं नवतालं स्यात् द्वैधाधिकशतं भवेत् ॥ ७९ ॥
तालं प्रत्येवमेवं तु क्रमाद्द्व्यङ्गुलं हरम् ।
उत्तमं दशतालेन ब्रह्मविष्णुमहेश्वरम् ॥ ८० ॥
मध्यमं दशतालेन उमा सरस्वती तथा ।
उषा भूमिश्च दुर्गा च लक्ष्मीश्च मातरस्तथा ॥ ८१ ॥
ज्येष्ठा चैव प्रकर्तव्या स्वस्वाङ्गानि समन्विता ।
चन्द्रादित्याश्विनौ चैव ऋषयस्तु ग्रहास्तथा ॥ ८२ ॥
अर्यं च षण्मुखं चैव चण्डेशक्षेत्रपालकम् ।
कन्यसं दशतालेन कारयेद्द्विजसत्तमः ॥ ८३ ॥

वसुवर्गाष्टमूर्तिश्च विद्येशाल्लोकपालकान् ।
अन्यांश्च देवताश्चैव नवतालोत्तमेन तु ॥ ८४ ॥
यक्षाप्सरोगणाश्चैव अस्त्रमूर्तिमरुद्गणान् ।
मध्यम नवतालेन विद्याधरगणस्तथा ॥ ८५ ॥
असुरान् सिद्धगन्धर्वान् पितरश्च तथैव च ।
कन्यस नवतालेन कारयेत्तु विचक्षणः ॥ ८६ ॥
अष्टतालेन म(मा)न्यास्तु पिशाच(चा)सप्तमेन तु ।
रसतालेन कुब्जांस्तु कारयेद्देशिकोत्तमः ॥ ८७ ॥
पञ्चतालोक्तमानेन विन्ये(घ्ने)श कारयेद्बुधः ।
तन्मध्यमाधमेनैव सर्वभूतगणान्कुरु ॥ ८८ ॥
बालस्तु वेदतालेन त्रितालेनैव कारयेत् ।
द्वितालं किंनरश्चैव एकतालं तु कूर्मकम् ॥ ८९ ॥
एवं तालक्रमं प्रोक्तं बेराणामनुकूलकम् ।
सवेदविंशदंशं च भक्तं बिम्बोदयं कुरु ॥ ९० ॥
तेष्वेव तालमात्रं स्यात्तन्मात्रं वसुभाजिते ।
एकांशं तु यवं प्रोक्तं यवैरप्यङ्गुलैरपि ॥ ९१ ॥
उष्णीषात्पादपर्यन्तमङ्गमानं प्रमीयते ।
त्रियवाधिकचन्द्रांशा उष्णीषोक्त(च्च)मुदाहृतम् ॥ ९२ ॥
तस्मादापूर्वकेशान्तमङ्गभागमुदाहृतम् ।
केशान्तादक्षिसूत्रान्तं युग्मांशं त्रियवाधिकम् ॥ ९३ ॥
अक्षिसूत्रात्पुटान्तं च पुटाद्धन्वन्तमानकम् ।
प्रत्येकं नियवाधिक्यं युगांशोदयमिष्यते ॥ ९४ ॥
हन्वादिगलमानं तु चतुर्यवमुदाहृतम् ।
यवैकोनमुदांशं तु कण्ठोच्चमिति विद्यते ॥ ९५ ॥
केशमूलाद्धनुसूत्रं हिक्कासूत्रमुदाहृतम् ।
हिक्कादाहृदयान्तं च हृदयं नाभिमीयकम् । ९६ ॥
नाभेस्तुमे(अ)ग्रमूलं तु सर्व गुणयवाधिकम् ।
उपोदशांशमुत्सेधं प्रत्येकं द्विजसत्तम ॥ ९७ ॥
अग्रमूलात्सूत्रमध्यं मध्यसूत्रं तदुच्यते ।
अधःसूत्रादधश्चोरुदीर्घं नक्ष(व)भागमायतम् ॥ ९८ ॥

तस्माद्वेदाङ्गुलं जानु जङ्घातुङ्गोरुसद्दृशम्।
युगं पादतलोत्सेधमेवमुत्सेधमुच्यते ॥ ९९ ॥
अङ्गुष्ठाग्रं तु भाज्यं तु तलं सप्तदशाङ्गुलम्।
हिक्कासूत्रादधोभागं दीर्घमष्टाङ्गुलं भवेत् ॥ १०० ॥
कूर्परोच्चं द्विभागं स्यादेकविंशत्प्रकोष्ठकम्।
सार्धत्रयोदशाङ्गुल्यं मध्यमाङ्गुलिसीमकम् ॥ १०१ ॥
अग्रतो मुखविस्तारं सार्धमाराङ्गुलं भवेत्।
मुखात्कर्णान्तविस्तृतं त्रयोदशाङ्गुलं मतम् ॥ १०२ ॥
ग्रीवाग्रं सार्धनन्दांशं ग्रीवामूलं दशाङ्गुलम्।
हृदयाद्बाहुसीमान्तं तु(च)त्वारिंशच्च वाऽर्धकम् ॥ १०३ ॥
सार्धद्वाविंशदङ्गुल्यं कक्षयोरन्तन(न्त)रस्तनम्।
नवांशं चतुर्यवोपेतं बाहुमूलविशालकम् ॥ १०४ ॥
एकविंशतिबाहुः स्यात्स्तनदेशस्य विस्तरम्।
हृदयावधिविस्तारमेकोनविंशदङ्गुलम् ॥ १०५ ॥
कलांशं चतुर्यवोपेतं मध्यव्यासमुदाहृतम्।
एकोनविंशदंशं तु श्रोणीतारमुदाहृतम् ॥ १०६ ॥
कटि(ट्यो)रग्रे विशालं तु द्विनवाङ्गुलमुच्यते।
तदधः कटिपार्श्वान्तं विस्तारः सार्धविंशतिः ॥ १०७ ॥
पादोनवसुभागं तु ऊरुमूलविशालकम्।
सपादद्वादशांशं तु ऊरुमध्ये विशालकम् ॥ १०८ ॥
पादोनगर्भभागं तु जानुव्यासमुदाहृतम्।
सपादवसुभागं तु नन्दिकाविस्तृ(स्तृ)तं भवेत् ॥ १०९ ॥
यवोपेतद्व्यंशं तु तस्य विस्तारमुच्यते।
अक्षरांशतलतुङ्गं तु तस्य विस्तारमुच्यते ॥ ११० ॥
तारार्धनखविस्तारं पादोनायतनर्तुकम्।
नियवोपेतवेदांशं तर्जन्यायाममुच्यते ॥ १११ ॥
पादोनवेदभागं तु मध्याङ्गुल्यायतं भवेत्।
यवोपेताग्निभागं स्वनामिकायाममिष्यते ॥ ११२ ॥
सार्धपक्षांशमानं तु कनिष्ठाङ्गुल्यदीर्घकम्।
भटोधिन्याविनवमघायांश ॥ ११३ ॥

नवतारं स्वतारार्धं नखं पूर्वोक्तवद्विदुः ।
तत्तदङ्गुलविस्तारं वेदांशं विभजेद्बुधः ॥ ११४ ॥
त्रिभागं मङ्गलाग्रोच्चं शेषं स्यात्तु नखान्तरम् ।
त्रियवाधिकविस्तारं बाहुमध्यविशालकम् ॥ ११५ ॥
सभागसप्तभागं तु कूर्परव्यासमुच्यते ।
पादोनरसभागं तु प्रकोष्ठमध्यविस्तरम् ॥ ११६ ॥
पादोनतुरंशं तु मणिबद्ध(न्ध)विशालकम् ।
सप्तांशं तु तलायामं सार्धपञ्चमध्यमाङ्गुलम् ॥ ११७ ॥
सपादभूतभागं स्यात् अ(त्व)नामिकायमुच्यते ।
यवाधिकं तु पञ्चांशं तर्जन्यायाममुच्यते ॥ ११८ ॥
सपादवेग(द)भागं तु दैर्घ्याङ्गुष्ठकनिष्ठयोः ।
अङ्गुष्ठमूलविस्तारं सपादांशमुदाहृतम् ॥ ११९ ॥
तर्जन्यष्टयवा ख्याता नवसंख्या तु मध्यमा ।
अनामिकाष्टयवा ख्याता सप्तसंख्या कनीयसी ॥ १२० ॥
अङ्गुष्ठाद्यङ्गुलान्तं तु मूलविस्तारमेव हि ।
तत्तन्मूलकलांशेऽशहीनमग्रविशालकम् ॥ १२१ ॥
अग्रतारं रसांशे तु पञ्चांशं नखविस्त(स्तृ)तम् ।
पार्श्वयोर्मांसलं शेषं वृत्तायत[न]ाकृति ॥ १२२ ॥
सपादं नखतारं तु नखायाममुदाहृतम् ।
नखायामं द्वयं चाधः पर्वदीर्घं प्रशस्यते ॥ १२३ ॥
अङ्गुष्ठमूलपर्वस्य दीर्घं सप्तदशयवाः ।
तर्जनीमूलपर्वं तु अनामिकाद्व्यङ्गुलम् ॥ १२४ ॥
मध्यमामूलपर्वस्य दैर्घ्यमष्टादश यवाः ।
कनिष्ठामूलपर्वस्य त्रयोदश यवाः स्मृताः ॥ १२५ ॥
मूलाग्रपर्वयोर्मध्ये दीर्घमध्यस्थपर्वसु ।
अङ्गुष्ठं तु द्विपर्वार्धं शेषास्त्रिपर्वसंयुताः ॥ १२६ ॥
सिद्धं तलाङ्गुलं विम तलाग्रं विपुलं भवेत् ।
रसांशं मध्यविस्तारं हस्तस्यैव तलस्य तु ॥ १२७ ॥
तलमूलविशालं तु सार्धपञ्चांशमुच्यते ।
अङ्गुष्ठमूलमारभ्य तर्जनीमूलमन्तकम् ॥ १२८ ॥

सार्धद्व्यङ्गुलं प्रोक्तं शूकोदरमिहोच्यते ।
अङ्गुष्ठमूलमारभ्य मणिबन्धावसानकम् ॥ १२९ ॥
दीर्घवेदाङ्गुलं प्रोक्तं द्व्यर्धांशं तु घनं भवेत् ।
पार्ष्णिहस्तघनान्यंशमग्रमङ्गुष्ठ(म)क्षयम् ॥ १३० ॥
अङ्गुलीनामधस्तात्तु द्व्यर्धांशस्यासलान्तरम् ।
द्विभागपार्ष्णिहस्तस्य शू(शु)कोदरविशालकम् ॥ १३१ ॥
शेषमध्यतलं निम्नं भूतो वेदांशविवायनम् ।
सूक्ष्मरेखा त्रिरेखस्त्विच्छङ्खं वा चक्रमूलवत् ॥ १३२ ॥
पद्माभं वा कुशाभं वा तलरेखा प्रकल्पयेत् ।
यवाङ्गुलतनिम्नं स्याद्रेखाणां तु द्विशोत्तम ॥ १३३ ॥
कुत्रामेऽपेक्षित(ताङ्)गेषु न्यासं पञ्चविभाजिते ।
एकांशं तु परिग्राह्य विस्तारं त्रिगुणान्वितम् ॥ १३४ ॥
यत्तन्नाहमिति ख्यातं नाहतो तारं कल्पयन् ।
कर्णोर्ध्वे शिरसा नाहं साष्टविंशाङ्गुलं भवेत् ॥ १३५ ॥
कर्णोर्ध्वे तु शिरस्तात्तु यवोनद्वादशाङ्गुलम् ।
कर्णयोः पूर्वनालं तु द्वाविंशदङ्गुलं भवेत् ॥ १३६ ॥
कर्णयोः पूर्वनाहं तु भान्वङ्गुलमुदाहृतम् ।
तयोर्मध्यस्थभागं तु कर्णस्थितिरुदाहृतम् ॥ १३७ ॥
शिरसो मध्यमामूर्तिमण्डलं चतुरङ्गुलम् ।
तस्मादादग्रकेशान्तं नवाङ्गुलमुदाहृतम् ॥ १३८ ॥
सते वै मण्डलात्कर्णकेशान्तं च नवाङ्गुलम् ।
मण्डलात्पृष्ठकेशान्तं सार्धमध्याङ्गुलं भवेत् ॥ १३९ ॥
ललाटे तिर्यगानन्तु नवाङ्गुलमुदाहृतम् ।
केशान्तादक्षिसूत्रस्य द्वयोर्मध्ये भ्रुवोः स्थिते ॥ १४० ॥
भ्रुवाग्रौ तु नवाङ्गुलं चापाकारं यथा कुरु ।
द्व्यन्तरं तु भ्रुवोर्विम सार्धवेदयवं भवेत् ॥ १४१ ॥
पञ्चाङ्गुलं भ्रुवायामं मध्यतारं यवद्वयम् ।
बालचन्द्राग्रवत्क्षीणं भ्रुवाग्रौ तस्य मध्यमात् ॥ १४२ ॥
कर्णिकायामविस्तारं यवमानमुदाहृतम् ।
कृष्णमण्डलविस्तारं चोत्सेधं तु यवं भवेत् ॥ १४३ ॥

तां तत्समं व्यासं (?) कृष्णमण्डलपार्श्वयोः ।
शफलाकृतिकं स्या(वा)ऽपि धनुषा(रा)कृतिरेव वा ॥ १४४ ॥
अर्धचन्द्राकृतिर्वाऽथ नेत्राकारं प्रकल्पयेत् ।
तदाकारानुकोल(कूलो) च्वसितमण्डलयोर्द्विज ॥ १४५ ॥
नेत्रान्ते त्व(न्तेऽ)र्धयवं रक्तमण्डलं तु सितांशकम् ।
कृष्णमण्डलमध्ये तु ज्योतिर्मण्डलकं यवम् ॥ १४६ ॥
तदष्टांशैकभागं तु तन्मध्ये दृष्टिमण्डलम् ।
तत्सार्धं यवमानं तु ऊर्ध्ववर्मततं भवेत् ॥ १४७ ॥
अधोवर्म च तत्तुल्यं दीर्घमष्टादशं यवम् ।
नेत्रयोरन्तरं विप्र सपादद्व्यङ्गुलं भवेत् ॥ १४८ ॥
ऊर्ध्ववर्म भ्रुवोरन्त(न्तः)सार्धपट्कयवं भवेत् ।
अधोवर्मस्थितिः क्षिप्रं तत्र सूत्रे विधीयते ॥ १४९ ॥
कर्तृनाशयथा(थो)दृष्टिश्चोर्ध्वदृष्टिर्विपत्करम् ।
बहुनाशं भवेत्पार्श्वदृष्टिश्चेद्धावमासनम् ॥ १५० ॥
तस्मात्सर्वप्रयत्नेन सममेव निरीक्षणम् ।
नेत्रमेवं समाख्यातं नासिकालक्षणं पुनः ॥ १५१ ॥
नासिकापुटत्राहं तु तारमष्टादशा यवाः ।
तदर्धं मध्यविस्तारं तस्यार्धं मूलविस्तृम् ॥ १५२ ॥
गोजिमूलं तु नास्यग्रात्तुङ्गं द्व्यङ्गुलं भवेत् ।
पुटयोर्मध्यभित्तिस्तु पुष्करं त्विति विद्यते ॥ १५३ ॥
अत्यर्थ(र्धं)यवमालम्ब्य नासाग्रपुटसूत्रकम् ।
साध्य(र्ध)वेद्यवा(वा)ङ्गोचदीर्घं वस्यार्धविस्तृतम् ॥ १५४ ॥
ऊर्ध्वेष्टस्योर्ध्वनिम्नं तु गोजिनाम्ना प्रशंसिता ।
यवानं तु (वोपनता) गोजी तु तत्रैवं नासिका द्विज ॥ १५५ ॥
सपादं चतुरंशं तु आस्यदीर्घं तिर्यग्विदुः ।
उत्तरोष्ठायतं चाऽऽस्यदीर्घतुल्यमुदाहृतम् ॥ १५६ ॥
उत्तरोष्ठस्य मध्ये तु तारं सार्धत्रयं यवम् ।
अपूर्वकृतशान्तारमास्यसीमावसानकम् ॥ १५७ ॥
यवमानघनं पालि उत्तरोष्ठस्य चोपरि ।
त्रियवोपनता पालि ततोऽष्ठ(तोष्ठ)सदृशायता ॥ १५८ ॥

अष्टादश यवाः प्रोक्ता अधरोष्ठस्य दीर्घकम् ।
यवाधिकाङ्गुलं तस्य विस्तारं द्विजसत्तम । १५९ ॥
अधरं पालिकासार्धं यवतारमधोगतम् ।
चिबुकादधरोच्चं तु सार्धषड्विधमुच्यते ॥ १६० ॥
किंचित्प्रहसिताकारमाढ्ययुक्त्या तु कारयेत् ।
अधराश्चि(चि)बुकालम्बं सार्धपञ्चाङ्गुलं भवेत् ॥ १६१ ॥
चिबुकात्तुङ्गन्नर्नेशं सार्धाष्टयवमुच्यते ।
सार्धद्वयाङ्गुलं तस्य तारमायतवृत्तवत् ॥ १६२ ॥
भानोः संधौ कर्णबन्धान्तरं तु द्वादशाङ्गुलम् ।
भानोर्बाह्य समारभ्य पादोनगुणमात्रकम् ॥ १६३ ॥
कण्ठदेशमिति व्यासं तनेबन्धं (त्रो नेत्रं) वदामि ते ।
नेत्र तत्कर्णबन्धान्तं द्व्यन्तरं सप्तमात्रकम् ॥ १६४ ॥
कर्णस्य तु विशालं तु अष्टादशयवाः स्मृताः ।
अक्षिसूत्रोर्ध्वतः कर्णं तुङ्गं चाष्टयवं स्मृतम् ॥ १६५ ॥
तदूर्ध्वं चोर्ध्वबन्धं तु शेषं वृत्त तु मूर्धतः ।
नेत्रसूत्रा ... ... .... ॥ १६६ ॥
नेत्र ... आदधः कर्णबन्धं सप्तदशं यवम् ।
सार्धवेदाङ्गुल तस्मात्तस्य नालं प्रलम्बयेत् ॥ १६७ ॥
पूर्वनालायतं व्योमभागं सार्धाङ्गुलं परम् ।
नालयोर्व्यासमाख्यातं गलमर्धाङ्गुलं नतम् ॥ १६८ ॥
ता(ना)लाकारौ त्रिपादं च वेदांशं विस्तृतायतम् ।
कर्णेतुङ्गपशेषं तु यवैकोननवाङ्गुलम् ॥ १६९ ॥
पिप्पलीग्रमर्धांशं हि द्विगुण हि तदायतम् ।
उत्सेधं चार्धमात्रं स्यान्मूलादाग्रक्षयानुगम् ॥ १७० ॥
द्विभागं पिञ्छ(चषु)पीदीर्घं द्वियवार्धांशतचातिः ।
अक्षिसूत्रादधः कर्णद्वारमर्धाङ्गुलं भवेत् ॥ १७१ ॥
कर्णद्वारं नतं निम्नं मध्यमेव हि वक्षलम् ।
कर्णपालियनं सार्धयवनीव्रं चतुर्यवम् ॥ १७२ ॥
पृष्ठकर्णस्य विस्तारदध्यार्धांशमुदाहृतम् ।
वे(शे)षान्तात्पृष्ठकर्णं तु द्व्यन्तरार्ध(र्धांश)मात्रकम् ॥ १७३ ॥

पृष्ठकेशावसाने तु नाड्यर्धाधिकं त(थं तु तच)तम् ।
तस्याधः पृष्ठग्रीवोच्चं युगांशं त्रियवाधिकम् ॥ १७४ ॥
कृकाटिकाधः पृष्ठाग्र[ग्री]वाग्रं तु नवाङ्गुलम् ।
पृष्ठग्रीवस्य मूलस्य तारं सार्धदशाङ्गुलम् ॥ १७५ ॥
आमूलाग्रं क्रमात्कर्षं ग्रीवावृत्ताङ्गमुच्यते ।
हिक्कासूत्रोपरि स्कन्धतुङ्गं तु चतुरङ्गुलम् ॥ १७६ ॥
तस्पादाकटिसीमान्तं वंशिक(शम्)शाशायतम् ।
तद्दशमतविस्तारं सार्धषोडशकं यवम् ॥ १७७ ॥
वंशमानादधस्तात्तु वंशमूलं गुणाङ्गुलम् ।
परे तु तुङ्गमेवं स्यात्तस्मिन्व्यासं वदामि ते ॥ १७८ ॥
सार्धकक्षाङ्गुल प्रोक्तं कक्षयोरन्तरं द्विज ।
कक्षयोः स्वंसफरतुङ्गं सप्ताङ्गुलान्तरं भवेत् ॥ १७९ ॥
कक्षोर्ध्वे बाहुसीमान्तं सप्ताङ्गुलमुदाहृतम् ।
सार्धषोडशमात्रं तु मध्यव्यासमुदाहृतम् ॥ १८० ॥
कक्षस्याग्रविशालं तु सप्तमात्रमुदाहृतम् ।
नाभिसूत्रे तु विस्तारं सार्धद्व्यर्धाङ्गुलं भवेत् ॥ १८१ ॥
कटिबन्धौ तु विस्तारं त्रिपदंशमुदाहृतम् ।
पादोनकर्षमागं तु स्फिक्पिण्डं प्रतिविस्तृतम् ॥ १८२ ॥
सन्धिचौ तौ समाख्यातौ तयोर्मध्यं चतुर्यवम् ।
अपरेतरबिम्बोक्तं पार्श्वव्यासमुदाहृतम् ॥ १८३ ॥
कक्षस्याग्रविशालं तु सप्तमात्रमुदाहृतम् ।
सपादषोडशमात्रं स्यात्स्तनसूत्रेण विस्तृतम् ॥ १८४ ॥
सपादद्वादशांशं तु मध्ये पार्श्वे घनं भवेत् ।
श्रोणिमध्ये घनं पार्श्वे सप्तदशाङ्गुलं भवेत् ॥ १८५ ॥
ततः श्रोण्युदयं विप्र सप्तमात्रमुदाहृतम् ।
नाभिसूत्रादधश्चोर्ध्वे चतुर्विंशाङ्गुलं भवेत् ॥ १८६ ॥
श्रोण्यधस्तात्कटेरूर्ध्वं सार्धगुणाङ्गुलं भवेत् ।
तत्कटेस्तु घनं धीमन्सार्धभान्वङ्गुलं भवेत् ॥ १८७ ॥
प(स्फिक्)पिण्डं चोरुमूलात्तु नीव्रं सार्धयुगाङ्गुलम् ।
सतिपण्डलं घनं त्वर्धसूत्रादर्धाङ्गुलं भवेत् ॥ १८८ ॥

कक्षाग्रपरनिम्नं तु सार्धद्व्यङ्गुलकं भवेत् ।
ग्रीवे सुवृत्तनं नाभौ ग्रीवाग्रौ परिवेष्टितौ ॥ १८९ ॥
कण्ठमूलेन त ता(तथा)र तुङ्गं चैव चतुर्यवम् ।
हिक्कायास्त्वक्षमात्रं च ज(त)त्र सूत्रमुदाहृतम् ॥ १९० ॥
हिक्कामध्यात्तु कक्षान्तं स्तनान्तरं सम भवेत् ।
हृदयं स्तनयोर्मध्ये निम्नमध्यर्धयात्रम् । १९१ ॥
नी(ना)लं वै कण्ठमूले च यवत्रयप्रमाणतः ।
अर्धयवायामसंयुक्तं कल्पयेत्मन्त्रवद्भवेत् ॥ १९२ ॥
कण्ठमूले नत हिक्कासूत्राधस्तात्प्रकल्पयेत् ।
हिक्कासूत्रोपरिष्टात्तु नीलवर्णं प्रकल्पयेत् ॥ १९३ ॥
हृदयस्तनपीठोच्चं द्व्याङ्गुलमुदाहृतम् ।
सप्तदशयवं व्यासं स्तनमानीलविस्तृतम् ॥ १९४ ॥
तन्मध्ये चूचुकोच्च तु व्यास चैव यवद्वयम् ।
नाभेः स्तनस्य विस्तारं व्योमाक्षं द्व्याधिकम् ॥ १९५ ॥
नाभिमदक्षिणावृत्तं मूलतारं यवद्वयम् ।
तन्नाभ्य(भि)वृत्तमध्यस्थनाभिमूत्रं द्विजोत्तम ॥ १९६ ॥
नाभेरधःस्थपार्श्वोनस्तोच्चय पञ्चमात्रकम् ।
तत्तत्स्थानात्कटिश्रोणी सार्धद्व्यङ्गुलमुच्यते ॥ १९७ ॥
तस्मान्मेढ्रमूलान्त मेढ्रपीठं युगाङ्गुलम् ।
पादतन्मात्र च लिङ्गदीर्घमुदाहृतम् ॥ १९८ ॥
लिङ्गमूलविशालं तु सप्तदश यवाः स्मृतम् ।
लिङ्गाग्रमं त्रिभागैकपञ्चगुणायत भवेत् ॥ १९९ ॥
तत्र आगण्डमूले तु यवमात्रं गुह(गुदा)न्तरम् ।
रक्तोत्पलमुकुलायाममग्रगण्डाग्रमुच्यते ॥ २०० ॥
मुष्कायामविशालं तु सार्धवेदाङ्गुलं भवेत् ।
घन सार्धगुणार्ध तु तन्मूलोर्ध्वोरुवर्धनम् ॥ २०१ ॥
मेढ्रपीठस्य मूलस्य व्यासं सप्तार्धमात्रकम् ।
मेढ्रपीठस्य मूलान्तयूरुमूलस्य मांसलम् ॥ २०२ ॥
जानुमण्डलविस्तारं सपादं चतुरङ्गुलम् ।
सार्धद्व्यङ्गुलं प्रोक्तं जानुमण्डलनीव्रकम् ॥ २०३ ॥

सार्धद्वयङ्गुपृष्ठजान्वोर्ता विदुः । (?)
मध्ये तु पार्श्वयोः शेषं यथासौन्दर्यमाचरेत् ॥ २०४ ॥

इत्यंशुमद्भेदे काश्यपशिल्प उत्तमदशतालपुरुषमानं नाम-
पञ्चाशत्तमः पटलः ।

---

॥ अथैकपञ्चाशत्तमः पटलः ॥

---

मध्यमं दशतालेन स्त्रीमानमथ वक्ष्यते ।
सरस्वती च दुर्गा च उमा भूमिश्च मातरः ॥ १ ॥
लक्ष्मीश्चैव तु ज्येष्ठा च अनेन विधिना कुरु ।
ईशो ब्रह्मा रथे विष्णुः शक्तिरित्यभिधीयते ॥ २ ॥
तेषामनुगुणं मानं तन्मध्ये तेऽस्तु मानकम् ।
शंभुं नासाग्रसीमान्तं शक्त(क्यु)चं ह(धु)चको(मो)त्तमम् ॥ ३ ॥
शंभोर्वै स्तनसीमान्तमधमाधममुच्यते ।
तयोर्मध्येऽष्टभागेन नवधा शक्तिमानकम् ॥ ४ ॥
शंभोर्हि स्यात्तदुद्दिष्टं स्तनान्तमधमाधमम् ।
तयोर्मध्येऽष्टभागैकं नवधा शक्तिमानकम् ॥ ५ ॥
एवं द्विर्नवयोत्सुक्तं पादादुष्णीषसीमकम् ।
तस्या जात्यंशमायामं योजयेत्ति(त्सि)द्धरुच्यताम् ॥ ६ ॥
श्रीभङ्गासननृत्तानां चान्यमानवमूर्तिनाम् ।
देव्युच्चं समपादस्य स्थानकं होव युक्तितः ॥ ७ ॥
दुर्गा ज्येष्ठा च लक्ष्मीश्च मातरश्च विशेषतः ।
मानकम्प्येतु लिङ्गवा माने संकल्प्य देशिकः ॥ ८ ॥
मूललिङ्गस्य गौरी तु लिङ्गमानेन कल्पयेत् ।
सद्व्यंशतीशतं भागं स्त्रीमाने तु विभाजिते ॥ ९ ॥
एकांशमङ्गुलं स्यात्तं तदष्टांशयवं भवेत् ।
तदङ्गुलैर्यवैश्चैव अङ्गमानं प्रयीयते ॥ १० ॥
उमादीनां तु देवीनामेतदेवाङ्गुलायतम् ।
उष्णीषोदयमेकांशं केशान्तं तु गुणाङ्गुलम् ॥ ११ ॥

केशान्तादक्षिसूत्रान्तं सत्रिपाद्युगांशकम् ।
अक्षिसूत्रात्पुटान्तं तु सार्धवेदांशमिष्यते ॥ १२ ॥
नासापुटाच्चु हस्व(न्व)न्तं सत्रिपादगुणांशकम् ।
तस्याथ ग्रीवामानं तु चतुर्भा-मुदाहृतम् ॥ १३ ॥
हि(वि)क्यातं(हृ)दयान्तं च हृदयान्नाभिसीमकम् ।
नाभ्यादियोनिपर्यन्तं समं त्रयोदशाङ्गुलम् ॥ १४ ॥
ऊरुदीर्घं समंजङ्घा दीर्घपात(द)तलं युगम् ।
तलपादतलायामं पार्ण्यङ्गुल्यग्रसीमकम् ॥ १५ ॥
तर्जन्यादिषु ये दीर्घं चतुर्भागमुदाहृतम् ।
सार्धत्रिपादमर्धं स्यात्त्रिभागं वदनामिका ॥ १६ ॥
सार्धद्विभागमानं तु कनिष्ठाङ्गुलिदीर्घकम् ।
द्विरष्टासार्धपातालपाताल्परसभिर्यवैः ॥ १७ ॥
अङ्गुष्ठादिकनिष्ठान्तं चरणाङ्गुलिविस्तृतम् ।
त्रिद्व्यंशं तु नखव्यासं पादोन्व(ना)यतवर्तुलम् ॥ १८ ॥
अङ्गुलीना मुखोर्ध्वं तु नखव्याससमं भवेत् ।
मध्यं रसाङ्गुलं जान्वोर्व्यासं तु मिति विद्यते ॥ १९ ॥
मध्ये पञ्चाङ्गुलं पार्ष्णिविस्तारं चतुरङ्गुलम् ।
कुक्षिगुल्फान्तविस्तारं पञ्चभागं विधीयते ॥ २० ॥
नलिका त्रिवेदांशं जङ्घामध्यं रसाङ्गुलम् ।
जानोर्व्यासं तु सप्तांशं भान्वंशमूरमूलतः ॥ २१ ॥
भानुद्विगुणभागं तु विस्तारं कादि(कटि)बन्धके ।
योनिपीठविशालं तु सप्ताङ्गुलमुदाहृतम् ॥ २२ ॥
योनिभागं चतुर्भागमधोमाश्वत्थपत्रवत् ।
विस्तारसदृशोत्सेधं योनिं कुर्यात्समालयम् ॥ २३ ॥
श्रोणिस्थाने तु विस्तारं सपवं त्रिंशदङ्गुलम् ।
नाभेस्तु नतविस्तारं सयवं परिकीर्तितम् ॥ २४ ॥
मध्यमंसाविशालं तु रुद्राङ्गुलमुदाहृतम् ।
स्तनयस्तन्तु(योस्तत्तु)विस्तारं सार्धत्रयोदशाङ्गुलम् ॥ २५ ॥
स्तनान्तरं नवांशं स्याद्द्विगुणं स्तनचूचुकम् ।
स्तनोर्ध्वं सार्धवेदांशमसार्या(र्धो)नाङ्गुलोन्नतम् ॥ २६ ॥

स्तनाक्षं च स्तनं चैव वृत्तं कृत्यादिसुन्दरम् ।
स्तनान्तरं यवाष्टांशं चिन्तविरंचतत्र वै ॥ २७ ॥
अक्षयोरन्तरं विप्र सप्तदशाङ्गुलं स्मृतम् ।
बाहुपर्यन्तविस्तारमेकत्रिंशाङ्गुलं भवेत् ॥ २८ ॥
हिक्कासूत्रादधो बाहुदीर्घं षड्विंशदङ्गुलम् ।
कोप(कूर्प)रोच्चं द्विभागं स्यात्प्रकोष्ठाद्द्विनवाङ्गुलम् ॥ २९ ॥
मणिबन्धान्ततलायामं सप्ताङ्गुलमुदाहृतम् ।
तस्मान्मध्यमाङ्गुल्यं षड्भिः पञ्चात्तर्जनी भवेत् ॥ ३० ॥
अनामिकातर्जनीतुल्यं युगाङ्गुष्ठकनिष्ठयोः ।
अङ्गुलीनां तु दीर्घैवं हस्तयोरुभयोरपि ॥ ३१ ॥
नखसप्ताष्ट सप्त तु यवाङ्गुष्ठादि विस्तृतम् ।
तत्षडंशं च भागं च नखतारमिहोच्यते ॥ ३२ ॥
यवद्वाराधिकं तारं नखायामं तु तीक्ष्णवत् ।
हस्तस्य तलविस्तारं पञ्चाङ्गुलं विधीयते ॥ ३३ ॥
मणिबन्धविशालोऽग्रिभूतांशं कोपरोस(कूर्परस्य) तु ।
षडंशं बाहुविस्तारं सप्तांशं बाहुमूलके ॥ ३४ ॥
तस्मादामणिबन्धान्तं तरुणं वेणुवत्कृशम् ।
हस्तविस्तारमेवं स्यात् सप्तांशं ग्रीवाविस्तृतम् ॥ ३५ ॥
अग्रमूले तु विस्तारं वस्वंशं सा(स्या)द्यवाधिकम् ।
रुद्रांशं मुखविस्तारं कुक्कुटाण्डसमाकृति ॥ ३६ ॥
भ्रुवः केशान्तयोर्मध्यं साधृतिद्व्यङ्गुलं भवेत् ।
भ्रूमध्यनेत्रसूत्रान्तं सपादद्व्यङ्गुलं भवेत् ॥ ३७ ॥
...सयवैकाङ्गुलं भवेत् ।
तदर्ध(र्धं) कोज(न)दीर्घं तु तस्यार्धं तस्य विस्तृतम् ॥ ३८ ॥
हरितहस्तोपमं पादं हस्तं गोपञ्जवत्कृतम् ।
शेषयुक्तं तु तालोक्तमार्गेणैव समाचरेत् ॥ ३९ ॥
स्त्रीणां सामान्यमेतद्धि विशेषमधुना शृणु ।
गौर्येवं द्विभुजा शान्ता द्विनेत्रैः पद्मसारिता ॥ ४० ॥
करण्डमुकुटा वाऽथ किरीटमुकुटा तथा ।
मुकुटं केशबन्धं स्यात्तेषु वै सुन्दरं कुरु ॥ ४१ ॥

केशान्तमुकुटोत्सेधमष्टादशाङ्गुलाधमम् ।
एकविंशाङ्गुलं मध्यं श्रेष्ठं चतुर्द्व्यङ्गुलम् ॥ ४२ ॥
शिरोनाहत्रयांशैकं मुकुटं मूलविशाल(स्तृत)म् ।
मूले सप्तांशया भाज्य भागेनाग्रविशालकम् ॥ ४३ ॥
किरीटमुकुटं चैव केशबन्धंवमाचरेत् ।
मूलादग्रं क्रमात्क्षीणं करण्डमुकुटस्य तु ॥ ४४ ॥
पद्मस्य मुकुलाकारं मुकुटाग्रं प्रकल्पयेत् ।
त्रिपञ्चसप्तभिर्देवां करण्डैस्तु विराजितम् ॥ ४५ ॥
चतुष्पुरु(री)मसंयुक्तं नानापुष्पैर्विराजितम् ।
हारोपग्रीवसंयुक्तं मुक्तादामैरलंकृतम् ॥ ४६ ॥
कर्णौ कुण्डलसंयुक्तौ चतुर्मात्रौ तता(थाऽऽ)यतौ ।
मुकुटं कुण्डलं वाऽथ वृषं कुण्डलमेव वा ॥ ४७ ॥
कटकैः कटिसूत्रं च सारोपग्रीवसंयुतम् ।
बाहुपूरिमसंयुक्तं छिन्नवीरसमन्वितम् ॥ ४८ ॥
यज्ञोपवीतसंयुक्ता केयूराद्या सुशोभना ।
दुकूलवसना देवी श्यामवर्णा च सुस्तनी ॥ ४९ ॥
उत्पलं दक्षिणे हस्ते वामहस्तं प्रलम्बितम् ।
आभङ्गसमभङ्गं वा कल्पयेदतिसुन्दराम् ॥ ५० ॥
दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम् ।
आभङ्गे तु गुणांशे तु पदांशं समभङ्गके ॥ ५१ ॥
नतमानं समाख्यातं सूत्रं वक्ष्ये यथाक्रमम् ।
ललाटमध्याद्वामे तु नेत्राधश्च पुटान्तके ॥ ५२ ॥
हर्वोरे समालम्ब्य स्तनयोरन्तरे तथा(ता)म् ।
नाभेर्दक्षिणपार्श्वे तु वामोरुदक्षिणं वृतम् ॥ ५३ ॥
श्रवामश्चरणौ पार्ष्णि वामपार्श्वे तु लम्बयेत् ।
पादादङ्गुष्ठयोश्चैव द्व्यन्तरं षोडशाङ्गुलम् ॥ ५४ ॥
तत्र भागैकभागं तु पार्ष्ण्यन्तरमुदाहृतम् ।
एवमाभङ्गमाख्यातं समभङ्गमथ शृणु ॥ ५५ ॥
ललाटमध्यनासाग्रात् पादपार्ष्ण्यश्च मध्यमे ।
प्रसार्य ब्रह्मसूत्रं तु द्व्यन्तरं तु प्रमीयते ॥ ५६ ॥

तत्सूत्रं स्तनयोर्मध्यं दक्षिणे तु गुला(णा)ङ्गुलम् ।
तत्सूत्राद्वामने(दक्षिणे)नाभिनीव्रं द्व्यङ्गुलकं भवेत् ॥ ५७ ॥
तत्सूत्राद्वापतो योनिमूलं मध्यं युगाङ्गुलम् ।
तत्सूत्राद्दक्षिणे जानुनीव्रं गुणाङ्गुलं भवेत् ॥ ५८ ॥
शेषं पूर्ववदुद्दिष्टं गौरीलक्षणमेव हि ।
सरस्वत्यादिशक्तीनां मागेव प्रोच्यते न वा ॥ ५९ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे मध्यमदशतालविधानं नामैक-
पञ्चाशत्तमः पटलः ।

---

॥ अथ द्विपञ्चाशत्तमः पटलः ॥

---

कन्यसं दशतालेन शृणु वक्ष्ये द्विजोत्तम ।
चन्द्रादित्याश्विनी चैव कश्यपश्च गुहस्तथा ॥ १ ॥
आर्यः शास्तृसश्चैव श(च)ण्डेशः क्षेत्रपालकः ।
कन्यसं दशतालेन कारयेत्तु विचक्षणः ॥ २ ॥
कलाधिकशतांशः स्याद्धमं दशतालकम् ।
उष्णीशमङ्गुलं प्रोक्तं केशमानं गुणाङ्गुलम् ॥ ३ ॥
केशात्तु हनुपर्यन्तं सोध्वं(सार्धं) भान्वङ्गुलं भवेत् ।
युगाङ्गुलं समाख्यातं कण्ठमानं द्विजोत्तम ॥ ४ ॥
हिक्स्यान(कादि)स्तनमूलान्तं सार्धत्र्य(द्व्य)ङ्गुलकं भवेत् ।
स्तनादानाभिपर्यन्तं तत्समं चेति कीर्तितम् ॥ ५ ॥
नाभेस्तु मेढ्रमूलान्तं सार्धद्वादशमात्रकम् ।
तन्मेढ्रमूलं जान्वग्रात्पञ्चविंशतिमात्रकम् ॥ ६ ॥
वेदभागं तु जानूश्च जङ्घा चोरुसमा भवेत् ।
वेदांशं चरणोत्सेधं तुङ्गमेवं विधीयते ॥ ७ ॥
उष्णीषात्पृष्ठकेशान्तं सार्धभान्यङ्गुलं भवेत् ।
उष्णीषपार्श्वात्तेकेशान्तं पञ्चाङ्गुलमुदाहृतम् ॥ ८ ॥
केशा[न्ता]द्धनुपर्यन्तं मानं तु गुणभाजिते ।
केशान्तादक्षिसूत्रान्तं पुटार्धं जान्वकं तथा ॥ ९ ॥

यवोपेतद्विभागं तु नेत्रयोरन्तरं द्विज ।
तत्समं नयता(ना)यामं भूतमात्रं तु वाऽऽयतम् ॥ १० ॥
नृ(भ्रू)मध्यादूर्ध्वकेशान्तं सप्तदश यवाः स्मृताः ।
'यवं भ्रूमध्यविस्तारमानुपूर्व्याच्चदग्रकौ ॥ ११ ॥
पञ्चयवं नेत्रविस्तारमूर्ध्ववर्मे यवार्धकम् ।
अधोवर्मे तु तत्तुल्यं करवीरपवं भवेत् ॥ १२ ॥
नेत्रायामं त्रिधा कृत्वा एकांशं कृष्णमण्डलम् ।
कृष्णमण्डलमध्ये तु ज्योतिर्यवप्रमाणकम् ॥ १३ ॥
यक(व)मानेन दृष्टिः स्याज्ज्योतिर्मण्डलमध्यमे ।
अधोवर्मे सितत्तिन्नेत्रं सू(र्मसु तत्रेभसू)त्रं कुर्याद्विशेषतः ॥ १४ ॥
तस्य केशान्तयोर्मध्ये भ्रूस्थितिर्बालचन्द्रवत् ।
कर्णस्थाने च कर्णं च उत्तमं दशतालवत् ॥ १५ ॥
घ्राणमूलस्य विस्तारं यवमात्रमुदाहृतम् ।
नासिकाग्रविशालं तु व्योमाङ्गुलमुदाहृतम् ॥ १६ ॥
अधरोष्ठस्य चाऽऽयामं पक्षाङ्गुलमुदाहृतम् ।
तदर्धं तस्य विस्तारं चिबुकं च द्वयाङ्गुलम् ॥ १७ ॥
विस्तारं तत्समं विद्यान्निम्नमर्धयवं भवेत् ।
तस्मादधरनिष्क्रान्तं यवोनव्योममात्रकम् ॥ १८ ॥
ग्रीवामूलविशालं तु वस्वङ्गुलमुदाहृतम् ।
ग्रीवाग्रस्य तु विस्तारं सार्धसप्ताङ्गुलं भवेत् ॥ १९ ॥
वक्षःस्थलस्य विस्तारं सप्तविंशतिमात्रकम् ।
पञ्चविंशतिमात्रं तु बाहुदीर्घमुदाहृतम् ॥ २० ॥
आयामं तु प्रकोष्ठस्य एकोनविंशदङ्गुलम् ।
तस्मात्तामध्यमाग्रान्तं सार्धद्वादशमात्रकम् ॥ २१ ॥
तदर्धं तु तलायामं शेषं मध्या(पमर्धा)ङ्गुलायतम् ।
अङ्गुष्ठस्तस्य दीर्घं तु अष्टादश यवाः स्मृताः ॥ २२ ॥
सार्धवेदाङ्गुलं मोक्तमनामिका तु(नामायास्तु)दीर्घकम् ।
तदा(र्धे)न तर्जनीदीर्घं कनिष्ठाया युगाङ्गकम् ॥ २३ ॥

धर्मावधिमसुभूतं च यवाङ्गुष्ठादिविस्तृतम् ।
तन्मूलेऽष्टांशहीनं तु शेषमग्रविशालम् ॥ २४ ॥
अग्रव्यासेन भूतांशे वेदांशे नखविस्तृतम् ।
विस्तारात्पादमाधिक्यं नखयाममुदाहृतम् ॥ २५ ॥
अङ्गुष्ठे तु द्विपादं स्यादन्येषां तु त्रिपादकम् ।
तलमध्यमरेखाभिः शूलाभं पार्श्वयत्तले ॥ २६ ॥
मूलप्रदेशस्य घनं..... ......कोलकमुच्यते ।
अष्टांशहीनमग्रं तु घनमित्यभिधीयते ॥ २७ ॥
तलायामसमं ज्ञेयं तलस्यैव तु विस्तृतम् ।
मणिबन्धस्य विस्तारं मिमात्रं द्वियवाधिकम् ॥ २८ ॥
प्रकोष्ठमूलविस्तारं सार्धभूतांशमुच्यते ।
बाहु(ह्व)ग्रस्य तु विस्तारं सार्धपण्मात्रमुच्यते ॥ २९ ॥
बाह्वोर्मध्यविशालं तु सप्ताङ्गुलमुदाहृतम् ।
हिक्कासूत्रं तु कक्ष्यान्तं वस्वङ्गुलमुदाहृतम् ॥ ३० ॥
द्वाविंशद[ङ्गं सं]योक्तं....कक्षयोरन्तरा युगम् ।
हृदयावधि(वधि)विस्तारमष्टादशाङ्गुलं भवेत् ॥ ३१ ॥
उदरस्य विशालं तु सप्तादशाङ्गुलं भवेत् ।
श्रोणिप्रदेशविस्तारं दशाङ्गुलमुदाहृतम् ॥ ३२ ॥
पञ्चयवं नाभिविस्तारं निम्नमर्धयवं भवेत् ।
स्तनमण्डलविस्तारमर्धाङ्गुलमुदाहृतम् ॥ ३३ ॥
चुचु[काग्रस्य विस्तार]मुत्सेधं तत्समं भवेत् ।
जानुमध्यविशालं तु सार्धपण्मात्रमुच्यते ॥ ३४ ॥
नलिकायास्तु विस्तारं सार्धं वेदाङ्गुलं भवेत् ।
अङ्घ्रितलाग्रविस्तारं कनका(द्विनवा)ङ्गुलमुच्यते ॥ ३५ ॥
तलमध्यविशालं तु भूताङ्गुलमुदाहृतम् ।
पादाङ्गुष्ठसमायामं चतुर्मात्रमुदाहृतम् ॥ ३६ ॥
तस्याग्राद्गुल्फमध्यन्तं सार्धद्वादशमात्रकम् ।
अनामिकास्तु(या)दीर्घं तु त्रयस्त्रिंशद्यवं भवेत् ॥ ३७ ॥

मध्याङ्गुलं तु तत्तुल्यं वेदांशं तु तदाननम् ।
कनिष्ठायास्तु दीर्घं तु सार्धोनं द्व्यङ्गुलं भवेत् ॥ ३८ ॥
सप्ताष्टनववर्षम(याम)न्वत्रयोदशयवं क्रमात् ।
कनिष्ठाद्यङ्गुलानां तु विस्तारः प्रविधीयते ॥ ३९ ॥
अग्रमूलसमं प्रोक्तं विस्तारं तु त्रिभाजिते ।
द्वया(द्वि)भागं नखविस्तारं तत्तुल्यायतवर्तुलम् ॥ ४० ॥
तलाग्राङ्गुष्ठमूले तु द्विमात्रं तु घनं भवेत् ।
कनिष्ठायास्तु मूले तु घनं नवयवं भवेत् ॥ ४१ ॥
अक्षात्पार्ष्ण्यन्तरं भागं पार्ष्ण्युत्सेधं च तत्समम् ।
म(वृ)ष्ठमण्डलविस्तारं पादोनं नवमात्रकम् ॥ ४२ ॥
वक्षःस्थले परे व्यासं पञ्चत्रिंशतिमात्रकम् ।
अक्षयोरन्तरं प्रोक्तं चतुर्विंशतिमात्रकम् ॥ ४३ ॥
अत्रानुक्तं तु यत्सर्वमुत्तमं दशतालवत् ।
येषां लक्षणमाख्यातं तेषामाकृतिः पूर्ववत् ॥ ४४ ॥

इति काश्यपशिल्पे दशतालं नाम द्विपञ्चाशत्तमः पटलः ।

---

॥ अथ त्रिपञ्चाशत्तमः पटलः ॥

---

नवतालं दशतालोक्तं (अथोक्तं नवतालं तु) शृणुध्वैकाग्रमानसः ।
वसवश्चाष्टमूर्तीश्च विधे(धे)शाद्दिक्पालकान् ॥ १ ॥
अन्याश्च देवताश्चैव नवतालोत्तमं कुरु ।
सद्व्यष्टशतं भागं बेरमाने विभाजिते ॥ २ ॥
उष्णीषं चैकभागेन के(के)शान्तं तु गुणाङ्गुलम् ।
केशान्तादक्षिसूत्रान्तं वेदमात्रं विधीयते ॥ ३ ॥
तस्मादापृष्ठमीयान्तं वेदांशं तु पुटार्धकम् ।
षण्मात्रं तु वेदांशं भान्तेषं हृदयावधि ॥ ४ ॥
हृदयान्नाभिसीमान्तं तथा द्वादशमात्रकम् ।
नाभ्यादिमेढ्रमूलान्तं भानुमात्रं विधीयते ॥ ५ ॥

ऊरुदीर्घं चतुर्विंशदंशं ता(जा)नुयुगांशकम् ।
जङ्घायादि चोरुतुल्यं स्याद्वेदांशं च रसोदयम् ॥ ६ ॥
हिक्काधो शङ्कुदीर्घं स्याच्चतुर्विंशतिभागया(तः) ।
भि(त)श्रवा(वां)स्यंश(शं)प्रकोष्ठं स्याद्दशांशं तु तलायतम् ॥ ७ ॥
तस्मान्मध्याङ्गुलायामं पडङ्गुलमुदाहृतम् ।
कन्यसं दशतालोक्तं मार्गेण शेषमाचरेत् ॥ ८ ॥
तस्मादवयवार्थं च प्रत्येकमेवमाचरेत् ।
मानमेवं समाख्यातं लक्षणं कथितं पुरा ॥ ९ ॥

इति काश्यपशिल्पे उत्तमं नवतालं नाम त्रिपञ्चाशत्तमः पटलः ।

---

॥ अथ चतुःपञ्चाशत्तमः पटलः ॥

---

मध्यमं नवतालं तु वक्ष्ये संक्षेपतः क्रमात् ।
यक्षाप्सरोगणाश्चैव असमूर्तिमरुद्गणाः ॥ १ ॥
मध्यमं नवतालेन कर्तव्यं द्विजसत्तम ।
अष्टोत्तरशतांशं तु प्रतिमोच्चं विभाजिते ॥ २ ॥
उष्णीषं व्योमभागेन केशं पादोनतालकम् ।
केशान्तान्नेत्रसूत्रान्तं चतुर्भागयवोनितम् ॥ ३ ॥
पुटान्तं चैव तत्तुल्यमाननं च तथा भवेत् ।
पादोनचतुरंशं तु ग्रीवामानमुदाहृतम् ॥ ४ ॥
भान्वंशाग्नियवोनं तु हिक्कादाहृदयावधि ।
नाभ्यन्तं चैव तत्तुल्यं मेढ्रमूलान्तकं तथा ॥ ५ ॥
पादाधिकगुणोपेतं विंशांशं चोरुदीर्घकम् ।
जानुग्रीवसमं तुङ्गं जङ्घा चोरुसमा भवेत् ॥ ६ ॥
जानुतुल्यतलोपेतं बाहुश्चोरुसमो भवेत् ।
सप्तदशाङ्गुलं प्रोक्तं प्रकोष्ठस्य तु दीर्घकम् ॥ ७ ॥

पर्दशं च यवोनं तु तु(त)लायामं करस्य तु ।
तत्समं मध्यमायामं शेषं युक्त्या समाचरेत् ॥ ८ ॥

इति काश्यपशिल्पे मध्यमनवतालकं नाम चतुःपञ्चाशत्तमः पटलः ।

---

॥ अथ पञ्चपञ्चाशत्तमः पटलः ॥

---

अधमं नवतालस्य लक्षणं वक्ष्यतेऽधुना ।
विद्याधरगणश्चैव असुराश्च तथैव च ॥ १ ॥
पितरः सिद्धगन्धर्वा नवतालोक्तेन तु ।
सवेदशतभागं तु कौतुकोर्ध्वं विभाजिते ॥ २ ॥
उष्णीषोर्ध्वं त्रिपादं स्याच्छेषं सार्धत्रिभागया(तः) ।
केशान्तान्नेत्रसूत्रान्तं पादोनचतुरंशकम् ॥ ३ ॥
तस्मान्नेत्राद्धिहन्वन्तमाननं स्यात्तथोदितम् ।
भवेद्द्व्यङ्गुलं ग्रीवामानमित्यभिधीयते ॥ ४ ॥
ग्रीवापादतलं जानुतुल्यं जङ्घोरुसदृशम् ।
बाहु(हो)श्चोरुसमं दैर्घ्यं प्रकोष्ठे षोडशाङ्गुलम् ॥ ५ ॥
तलदीर्घं तु भूतांशं तत्समं मध्यमाङ्गुलम् ।
शेषं युक्त्यं (क्त्या) तु कर्तव्यं सर्वमङ्गं विधीयते ॥ ६ ॥

इति काश्यपशिल्पेऽधमनवतालं नाम पञ्चपञ्चाशत्तमः पटलः ।

---

॥ अथ षट्पञ्चाशत्तमः पटलः ॥

---

अथ वक्ष्ये विशेषेण अष्टतालं विधीयते ।
ऋतांशं मध्यबिम्बोष्णमुष्णीषं तु शिवांशकम् ॥ १ ॥
सार्धद्व्यंशं तु केशान्तं केशान्तात्त्वर्णसीमकम् ।
षट्सप्तभागं स्यात्तन्त्रिभागविभाजिते ॥ २ ॥

शिवांशं त्वक्षिसूत्रान्तं पुटान्तं चैव तत्समम् ।
पुटार्धं त्वन्तके शेषं सार्धत्र्यंशं गलोदयम् ॥ ३ ॥
हिक्कादिहृदयान्तं तु रुद्रांशं द्वितयोन्नतम् ।
नाभ्यन्तं चैव तुल्यांशं मेढ्रमूलान्तकं तथा ॥ ४ ॥
सार्धत्रिसप्तभागं तु ऊरुदीर्घमुदाहृतम् ।
जानुकण्ठसमं तुङ्गं जङ्घा चोरुसमा भवेत् ॥ ५ ॥
जानुतुल्यं तलोत्सेधं बाहुश्चोरुसमो यतः ।
प्रकोष्ठं तु कलांशं स्यात्सार्धं भूताङ्गुलं तथा ॥ ६ ॥
तत्समं मध्यमाङ्गुल्यं शेषं मागपरोदितम् ।
अत्रानुक्तं तु यत्सर्वं कन्यसं दशतालवत् ॥ ७ ॥

इति काश्यपशिल्पेऽष्टतालं नाम षट्पञ्चाशत्तमः पटलः ।

---

## ॥ अथ सप्तपञ्चाशत्तम पटल ॥

---

अथ वक्ष्ये विशेषेण सप्ततालविधिं परम् ।
पिशाचप्रतिमोत्सेधं साष्टाशीत्यं(शीत्यं)शकं भजेत् ॥ १ ॥
ऊर्ध्वीपर्यर्धभागेन केशान्तं शि(शी)र्षभागकम(कः) ।
सार्धद्व्यंशं तु नेत्रान्तं सार्धाग्न्यंशं पुटान्तकम् ॥ २ ॥
चिबुकान्तं च तत्तुल्यं वेदांशं च गलोदयम् ।
स्तनान्तं सप्तभागं तु रुद्रांशं नाभिसीमकम् ॥ ३ ॥
तथा वै योनिमूलान्तं त्रिंशांशं चोरुदीर्घकम् ।
जानुमानं द्विभागेन जङ्घा चोरुसमा भवेत् ॥ ४ ॥
चरणोर्ध्वं द्विभागेन मन्वंशं तु तलोन्नतम् ।
ऊरुदीर्घसमं बाहुप्रकोष्ठान्तं त्रिपञ्चकम् ॥ ५ ॥
तलायामं तु भूतांशं वेदांशं तस्य विस्तरम् ।
तत्तलायामसदृशं मध्यमाङ्गुलिदीर्घकम् ॥ ६ ॥

शेषं प्रागुदिते देशे ह्रासं कुर्यादतीन्द्रियम् ।
सप्ततालं समाख्यातं शेषं प्रागपरोदितम् ॥ ७ ॥

इति काश्यपशिल्पे सप्ततालं नाम सप्तपञ्चाशत्तमः पटलः ।

---

॥ अथाष्टपञ्चाशत्तमः पटलः ॥

---

अथातो नागरादीनां लिङ्गानां प(पी)ठलक्षणम् ।
आदौ तु वक्ष्यते विप्र सकलान्तं ततो विदुः ॥ १ ॥
शैलजे शिलया पीठं सुधर्येष्टकयाऽपि वा ।
दारुजे दारुजना(जं वाऽ)थ इति(ष्ट)काश्मयमेव वा ॥ २ ॥
रत्नलोहजलिङ्गानां सयोनिर्लोहजं तु वा ।
लिङ्गोदयसमं पीठं विस्तारेणोत्तमोत्तमम् ॥ ३ ॥
पूजांशोच्चसमं पीठं तारं कन्यसमुच्यते ।
तयोर्मध्येऽष्टभागं तु उत्तमान(दि) त्रयत्रयम् ॥ ४ ॥
पीठव्यासं त्रिधा भज्य द्विभागं चोत्समो(त्रो)न्नतम् ।
व्यासार्धमधमोत्सेधं तयोर्मध्येऽष्टभाजिते ॥ ५ ॥
नवधा पीठतुङ्गं च उत्तमादि त्रयत्रयम् ।
क्रमेण कथितं विप्र नागरस्त्वेवमुच्यते ॥ ६ ॥
लिङ्गस्योच्चसमं व्यासं श्रेष्ठमध्यकनिष्ठकम् ।
तयोर्मध्येऽष्टभागे तु नवधा पीठविस्तृतम् ॥ ७ ॥
नवधा विस्तृतं ख्यातं ब्रह्मविष्ण्वंशयोरपि ।
उदयं वसुधा भज्य द्विभागं वा यसां(थां)शकम् ॥ ८ ॥
एकांशं वा विशेषेण स्थलांशे तु निवेशयेत् ।
शेषं पीठोदयं ख्यातमेवं द्राविडमुच्यते ॥ ९ ॥
पूजांशस्य परीणाहसमं श्रेष्ठं विशालकम् ।
परीणाहे कलांशे तु भान्वंशमधमं त्विति ॥ १० ॥
तयोर्मध्येऽष्टभागे तु नवधा पीठविस्तृतम् ।
अथवा लिङ्गविष्कम्भं चतुरस्रकृते सति ॥ ११ ॥

तत्कर्णद्विगुणं वाऽथ सार्धद्विगुणमेव वा ।
त्रिगुणं च विशालं तु पीठानां तु विशेषतः ॥ १२ ॥
गर्भगेहं त्रिभागैकं चतुर्भागैकमेव वा ।
पीठव्यासं समाख्यातं विष्णुभागसमोन्नतम् ॥ १३ ॥
सामान्यं नागरादीनां लिङ्गानां पीठिकासमे ।
उपानवाह्यविस्तारं सर्वेषां तु विधीयते ॥ १४ ॥
तदष्टनवदशांशहीनं वाऽग्रविशालकम् ।
विष्णुभागसमोत्तुङ्गं सपादं सार्धमेव वा ॥ १५ ॥
सामान्यपीठिकानां तु नागराद्यासमुन्नतम् ।
लिङ्गानां सकलानां तु सामान्यं पीठलक्षणम् ॥ १६ ॥
फलोदये नवांशे तु व्योमांशं कन्यसोदयम् ।
गुणांशं श्रेष्ठमानं तु तयोर्मध्येऽष्टभाजिते ॥ १७ ॥
नवधा पीठतुङ्गं तु तस्य विस्तारमुच्यते ।
पीठतुङ्गसमं व्यासमधमं पीठमुच्यते ॥ १८ ॥
द्विगुणं चोत्तमं व्यासात्तयोर्मध्येऽष्टभाजिते ।
नवधा विस्तृतं ख्यातं सकलानां विशेषतः ॥ १९ ॥
पिण्डिका गोमुखोपेता लिङ्गानां तु विधीयते ।
गोमुखाकृति पीठं स्यात्सकलानां विशेषतः ॥ २० ॥
समाश्रं सम्वृत्तं वा लिङ्गानां तु विधीयते ।
आयताश्राय(प)वृत्तं वा भी(म)लिमानं समं तु वा ॥ २१ ॥
पद्मपीठं भद्रपीठं वेदिकोपरि मण्डलम् ।
पीठं चतुर्विधं ख्यातमलंकारं द्विजोत्तम ॥ २२ ॥
कलांशं विभजेत्तुङ्गमुपानोच्चं द्विभागया(तः) ।
भूतांशोम्बुजयो पद्मं कण्ठं पादुकसदृशम् ॥ २३ ॥
ऊर्ध्वपद्मं तु वेदांशं द्विभागं पट्टिकोदयम् ।
शिवांशं प्रीतवायुश्च(प्रतिभागं च)षोडशदलसंयुतम् ॥ २४ ।
क्षुद्रं दलं तयोर्मध्ये अष्टौ वाऽथ महादलम् ।
अर्धाङ्गुलं दलाग्रोच्चं मानाङ्गुलसमावृतम् ॥ २५ ॥

लिङ्गदेहाद्गुलोर्ध्वं वा दलाग्राणां समुच्छ्रयम् ।
पीठतारत्रिभागैकं गोमुखं दीर्घमुच्यते ॥ २६ ॥
तद्दीर्घसदृशं स्यात्तं मूलव्यासमुदाहृतम् ।
मूलतारत्रिभागैकं तस्याग्रे विस्तृतं भवेत् ॥ २७ ॥
मूलादग्रं क्रमात्क्षीणं तद्घनं व्याससदृशम् ।
त्रिपादं वाऽर्धपादोनं वृत्तिभागांश एव वा ॥ २८ ॥
व्यासत्रिभागभागं तु शिलामार्गविशालकम् ।
पट्टिकोर्ध्वसमं निम्नं तस्मार्द्धानं तु कन्यसम् ॥ २९ ॥
उपानाद्यङ्गवेशं च नीव्रं सौन्दर्यमाचरेत् ।
अधिष्ठानं भवेद्देशनीव्रं वा परिकल्पयेत् ॥ ३० ॥
पद्मपीठं समाख्यातं भद्रपीठमथोच्यते ।
कृत्वा तु षोडशोत्सेधं भागेनोपानमुच्यते ॥ ३१ ॥
जगत्युच्चं तु वेदांशं गुणांशं कुमुदोच्च(च्छ्र)यम् ।
शिवांशं पट्टिकामानं कण्ठमानं गुणांशकम् ॥ ३२ ॥
तदूर्ध्वे पद्ममेकांशं द्विभागं पट्टिका भवेत् ।
शस्यांशं घृतवारि स्याद्भद्रपीठमिदं परम् ॥ ३३ ॥
पद्मोच्चं तु फलांशे तु द्विभागं पादुकोदयम् ।
गुणांशं जगतीमानं कुमुदोच्चं तु तत्समम् ॥ ३४ ॥
व्योमांशं पद्ममानं तु कण्ठमानं द्विभागया(तः) ।
तस्योर्ध्वे कम्पमेकांशं गुणांशं पट्टिका भवेत् ॥ ३५ ॥
एकांशं घृतवारि स्याद्वेदीभद्रं तथोच्यते ।
भद्रमेवं समाख्यातं वेदपीठमथोपरि ॥ ३६ ॥
त्रयोदशांशं पीठोच्चं द्विभागं पादुकोदयम् ।
तदूर्ध्वे पद्मकं तुल्यं कम्पमंशेन कारयेत् ॥ ३७ ॥
द्विभागं कम्पमानं तु ऊर्ध्वकम्पं शिवांशकम् ।
तदूर्ध्वपद्मं पक्षांशं पट्टकं चैव तत्समम् ॥ ३८ ॥
घृतवार्युदयं व्योमभागेन परिकल्पयेत् ।
अथोदये तु वस्त्वंशे उपानोच्चं शिवांशकम् ॥ ३९ ॥

एकांशं घृतवारि स्याच्छेषं वेदियुगांशक(य)म् ।
वेदिकापीठमाख्यातं तदेवांशांशपट्टिका ॥ ४० ॥
कर्तव्यं तु त्रिधैवाह्नि वेदिकापीठमुच्यते ।
पद्मं वा भद्रपीठं वा वृत्तं तु परिमण्डलम् ॥ ४१ ॥
अधिष्ठानं तु यावद्वा पीठाङ्गं परिकल्पयेत् ।
उपपीठाङ्गवद्वन्यासतस्त्वात्रा प्रकीर्तितम् ॥ ४२ ॥
जयदं चतुरश्रन्तं योन्याकारं प्रजाकरम् ।
शान्तिः स्याद्वतुराकारे गुणाश्रं रिपुनाशनम् ॥ ४३ ॥
वर्धमानं तु वृत्तं स्यात्पञ्चाश्रं पुष्टितुष्टिदम् ।
षट्कोणं रोगनाशं स्याद्(टे)वद्(मे)व क्रमाद्विदुः ॥ ४४ ॥
एष्वाकारेषु पीठाग्रात्प्रागुक्तविधिना कुरु ।
द्रव्ये तुष्टेऽष्टपीठे तु जीर्णे धारे द्विजोत्तम ॥ ४५ ॥
पूर्वाऽऽकृतिर्यथा कार्यं तथा कुर्यात्पुनः पुनः ।
पश्चादन्याकृतातीतकर्तव्यं कर्तृनाशनम् ॥ ४६ ॥
तस्मात्सर्वप्रयत्नेन पूर्वाकारं प्रकल्पयेत् ।
सापेक्षं यत्तु तत्तारान्तपादं सार्धं एव वा ॥ ४७ ॥
आजयं सुखभद्रं वा भद्रं चोपसभद्रवत् ।
लिङ्गानां सायतं पीठं न कुर्यात्तु कदाचन ॥ ४८ ॥
समाश्रं समवृत्तं च सायतं वा तदन्यकम् ।
सर्वं च सक्रमोपेतं कर्तव्यं संपदां पदम् ॥ ४९ ॥
पिण्डिकालक्षणं प्रोक्तं पादशैलोदयं शृणु ॥ ५० ॥

इति काश्यपशिल्पे पिण्डिकालक्षणं नामाष्टपञ्चाशत्तमः पटलः ।

---

॥ अथैकोनषष्टितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण पादशैलादिलक्षणम् ।
लिङ्गतारत्रयं व्यासं तत्र पादसमोन्नतम् ॥ १ ॥
श्रेष्ठमध्यकनिष्ठोर्ध्वं तयोर्मध्येऽष्टभाजिते ।
तुङ्गं तु नवधा प्रोक्तं पादांशं (वे)सरोदितम् ॥ २ ॥

लिङ्गव्यासद्वयाधिक्यं व्यासं तद्गुणभाजिते ।
कु(ए)कोशमवटे निम्नं लिङ्गमूलवटाकृति ॥ ३ ॥
नवरत्नप्रमाणेन नवकोष्ठं प्रकल्पयेत् ।
अन्यतः समतां कुर्यादाधाराख्यशिलासह ॥ ४ ॥
तदस्मात्पीठसीमान्तं नन्द्यावर्तशिलोदयम् ।
लिङ्गपीठसमानं वा एकद्वित्र्यङ्गुलाधिकम् ॥ ५ ॥
नान्यवृत्तशिलाव्यासं नागरेषु विधीयते ।
पीठव्यासान्यके वाऽथ द्राविडाक्षाधिकाधिकम् ॥ ६ ॥
लिङ्गव्यासेन षाडांशे पीठांशैकैकवर्धनात् ।
नन्द्यावर्तशिलाव्यासं नवधा वेसरोदितम् ॥ ७ ॥
लिङ्गयोपरितः कल्प्यं चत्वारश्च(त्वरं च)तुरश्रकम् ।
चतुरश्रोक्ततायामं तेषां मानमुदाहृतम् ॥ ८ ॥
उत्तराग्रं तु प्राग्भागे प्रागग्रं दक्षिणे न्यसेत् ।
पश्चिमे चोत्तराग्रं चेत् प्रागग्रं चोत्तरे न्यसेत् ॥ ९ ॥
शांकरे प्रथमस्याग्रमनलाग्रे द्वितीयकम् ।
तृतीयं मरुतो वायुमूलं च चतुर्थकम् ॥ १० ॥
नन्द्यावर्तशिलास्त्वेवं योज्यं कल्पदलोदके ।
तदूर्ध्वेऽष्टबन्धनं कुर्यात्स्थापयेत्पिण्डिकां बुधः ॥ ११ ॥
सुधया वज्रबन्धं वाऽऽलिप्य पीठं प्रयोजयेत् ।
एकांशं चोत्तमं पीठं द्वाभ्यां वै मध्यविष्टरम् ॥ १२ ॥
त्रिचतुष्पञ्चभिर्वाऽथ कन्यसं पीठमुच्यते ।
पीठानां तु तदूर्ध्वं तु मध्ये(ध्ये)केन समाचरेत् ॥ १३ ॥
बहुवस्तुदलाधस्तात्पीठसंधेर्गलैर्गुरुः ।
गलाधस्ताद्वृषौ द्वयश्रौ तत्पूर्वे वाऽपरे न्यसेत् ॥ १४ ॥
त्र्यश्रेष्टाश्रयं त्वेकं वामेऽवामे परे द्वयम् ।
चत्वारं चेद्द्रोणयुग्मं चतुरश्रं प्रकल्पयेत् ॥ १५ ॥
पञ्चपट्टं चैव कर्तव्यं पिण्डिकालक्षणान्वितम् ।
सुधयाऽष्टबन्धनाद्वा निश्छिद्रं सुदृढं कुरु ॥ १६ ॥
इष्टकाभिः शिलाभिर्वा दृढं स्यात्सुधयाऽन्वितम् ।
लोहजं राजतं चैव यथावद्दृढता भवेत् ॥ १७ ॥

सर्वेषां बन्धनं चाष्टबन्धमित्यभिधीयते ।
विष्णुभागोर्ध्वसीमं च पिण्डिकोर्ध्वे समुन्नयेत् ॥ १८ ॥
नतोन्नतं न कर्तव्यं कृतं चेत्कर्तृनाशनम् ।
लिङ्गस्य मुखनिर्माणं लक्षणोद्धारमुच्यते ॥ १९ ॥
प्रासादस्याग्रतो वाऽपि वांशके दक्षिणेऽपि वा ।
हस्तमानं समुत्सेधं दर्पणोदरसंनिभम् ॥ २० ॥
गोमयालेपनं कृत्वा पिण्डीं चूर्णैरलंकृताम् ।
नानाधूपैश्च दीपैश्च नानापुष्पैरलंकृताम् ॥ २१ ॥
शालिभिः स्थण्डिलं कुर्याद्वेदिकायां विशेषतः ।
तण्डुलैश्च तिलैर्दर्भैर्लाजैः पुष्पैरलंकृतैः ॥ २२ ॥
अधमत्रयलिङ्गानामेवं मण्डपमाचरेत् ।
शेषाणां लिङ्गदीर्घे स्याद्यथावेदिकविस्तृतम् ॥ २३ ॥
तेनैव त्रिगुणव्यासं मण्डपस्य विशालकम् ।
अन्यत्सर्वमलंकारं प्रागिवेव समाचरेत् ॥ २४ ॥
विध्यूर्ध्वे श्वयते(स्थपति)र्लिङ्गं प्राक्छिरस्थोर्ध्ववक्त्रकम् ।
परिवेष्ट्य घटानष्टौ सकूर्चान्सावधानवान् ॥ २५ ॥
ससूत्रान्सवस्त्राढ्यान् गन्धतोयेन पूरयेत् ।
सावधानान्सभी(शो)भाग्रा(वधान्)लोकपालादिदैवतान् ॥ २६ ॥
गन्धैः पुष्पैश्च धूपैश्चैवार्चयेत्स्वस्वनामतः ।
लिङ्गमूलस्य वामे तु पिण्डिकाश्च निधापयेत् ॥ २७ ॥
रक्तवस्त्रादिनाऽऽवेष्ट्य लिङ्गपीठे समर्चयेत् ।
वेदिकायां सत्त्वयेन्द्रे कुण्डे वा स्थण्डिले कुरु ॥ २८ ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
ब्रह्मवृक्षसमिद्भिश्च होमं कृत्वा विधानत. ॥ २९ ॥
आपोहिष्ठादिमन्त्रेण रुद्रं विष्णुश्च मन्त्रतः ।
ब्रह्म जज्ञानमन्त्रेण आज्य[त]न्त्रं समाचरेत् ॥ ३० ॥
चरुहोममघोरेण प्रत्यगष्टादशाहुतीः ।
तथा जागरणं रात्रौ प्रभाते सुमुहूर्तके ॥ ३१ ॥
देशिकस्तु शुचिर्भूत्वा सकलीकृतविग्रहः ।
सितवस्त्रोत्तरीयाढ्यः सितमाल्यानुलेपनः ॥ ३२ ॥

सितयज्ञोपवीतश्च शिवद्विजकुलोद्भवः ।
स्थपतिश्च शुचिर्भूत्वा यन्त्रसूत्रोत्तरान्वितः ॥ ३३ ॥
प्राग्वदग्निं समभ्यर्च्य स्विष्टपूर्णाहुतिं यजेत् ।
प्रतिसरं बन्धयेन्मात्रं लिङ्गपीठे द्विजोत्तम ॥ ३४ ॥
स्वर्णरजतकार्पाससूत्रैर्वा हृदयेन तु ।
प्रभाते सुमुहूर्ते तु लक्षणोद्धारमाचरेत् ॥ ३५ ॥
पायसं घृतसंयुक्तं शिरःस्थाने बलिं हरेत् ।
रत्नशान्तिं परित्यज्य गन्धाद्यैरर्चयेद्धृतम् ॥ ३६ ॥
रत्नेन धातुना लिङ्गमध्ये सूत्रं तु पातयेत् ।
मुखभागस्य मध्ये तु नालं कुर्यात्सलक्षणम् ॥ ३७ ॥
लिङ्गमानेन मतिमान् स्तूपिविस्तारमाचरेद् ।
रुद्रभागोदयं गृह्य शिरसो वर्तनान्वितम् ॥ ३८ ॥
सवेदविंशति[हस्तं]कृत्वैकांशं तु विस्तृतम् ।
अङ्गुलं बहुधा भज्य एकांशं यवमुच्यते ॥ ३९ ॥
उत्तमोत्तमलिङ्गानां सूत्रं पञ्चयवं ततः ।
शेषाणामपि लिङ्गानां यथार्थं प्रतिह्रासयेत् ॥ ४० ॥
अधमाधमलिङ्गं तु सूत्रतारं यवं भवेत् ।
सूत्रविस्तारमेवं स्यात्स्व्या(खा)तं चैव तु तत्समम् ॥ ४१ ॥
लक्षणं शिरसि व्याधिर्ललाटे मरणं भवेत् ।
नेत्रे कृते त्वपस्मारमास्ये ध्यात्वा विनाशनम् ॥ ४२ ॥
चिबुके बन्धुनाशः स्यात्कण्ठे स्कन्धविनाशनम् ।
स्तनदेशे सुतं हन्ति तस्मादेतानि वर्जयेत् ॥ ४३ ॥
शिरसा सह रुद्रांशं गुणांशं विभजेत्समम् ।
एकांशं मूर्धतो[वर्ज्यस्त]नादूर्ध्वे तदंशके ॥ ४४ ॥
तदन्तरांशयोर्विप्र लक्षणोद्धारमाचरेत् ।
पद्मं वा मुकुलाकारं लिङ्गाकारं यथोचितम् ॥ ४५ ॥
द्विजानामतिवृद्ध्यर्थं नृपाणां च जयावहम् ।
खड्गमत्स्याञ्चिकाकारं कुंजराक्षमिवाकृति ॥ ४६ ॥
शङ्खाभश्च चतुर्भेदं नृपाणामपि हृद्धये ।
कराञ्जलिसमाकारं गोकर्णाकृति वा भवेत् ॥ ४७ ॥

वैश्यानां च त्रिकोणं च शूलवृत्तायतं तथा ।
शूद्रवृद्धिकरं त्रीणि सूत्रं गृह्य तु लक्षणम् ॥ ४८ ॥
लक्षणोद्धरणोत्थांशं रुद्रभागविभाजिते ।
मुकुलोदयमेकांशं तद्व्यासं चापि तत्समम् ॥ ४९ ॥
तन्मूलानां तु दीर्घत्वं नवभागमुदाहृतम् ।
तन्नालमेकसूत्रं स्यात्सूत्रद्वित्रियुगं तु वा ॥ ५० ॥
सूत्रत(त्र)ययुतं चोक्तं सूत्रान्तरयवत्रयम् ।
यवद्वयान्तरं वाऽथ नालान्तरं द्विजोत्तम ॥ ५१ ॥
नालमूलेन तस्याग्रे सीमासूत्रे तथा लिखेत् ।
तन्नालं चैकसूत्रं स्याल्लिङ्गमध्ये विशेषतः ॥ ५२ ॥
सूत्रोक्तव्यासखातं च नालायामं च कल्पयेत् ।
नालाधस्तात्तु व्योमांशं त्यजेद्विर्णवशाकोपरि ॥ ५३ ॥
मणिरेखा ततः कार्या मुकुलस्फुङ्ग(फुल्ल)नाकृति ।
रेखात्रयं तथा विप्र पद्ममूलं समं तु वा ॥ ५४ ॥
पद्मतारत्रयैकांशं वेदांशेऽग्न्यंश एव वा ।
पञ्चांशं[वा]युगांशं वा पद्मनालार्धमेव वा ॥ ५५ ॥
मुकुलमूलेऽन्तरं ह्येवं नालमूलेऽन्तरं शृणु ।
नालायामसमं पश्चाद्द्वित्रिपादयुगांशके ॥ ५६ ॥
त्रिभागं पञ्चभागं तु वेध(ट)भागमथापि वा ।
नालमूलसमत्वे वा मणिरेखाद्वयोत्तरम् ॥ ५७ ॥
मूलाग्रं क्रमात्क्षीणं मणिरेखान्तरं भवेत् ।
तन्तुमूले समे तिर्यग्गत्वा पृष्ठे तु संधयेत् ॥ ५८ ॥
मणिरेखाव्यासखातं चालिङ्गं स्यात्रि लिङ्गवत् ।
मणिरेखालम्बि नालं दीर्घास्तं सममेव वा ॥ ५९ ॥
तस्माटामूलपर्यन्तं वसुभागविभाजिते ।
मणि(णे)रालम्बनं विप्र नवधा परिकीर्तितम् ॥ ६० ॥
सर्वेषु लक्षणोद्धारे श्रीर्हिर्यान्मणिरेखिका ।
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु ॥ ६१ ॥

लक्षणोद्धरणार्धांशं दशभागविभाजिते ।
एकांशं मुकुलोच्चं तु नवांशं नालदीर्घकम् ॥ ६२ ॥
शेषं पूर्ववदुद्दिष्टं चतुर्थं लक्षणं शृणु ।
लक्षणांशं तु नवधा भाज्यैकांशं तु कुण्डकम् ॥ ६३ ॥
सप्तांशे नालदीर्घं तु शेषं पूर्ववदेव हि ।
चतुर्थं लक्षणं प्रोक्तं पञ्चमं लक्षणं शृणु ॥ ६४ ॥
लक्षांशं वसुधा भज्य व्योमांशं मुकुलोदयम् ।
षडंशे नालदीर्घं तु नालाधस्ताच्छिवांशकम् ॥ ६५ ॥
तदेव सप्तभागं तु नालदीर्घमुदाहृतम् ।
शेषं प्रागिव कर्तव्यं सप्तमं लक्षणं शृणु ॥ ६६ ॥
लक्षार्धांशे तु सप्तांशे शश्यंशं मुकुलोदयम् ।
भूतांशं नालदीर्घं तु शेषं पूर्ववदेव हि ॥ ६७ ॥
षडंशं वाऽथ तन्नालदीर्घं शेषं तु प्रागिव ।
एवमष्टविधं ख्यातं नालायामं द्विजोत्तम ॥ ६८ ॥
अग्राकारेऽब्जमुकुलाद्भानुसंख्या तु सुव्रत ।
यथेष्टनालं कर्तव्यं वसुसंख्या तु देशिकः ॥ ६९ ॥
दृढसूत्रं प्रकर्तव्यं लिङ्गे धूक्तप्रमाणतः ।
स्थापयेत्तु ततो लिङ्गं प्रागग्रं दारुविष्टरे ॥ ७० ॥
लक्षयेत्पिण्डिकावक्त्रं लिङ्गं सौम्ये निधापयेत् ।
स्थापितः कलशैः स्नाप्य लिङ्गपीठे हृदा बुधः ॥ ७१ ॥
गन्धोदकैः [स्तु सं]स्नाप्य गन्धपुष्पादिभिर्यजेत् ।
लम्बकूर्चसमायुक्तं सर्वालंकारसंयुतम् ॥ ७२ ॥
र(थे वा शि)बिकायां वा ग्रामं कृत्वा प्रदक्षिणम् ।
ततो जलाशयं प्राप्य जलाधिवासनं कुरु ॥ ७३ ॥
लक्षणोद्धारमाख्यातं प्रतिमालक्षणं शृणु ॥ ७४ ॥

इति काश्यपशिल्पे पीठलक्षणोद्धारो नामैकोनषष्टितमः पटलः ।

॥ अथ षष्टितमः पटलः ॥ 20364

अथ शैवादनन्तरं [स्याद्]विष्णुस्थापने विधिः ।
नगरे पश्चिमे वाऽपि मध्ये वा उत्तमोत्तमम् ॥ १ ॥
मध्यादिकलिकान्तं वा अवतारं तु शिक्षितम् ।
तत्पदे वास्तुदेवांश्च स्थापयेच्छिल्पिकोत्तमः ॥ २ ॥
स्वर्ग तु विष्णुपुरतो विष्णुकुङ्कममथापि वा ।
अञ्जलिं हस्तसंयुक्तं पूर्वे वा अग्रतस्तथा ॥ ३ ॥
आलयेऽर[ण्यके] वाऽपि तटाके पुण्यतीर्थके ।
ग्रामे वा वास्तुमध्ये वा भवेत्पूर्वं उदङ्मुखे ॥ ४ ॥
वरुणे वैश्यभूमिं च यममिन्द्रं तु स्थापयेत् ।
पिशाना(चा)ग्नौ पदे स्थाप्य नैर्ऋतिं वायुमर्चयेत् ॥ ५ ॥
अथ वक्ष्ये विशेषेण सकलस्थानमुत्तमम् ।
शांकरे वृत्तमूर्तिस्तु आग्नेय्यां वृषवाहनम् ॥ ६ ॥
उमास्कन्द[यु]तं याम्ये नैर्ऋत्यां परिकल्पयेत् ।
कङ्कालं वायुदिग्भागे भिक्षाटनं जयान्तिके ॥ ७ ॥
सुखासनं तु सत्यांशे विध्यंशे त्रिपुरान्तकम् ।
सुग्रीवे हरिरर्धं स्याद्गन्धर्वे चन्द्रशेखरम् ॥ ८ ॥
शेषांशं....... मुख्ये कालारिमूर्तिकम् । (?)
उदिते त्वर्धनारी स्यादैन्द्रे कल्याणसंयुतम् ॥ ९ ॥
क्षेत्रपालस्तु पर्जन्ये याम्ये वा दक्षिणेश्वरम् ।
वारुण्ये लिङ्गमुद्भूतं सौम्ये तु गजहारिणम् ॥ १० ॥
इत्यूर्ध्वमालयं प्रोक्तमन्तरालस्य कल्पयेत् ।
मूलमध्ये तु संवीक्ष्य सकलं स्थापनं कुरु ॥ ११ ॥
प्राकारेऽष्टचतुर्दिक्षु द्वारशोभादि कल्पयेत् ।
प्राकारान्ताति(नि) मध्ये च दीर्घमध्ये च वेशनम् ॥ १२ ॥
अथवा हर्म्यस्य मध्येन ह्येकमंशकम् ।(?)
प्रधानमारमेकं वा त्वग्रे वाचालकं द्विज ॥ १३ ॥

इति काश्यपशिल्पे सकलस्थापनविधिर्नाम षष्टितमः पटलः ।

॥ अथैकषष्टितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण सुखासनविधिं परम् ।
आसनं राजसं मात्रं भद्रपीठं [सुखा]सनम् ॥ १ ॥
वामाङ्घ्रिस्छादयेत्पीठे दक्षिणाङ्घ्रिस्तु लम्बयेत् ।
ऊर्ध्वभागोपरिष्टात्तु सार्धवेदाङ्गुलाधिकम् ॥ २ ॥
स्फिक्पिण्डमानमेतद्धि आसीनोर्ध्वे विशेषतः ।
आसने पूर्वकेशान्तं जान्वोर्वाक्षावसानकम् ॥ ३ ॥
जानूर्ध्वं पूर्वकेशान्तं जानोर्वा(नुवा)द्गुग्रीवास्यकम् ।
परहस्तंमणिबन्धं मध्यमं च समं भवेत् ॥ ४ ॥
आसीनेन स्वसूत्रेऽस्ति पूर्वसूत्रेऽधुना शृणु ।
मौलिमध्यं तु नासाग्रास्तनाभं नाभिमध्यमम् ॥ ५ ॥
वामाङ्घ्रिगुल्फमध्ये तु ब्रह्मसूत्रं प्रलम्बयेत् ।
सूत्राद्दक्षिणजान्वन्तमेकत्रिंशाङ्गुलं भवेत् ॥ ६ ॥
अथवा त्रिंशदङ्गुल्य एकोनविंशतोऽपि वा ।
सूत्रात्तदङ्घ्रिनलकाक्षान्तरं द्वादशाङ्गुलम् ॥ ७ ॥
त्रयोदशाङ्गुलं वाऽथ दशाङ्गुलमथापि वा ।
पीठं नादं प्रपाण्योरस्तु नीत्रं द्विऽपदङ्गुलं तु वा ॥ ८ ॥
तत्सूत्रान्मथये(ध्यमे)हस्ते मध्यरेखावसानकम् ।
चतुर्दशाङ्गुलं प्रोक्तमन्तरं तु द्विजोत्तम ॥
ऊरोर्द्दि मणिबन्धान्तं नीत्रं द्विऽपदङ्गुलं तु वा ॥ ९ ॥
कटकं सिंहकर्णं वा तत्रस्थं प्रविधीयते ।
तर्जन्यादिकनिष्ठान्तं तत्राङ्गुल्यस्तु वक्रगाः ॥ १० ॥
ईषद्वक्रं तदङ्गुष्ठमेवं स्यात्कटकाकृति ।
मध्यामध्यतलान्तं तु अर्धमर्धं त्वनामिका ॥ ११ ॥
वक्रं शेषाङ्गुलं प्राग्वत्सिंहकर्णमिदं परम् ।
द्विगासूत्रं समं कुर्यात्कर्तन्यागौ करे परे ॥ १२ ॥
वक्रावनामिकाङ्गुष्ठौ तन्मध्यावसानकौ ।
किंचिद्वक्रा कनिष्ठाऽपि शेषौ द्वौ तु ऋजुक्रियौ ॥ १३ ॥

कर्तव्याऽऽकृतिरेवं स्यात्लक्षणान्वितसुन्दरम् ।
कूर्परं श्रोणिपार्श्वे तु पञ्चपद्‌सप्तमाकृतिम् ॥ १४ ॥
कुक्षिमध्ये च नासाग्रे पूर्वसूत्रं तु संस्पृशेत् ।
मेढ्रमूलं तु वामाङ्घ्रि गुल्फमध्यं रसाङ्गुलम् ॥ १५ ॥
अथवा सप्तमात्रं तु पञ्चमात्रमथापि वा ।
नाभिमध्यं तु वामाङ्घ्रिनलिकाग्रं चतुर्दश ॥ १६ ॥
त्रयोदशाङ्गुलं वाऽथ मान्वङ्गुलमथापि वा ।
मौल्यग्रमध्यमात्सूत्रं द्व्यन्तरं मनुमातृ(त्र)कम् ॥ १७ ॥
सार्धत्रयोदशं वा [त्र]योदशाङ्गुलमेव वा ।
ऋजो(जु)गतं सुखासीनं प्रवालसदृशप्रभम् ॥ १८ ॥
त्रिनेत्रं सुप्रसन्नवदनं संपन्नं राजसं गुणम् ।
व्याघ्राजिनाम्बरोपेतं दुकूलवसनान्वितम् ॥ १९ ॥
कर्तरीपरहस्तौ द्वौ वाद्यं वाऽभ्यन्तरासनम् ।
दक्षिणे परशुं वामे कृष्णं चान्यवरद्वयम् ॥ २० ॥
अभयं दक्षिणं वामं कटकं सिंहकर्णवत् ।
वामे कर्णविशेषेण शङ्कपात्रमथापयेत् ॥ २१ ॥
त्रिचतुष्पञ्चमात्रं वा पञ्चमण्डलविस्तृतम् ।
कर्णनालघनं चैव त्रिगुणं पत्रविस्तृतम् ॥ २२ ॥
य(ए)वं पत्रघनं प्रोक्तं श्वेतमान्वादिमार्दवम् ।
दक्षिणे कर्णमेवं तु कुण्डलं सिंह एव वा ॥ २३ ॥
कुण्डलं व्याससतुङ्गं तु त्रिचतुष्पञ्चमात्रकम् ।
युक्त्या तत्कुण्डलं कृत्वा कर्णस्कन्धोपरि न्यसेत् ॥ २४ ॥
अथवा कर्णयोर्विप्र वृत्तकुण्डलकं न्यसेत् ।
वृत्तकुण्डलविस्तारमष्टादशयवं भवेत् ॥ २५ ॥
वेदाङ्गुलं तु तत्तुङ्गं कुम्भाब्जं मुकुलोदयम् ।
क(अ)न्यद्वा सुन्दरोपेतं कल्पयेद्वृत्तकुण्डलम् ॥ २६ ॥
जटामुकुटसंयुक्तं युग्मसंख्याजटान्वितम् ।
मुकुटस्योदयं विप्र चतुर्विंशाङ्गुलं भवेत् ॥ २७ ॥
त्रिसप्ताङ्गुलतुङ्गं वा द्विनेत्राङ्गुलमेव वा ।
केशान्त्रं मुकुटं चेतु(चापि) ललाटे पट्टसंयुतम् ॥ २८ ॥

मुखान्तसदृशं विप्र मुकुटमूलविशालकम् ।
तत्सप्ताष्टनवांशेन हीनमग्रविशालकम् ॥ २९ ॥
चतुष्पूरिमसंयुक्तं भान्वंशं पूरिमोदयम् ।
सव्ये नागार्कपुष्पैश्च वामे त्वर्धशशिं न्यसेत् ॥ ३० ॥
दक्षिणोत्थं शिवार्धं वा वामे नागार्कपुष्पधृत् ।
कटिसूत्रत्रिसंख्यादि सूत्रं प्रति यवं स्वनम् ॥ ३१ ॥
कटिसार्धोपरिष्टात्तु कटिसूत्रं तु बन्धयेत् ।
पञ्चपट्सप्तमात्रं वा कीर्तिमाननविस्तृतम् ॥ ३२ ॥
तद्विस्तारसमोत्तुङ्गं मेढ्रोर्ध्वे परिकल्पयेत् ।
कटिसूत्रादूरुदाममूरुमध्यावसानकम् ॥ ३३ ॥
मुक्तादामोरुदाम स्यादन्तरे रत्नसंयुतम् ।
कटिसूत्रं समाख्यातं कटकं वलयान्वितम् ॥ ३४ ॥
कटकं वलयोपेतं प्रकोष्ठं द्विजसत्तम ।
कनिष्ठाङ्गुलिपरीणाहं वलयं मार्दवं हितम् ॥ ३५ ॥
अथवा वलयस्यैव घनं द्वित्रियवं तु वा ।
पराजितं तु वलयं युग्मं प्रके(कोष्ठे) निधापयेत् ॥ ३६ ॥
मार्दवं रत्नबन्धं वा कृत्वा तु वलये द्विज ।
केयूरं कूर्परे न्यस्य मुकुटं च घनान्वितम् ॥ ३७ ॥
एकाकारं तु केयूरं वाऽष्टपत्राब्जसंयुतम् ।
नानारत्नसमायुक्तं शैलवाहमथापि वा ॥ ३८ ॥
पत्रपूरिमसंयुक्तं बाहुमध्ये द्विजोत्तम ।
पत्रपूरिमनालं तु केयूरसदृशं घनम् ॥ ३९ ॥
तत्पूरिमादधोनालं बाहुद्वित्रिपरं तु वा ।
त्रिचतुष्पञ्चमात्रं वा पत्रपूरिमविस्तृतम् ॥ ४० ॥
तद्व्यासार्ध[मात्र]तुङ्गं पादोनं द्विगुणं तु वा ।
द्विगुणं वाऽपि तुङ्गं तु तद्बाहुवलयं भवेत् ॥ ४१ ॥
मध्याङ्गुल्या विना शेषाः स्युरङ्गुलीमुद्रिकान्विताः ।
मुद्रिकामूलपर्वस्था वृत्ताया वसनान्वितम् ॥ ४२ ॥
उदरं स(ब)न्धं विशालं चैकद्वित्रियुगं तु वा ।
यवं वा द्वियवं वाऽथ उदरं बन्धनं भवेत् ॥ ४३ ॥

नानालंकारसंयुक्तं नानारत्नैर्विचित्रितम् ।
नाभेरूर्ध्वे गुणांशं तु नीत्वा वा दारु वर्धयेत् ॥ ४४ ॥
पादयोर्मध्यमादन्याः स्वङ्गुल्यो वलयान्विताः ।
का(जा)लयवद्वयघनं स्वङ्गुलानां तु मध्यगम् ॥ ४५ ॥
पादौ जालकयुक्तौ[हि]गुल्फजस्थौ द्विजोत्तम ।
जालकाबन्धसूत्रं तु यवद्वयघनान्वितम् ॥ ४६ ॥
तत्सूत्रजालनालं स्यात्त्रिपञ्चयवमानकम् ।
त्रियवं जालकानालं शेषं वै जालकोटयम् ॥ ४७ ॥
तदुक्ततसमं व्यासं यवमानं च तत्समम् ।
शेषं हीनं घनं गाढं यस्य यत्र यथोचितम् ॥ ४८ ॥
गाढाहृतं तु युक्तं स्यादन्तःपाषाणसंयुतम् ।
घनं पाषाणहीनं तु गाढनीयं तदोच्यते ॥ ४९ ॥
परशोर्हरिणीदीर्घं भान्वङ्गुलमुदाहृतम् ।
परशुं हरिणी चैव युक्त्या वा द्वयमाचरेत् ॥ ५० ॥
यज्ञोपवीतसंयुक्तं यवाष्टांशं घनं भवेत् ।
उपवीतद्विसूत्रं स्यादुपवीतसमं घनम् ॥ ५१ ॥
वासः स्कन्धोपरि न्यस्य नाभ्यधस्ताद्ङ्गुलं भवेत् ।
यज्ञोपवीतसूत्रं स्यान्नाभेर्दक्षिणपार्श्वके ॥ ५२ ॥
अपरे वाममाश्रित्य यज्ञसूत्रं निधापयेत् ।
ऊरुसूत्रं समालम्ब्य स्तनादष्टाङ्गुलोत्तरम् ॥ ५३ ॥
यज्ञोपवीतमेवं स्याच्छन्नवीरमथ शृणु ।
यज्ञोपवीतं स्याद्विम स्कन्द(न्ध)योरुभयोरपि ॥ ५४ ॥
पार्श्वयोश्चैव श्रोण्यर्धे न्यस्य स्थानान्तरैकवत् ।
[ग्रीवा]हारं विजानीयाद्धिकाधस्तात्षडङ्गुलम् ॥ ५५ ॥
लम्ब्ये वेदाङ्गुलं तारं यवत्रयघनान्वितम् ।
नानारत्नैर्हिरण्यैश्च हारं कृत्वा तु सुन्दरम् ॥ ५६ ॥
हिकासूत्रोपरिष्टात्तु उपग्रीवं च बन्धयेत् ।
रुद्राक्षं वाऽस्य रत्नं वा हेमसूत्रमथापि वा ॥ ५७ ॥

उपग्रीवं समाख्यातं नानापुष्पाविराजितम् ।
सर्वाङ्गसुन्दरं देवं शेषं युक्त्या समाचरेत् ॥ ५८ ॥
एवं सुखासनं प्रोक्तमुमास्कन्दयुतं तथा ॥ ५९ ॥

इति काश्यपशिल्पे सुखासनं नामैकषष्टितमः पटलः ।

---

॥ अथ द्विषष्टितम पटल ।

---

अथ वक्ष्ये विशेषेण सोमस्कन्देश्वरं द्विज ।
सुखासनं यथा प्रोक्तं तथेदं च विधीयते ॥ १ ॥
देवस्य वामपार्श्वे तु पार्वतीं च सुखासनाम् ।
चय(रच)येद्दक्षिणे पादे वामपादं प्रलम्बयेत् ॥ २ ॥
आसनस्योपरिष्टात्तु स्फिग्गीनां चतुरङ्गुलम् ।
ऊर्ध्वकायसमायुक्तं मानसोपरि कल्पयेत् ॥ ३ ॥
किंचिद्देव्याश्रितं वक्त्रं लक्षणं भागसंयुतम् ।
वरदं वामहस्ते तु उत्पलं दक्षिणे करे ॥ ४ ॥
किंचिद्वक्रौ यथापूर्वौ वामहस्तौ तथोर्ध्वके ।
वरदं चामिति(भयं) स्यातं पृथक्सिंहस्य कर्णवत् ॥ ५ ॥
वामाङ्के स्थापयेद्देवीं सर्वाभरणभूषिताम् ।
रक्ताम्बरधरा देवीं छन्नवीरसमन्विताम् ॥ ६ ॥
अथवाऽन्यप्रकारेण देवीभङ्गं वदामि दम्(ते) ।
वामोर(रो)रासपीठे तु वामहस्ततलं न्यसेत् ॥ ७ ॥
पश्चादुत्पलसंयुक्तं दक्षिणं हस्तमुच्यते ।
पीठं तु दक्षिणे जानुं किंचिदुन्नितसंयुतम् ॥ ८ ॥
त्रिचतुष्पञ्चमात्रं वा पीठजान्वन्तरं भवेत् ।
षट्सप्ताष्टाङ्गुलं वाऽथ पीठं जान्वन्तरं भवेत् ॥ ९ ॥
एवं द्विविधमित्याहुर्देवीभङ्गं विधीयते ।
श्रीमाश्नेनु(मना नौ)क्तमार्गेण देवीमानं तु शृण्वताम् ॥ १० ॥

स्थानकानां तु देवेश देवि चास्थानकं भवेत् ।
आसने त्वासनं ख्यातं विपरीतं विपत्करम् ॥ ११ ॥
देवीलक्षणमेवं वा स्कन्दलक्षणमुच्यते ।
देवीदेवेशयोर्मध्ये स्थापयेत्स्कन्दमूर्तिकाम् ॥ १२ ॥
देव्या हिकावसानं तु स्कन्दमानं तदुत्तरम् ।
स्तनाक्षान्तं कनिष्ठं स्यात्तयोर्मध्येऽष्टभाजिते ॥ १३ ॥
नवधा स्कन्दमानं तु उक्तमानं त्रयं त्रयम् ॥
जात्या व्याससुतं वाऽपि हीनं वाऽपि प्रकल्पयेत् ॥ १४ ॥
सवेदरसधर्मांशं तन्मानं तु विभाजिते ।
एकांशमङ्गुलं ख्यातं तदष्टांशं यवं भवेत् ॥ १५ ॥
एकाङ्गुलं शिरोमानं केशान्तं चैव तत्समम् ।
त्रिभागं नेत्रसूत्रान्तं पुटान्तं चैव तत्समम् ॥ १६ ॥
गुणांशं हनुसीमान्तं ग्रीवोच्चं तु द्वयाङ्गुलम् ।
हिकासूत्रस्तना(ना)न्तं तु नवभागमुदाहृतम् ॥ १७ ॥
तस्मान्निम्नि(नाभ्य)वसानं तु वस्वङ्गुलमुदाहृतम् ।
नाभेस्तु मेढ्रमूलान्तं सप्तमात्रमिति स्मृतम् ॥ १८ ॥
भान्वंशमूरुदीर्घं स्याज्जानु द्व्यङ्गुलकं भवेत् ।
जङ्घा चोरुसमं तुल्यं द्व्यंशं पादतलोन्नतम् ॥ १९ ॥
दशांशांघ्रितलायामं बाहुदीर्घं चतुर्दश ।
प्रकोष्ठायामं दशांशं तलं वेदाङ्गुलं भवेत् ॥ २० ॥
युगांशं मध्यमाङ्गुल्यं सार्धाग्न्यंशमनामिका ।
तत्समं तर्जनीदीर्घं कनिष्ठायां गुणाङ्गुलम् ॥ २१ ॥
अङ्गुष्ठायाममग्न्यंशं युगांशं तलविस्तृतम् ।
प्रकोष्ठाग्रं गुणांशं तु तन्मूलं चतुरङ्गुलम् ॥ २२ ॥
भूतांशं बाहुमूलं स्याद्विस्तारं द्विजसत्तम ।
सार्धाष्टांशं मुखव्यासं सप्तांशं कर्णविस्तृतम् ॥ २३ ॥
कक्षयोरन्तरव्यासं त्रयोदशाङ्गुलं भवेत् ।
पञ्चांशं हृदयविस्तारं रुद्रांशं मध्यविस्तृतम् ॥ २४ ॥

श्रोणिस्थाने तु भान्वंशं कटिस्थाने त्रयोदश ।
ऊरुमूलविशालं तु वस्वङ्गुलमुदाहृतम् ॥ २५ ॥
षडङ्गुलं जानुविस्तारं(वृत्तं) जङ्घामूलं युगाङ्गुलम् ।
गुणांशं नलकं तारं षडंशं तलविस्तृतम् ॥ २६ ॥
पार्ष्णिन्यासं युगांशं वा शेषं युक्त्या तु कल्पयेत् ।
केशान्ते नासिकोपेतं करण्डमुकुटान्वितम् ॥ २७ ॥
उभयोर्हस्तयोः पुष्पं वामो वरद एव वा ।
कटकं वाऽथ तद्धस्तं सिंहकर्णमथापि वा ॥ २८ ॥
दक्षिणे पुष्पहस्तं वा कपित्थमुभयं तु वा ।
कटिसूत्रधृतं नग्नं छन्नवीरसमन्वितम् ॥ २९ ॥
मृदुकर्णं उपग्रीवं बालभूषणभूषितम् ।
आसीनं वा स्थितं वाऽथ नृत्तं वा स्कन्दमाचरेत् ॥ ३० ॥
आसीनौ चरणौ द्वौ द्वौ विष्टरोपरि शाययेत् ।
स्थितौ पादतलौ द्वौ तु स्थलभङ्गमिति स्थितौ ॥ ३१ ॥
चरणौ कुञ्चितोभौ तु युक्त्या जानु(न्वो)श्च नीव्रकम् ।
द्विपादौ कुञ्चितौ किंचित् किंचन्नमन एव वा ॥
नृत्तं चेरस्वस्तिकः सव्यपादं वज्रसमन्वितम् ।
उद्धृत्य वामपादं तु पीठोत्सेधं कलावधि ॥ ३३ ॥
पश्चात्पक्षमात्रान्तं पादमुद्धारतो द्विज ।
फलेनावरदं वामं हस्तमन्यं तु सूचितम् ॥ ३४ ॥
अथवा वामहस्तं तु फलं न्यस्त्वा(स्य)प्रसाधयेत् ।
टिकासूत्रे समे धृत्वा कर्णयोर्ध्वसमिकम् ॥ ३५ ॥
द्व्यन्तरं लम्बसूत्रं तु नृत्तमूर्तिवदाचरेत् ।
उमास्कन्दयुतं प्रोक्तं शृणु चन्द्रधरादिष्वन् ॥ ३६ ॥

इति काश्यपशिल्पे द्विषष्टितमः पटलः ।

---

॥ अथ त्रिषष्टितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण चन्द्रशेखरमूर्तिना(काम्) ।
केवलं गौरिसहितमालिङ्गं च त्रिधा भवेत् ॥ १ ॥
केवलं गौरिसहितं सहजं गौरिसंयुतम् ।
आलिङ्ग्य चैकहस्तेन देविदेवौ परस्परम् ॥ २ ॥
कृतमालिङ्गमाख्यातमेवं त्रिविधमूह्यताम् ।
केवलं समपादं तु स्थानकं सहितं भवेत् ॥ ३ ॥
समभङ्गं त्रिभङ्गं स्यादभङ्गं चन्द्रशेखरम् ।
केवलं मूर्तिदं ख्यातं सहितमभयप्रदम् ॥ ४ ॥
तेष्वादौ समपादं तु स्थानकं सहितं तथा ।
बिम्बमानोदयं सर्वं प्रागेव परिकीर्तितम् ॥ ५ ॥
लम्बमानोपमानं च ह्यधुना वक्ष्यते क्रमात् ।
प्रलम्बफलकायामं चत्वारि चाष्टमात्रकम् ॥ ६ ॥
अष्टादशाङ्गुलं तारं सार्धद्विद्व्यङ्गुलं घनम् ।
चतुष्पादसमायुक्तं पादोच्चं प्रतिमोदयम् ॥ ७ ॥
रि(ऋ)क्षाङ्गुलसमायुक्तं स्थापयेत्समभूतले ।
समसूत्रं विनिश्चित्य प्रलम्बफलकोपरि ॥ ८ ॥
पूर्वेऽपरे च पार्श्वे च मानसूत्रं प्रलम्बयेत् ।
अन्तरे सुषिरं कल्प्यं सूत्रान्त्यं लम्बयेत्तदा ॥ ९ ॥
तत्सूत्रं तु शुभं बिम्बं कारयेद्द्विजसत्तम ।
पूर्वे च पातयेत्पृष्ठे कायमध्ये च लम्बयेत् ॥ १० ॥
एतानि पञ्च सूत्राणि ब्रह्मसूत्रमुदाहृतम् ।
कक्षान्तरे मुखान्ते च द्वे द्वे सूत्रे प्रलम्बयेत् ॥ ११ ॥
एवं हि नवसूत्राढ्यं स्थानकं चाऽऽसनं तथा ।
मुकुटं मध्यमं चैव ललाटस्य तु मध्यमे ॥ १२ ॥
नासाग्रमध्यमं चैव हनोर्मध्यं तथैव च ।
हिक्कामध्यं च हृदयं मध्ये नाभिश्च मध्यमे ॥ १३ ॥
लिङ्गमध्ये च मध्ये तु पादयोश्च तलान्तरे ।
लम्बयेत्पूर्वसूत्रं स्यादपरतमथोच्यते ॥ १४ ॥

मुकुटस्य मध्यमाद्विम कृकाटिकारतु मध्यमे ।
ककुन्मध्यत्वमध्ये तु स्फिक्पिण्डान्तरके तथा ॥ १५ ॥
ऊरुजश्यो(ङ्घ)र्श्वशङ्का(जङ्घा)यां पार्ष्ण्योश्च द्व्यन्तरे तथा ।
एवं स्याल्लम्बयेत्सूत्रमपरस्याग्रमेव हि ॥ १६ ॥
पार्श्वयोः कर्णवल्यन्तं ग्रीवामध्ये तथैव च ।
बाहौ च मध्यमालम्ब्य गुल्फमध्ये तु लम्बयेत् ॥ १७ ॥
देहमध्ये गतेनैव पञ्चसूत्रं प्रकल्पयेत् ।
श्रोत्राभ्यन्तर्गतं सूत्रं स्तनचूचुकमध्यमे ॥ १८ ॥
पादोरुमध्यदेशेऽन्त्ये मध्यमे तु प्रलम्बयेत् ।
पूर्वसूत्रं तु मौल्यग्रं निम्नं द्वादशमात्(त्र)कम् ॥ १९ ॥
पूर्वसूत्रं मौल्यमग्रं पण्मात्रं तु प्रमुच्यते ।
पूर्वसूत्रं ललाटान्तं ह्यन्तरं द्व्यङ्गुलं भवेत् ॥ २० ॥
अपरसूत्रं शिरःपृष्ठे पादोनान्तं युगाङ्गुलम् ।
पूर्वसूत्रं तु मन्म(न्व)न्तं सयवं द्व्यंशमिष्यते ॥ २१ ॥
कृकाटिकापरं सूत्रं यवोनं द्व्यन्तरान्तरे ।
पूर्वसूत्रं तु हिक्कान्तं द्व्यन्तर तु रसाङ्गुलम् ॥ २२ ॥
ककुदोऽपरपृष्ठे तु षोडशं तु यवान्तरम् ।
उरसः पूर्वसूत्रं तु द्व्यन्तरं तु द्विमात्(त्र)कम् ॥ २३ ॥
ककुन्मध्यात्परं सूत्रं द्व्यन्तरं त्वणुमात्रकम् ।
मध्योदरे न्यसेत्पूर्वं सूत्रं वै तत्समं परे ॥ २४ ॥
वर्षं निम्नपरं सूत्रं पादोनाष्टार्धकं परम् ।
मावसूत्रान्नाभिमध्ये तु द्व्यन्तरं सार्धमात्(त्र)कम् ॥ २५ ॥
नाभिसूत्रात्परे पृष्ठे सार्धपञ्चाङ्गुलं भवेत् ।
मावसूत्रान्मेढ्रमूलान्तं गुणाङ्गुलमुदाहृतम् ॥ २६ ॥
तत्समं तु परे सूत्रे द्व्यन्तरं तु द्विमात्रकम् ।
ऊरुमध्ये तु पुरतो जत्रुमध्यं तथैव च ॥ २७ ॥
जङ्घामध्ये च नलिकामध्ये चैव पुरोगतम् ।
तिर्यक्सूत्रं तु संकल्प्य द्व्यन्तरं तु प्रमीयते ॥ २८ ॥
तत्तत्स्थाने परे चैव तिर्यक्सूत्रं प्रकल्पयेत् ।
ऊरुमध्याङ्गुष्ठाग्रं तु पूर्वसूत्रं तु द्व्यङ्गुलम् ॥ २९ ॥

तत्रैवापरसूत्रं तु पड्विंशतियवं भवेत् ।
जानुमध्याङ्गसूत्रान्तं पूर्वसूत्रं रसाङ्गुलम् ॥ ३० ॥
तत्रैवापरसूत्रं तु पादोनं पञ्चमात्रकम् ।
जङ्घामध्यं तु प्राक्सूत्रं वस्वङ्गुलमुदाहृतम् ॥ ३१ ॥
तत्रैवापरसूत्रान्तं पड्विंशतियवं भवेत् ।
प्राक्सूत्रान्नालकामध्यं सार्धं वस्वङ्गुलं भवेत् ॥ ३२ ॥
नालकापरसूत्रान्तं पादोनं पञ्चमात्रकम् ।
द्व्यर्धमङ्गुष्ठयोरग्रं पूर्वसूत्रं विशेषतः ॥ ३३ ॥
तत्सूत्रपार्ष्णिपर्यन्तं सार्धमन्विष्यमिष्यते ।
प्राक्सूत्रकायमध्यस्थं सूत्रं सार्धं नवाङ्गुलम् ॥ ३४ ॥
कायमध्यस्थसूत्रं तु शिरः पृष्ठयुगान्तकम् ।
तत्कायमध्यसूत्रं तु ककुत्पञ्चाङ्गुलार्धकम् ॥ ३५ ॥
उरोमध्यप्रदेशे तु पृष्ठं सार्धषडङ्गुलम् ।
सूत्रमध्योदरे पृष्ठे सार्धवेदाङ्गुलं भवेत् ॥ ३६ ॥
नाभिप्रदेशपृष्ठे तु सार्धभूताङ्गुलं भवेत् ।
कठि(टि)नीव्रं पदंशं स्यात्सार्धांशं स्त्रिव(स्फि)कात्रकम् ॥ ३७ ॥
ऊरुमध्योत्पलं वेदो जानुपृष्ठं तथैव च ।
जङ्घामध्ये गुणांशं तु नलिका द्व्यङ्गुला भवेत् ॥ ३८ ॥
गुल्फौ हि(ल्फयोर्हि) युगाङ्गुल्यं परसूत्रे बहिर्घनम् ।
पार्श्वसूत्रमथस्तं(स्तात्तु) समसूत्रं तु संस्थितम् ॥ ३९ ॥
पार्श्वसूत्रात्पुरो बाहुपर्यन्तं चतुरङ्गुलम् ।
तत्सूत्रात्परे बाहुपर्यन्ताव(वं)समात्(त्र)कम् ॥ ४० ॥
पूर्वाकारौ तु मध्ये च कूर्परं तु वलयकौ ।
तत्करे बाहुविमर्दौ चतुरङ्गुलमिष्यते ॥ ४१ ॥
कर्तरीपरहस्ताग्रौ हिक्कासूत्रं समं भवेत् ।
मध्याङ्गुलाग्रमुभयोः स्तनचूचुकसंभवेत् ॥ ४२ ॥
अभयं दक्षिणे हस्ते वरदं वामहस्तकम् ।
प्राक्सूत्रादभये हस्ते मध्यं पञ्चदशाङ्गुलम् ॥ ४३ ॥

वरदं वामहस्तं तु अधोमुखं प्रकल्पयेत् ।
तलमूलं कटीपृष्ठे मेढ्राग्रं तु तत्क(तः प)रे ॥ ४४ ॥
मध्याङ्गुल्यं [स]मालम्ब्य ऊरुनीवं युगाङ्गुलम् ।
ऊरुवक्त्रं तु वरदं पृष्ठं नाभिसमोद्धृतम् ॥ ४५ ॥
वरदं हस्ततलमध्ये पूर्वसूत्रं तलाङ्गुलम् ।
कर्तरीमणिबन्धं तु बाहुबाह्यमुखं भवेत् ॥ ४६ ॥
अथवा रुद्रभागं तु दशाङ्गुलमथापि वा ।
को(कू)र्परं पूर्वसूत्रान्तं नीव्रं सप्तदशाङ्गुलम् ॥ ४७ ॥
जङ्घयोरेकोनविंशदं ऊ(मू)रुमूलं द्वयोन्नतम् ।
गुल्फयोरन्तरं चैव पञ्चाङ्गुलमुदाहृतम् ॥ ४८ ॥
ऊरोर्मध्यान्तरङ्गुल्यं विंशार्धं वा उदाहृतम् ।
जान्वन्तरं चतुर्मात्रं जङ्घयोः पञ्चमातृ(त्र)कम् ॥ ४९ ॥
तलोरं(रू) तु रसांशं तु वेदांशं गुल्फयोर्भवेद् ।
पादाङ्गुष्ठद्वयोरन्तं ह्यन्तरं वसुमात्रकम् ॥ ५० ॥
आर्जवं राजसं भावं कल्पयेद्वा द्विजोत्तम ।
कर्तरीपरहस्तौ द्वौ टङ्कं वै दक्षिणे करे ॥ ५१ ॥
हरिणी वामहस्ते तु टङ्कं कृत्वा बहिर्मुखम् ।
हरिणीबाह्यमूलं वा द्व्यन्तराननमेव च ॥ ५२ ॥
जटामुकुटसंयुक्तं दक्षिणे चन्द्रशेखरम् ।
वामेन्दुशेखरं वाऽथ मवालसदृशप्रभम् ॥ ५३ ॥
त्रिनेत्रं सौम्यवदनं सर्वाभरणभूषितम् ।
पीताम्बरधरं देवं वस्त्राग्री नलकान्तकौ ॥ ५४ ॥
उभयोः पार्श्वयोरेवमम्बरं चोरुमध्यमम् ।
केवलं चैवमाख्यातं वामे गौरीसमायुतम् ॥ ५५ ॥
भिन्नपीठैकपीठं वा भवेद्वा मङ्गसंयुतम् ।
तद्गौरीसंयुतं चोक्तभिन्नपीठैकमेव वा ॥ ५६ ॥
तदेव मङ्गसंयुक्तं देवदेव्यौ परस्परम् ।
देवो वरदहस्तेन देवीं वै त्वपराश्रिताम् ॥ ५७ ॥

रथानमध्यान्तरे वामपार्श्वमालिङ्गनं कुरु ।
पार्श्वसूत्रात्परे वाऽथ बाहुमालिङ्गनं तु वा ॥ ५८ ॥
देवि(वी)दक्षिणहस्तेन शंभोर्दक्षिणपार्श्वतः ।
कटिसूत्रोपरिप्राय(प्राप्तु) पुष्पं वामकरे धृतः ॥ ५९ ॥
अथवा पार्श्वदेवेशो व्योम्नस्तु दक्षिणे करे ।
करोरपलं (च)हन्त्याथ वामहस्तं प्रलम्बयेत् ॥ ६० ॥
एवमालिङ्गमूर्तिश्च त्रिधामान्ये(नेन)कल्पयेत् ।
सर्वाभरणसंयुक्तं प्रभामण्डलसंयुतम् ॥ ६१ ॥
चन्द्रशेखरमाख्यातं वृषारूढमथ शृणु ॥ ६२ ॥

इति काश्यपशिल्पे चन्द्रशेखरमूर्तिलक्षणं नाम त्रिषष्टितमः पटलः ।

---

अथ चतुःषष्टितमः पटलः ।

---

वृषवाहनमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना ।
समभङ्गं त्रिभङ्गं वा कल्पयेत्कल्पवित्तमः ॥ १ ॥
दक्षिणं स्वस्तिकं पादं वामपादं तु कुञ्चितम् ।
उष्णीषान्मध्यमाद्वामे ललाटं मध्यवामके ॥ २ ॥
वामनेत्रावसाने तु वामनासापुटान्तके ।
दक्षिणे स्तनपीठं स्याद्वामनाभिश्च मध्यमे ॥ ३ ॥
वामोरुमध्यपार्ष्णयोश्च मध्यसूत्रं प्रलम्बयेत् ।
एवं तु समभङ्गं स्यात् नतमानं युगाङ्गुलम् ॥ ४ ॥
मुखे पूर्ववदुद्दिष्टं दक्षिणे तु स्तने तथा ।
नाभेर्वामे गुणांशं तु वामोरुमध्यमे तथा ॥ ५ ॥
स्वसि(स्थि)ताङ्घ्रिस्तु गुल्फं स्यात्मध्ये सूत्रं प्रलम्बयेत् ।
अतिभङ्गमिति ख्यातं नतं पञ्चाङ्गुलं भवेत् ॥ ६ ॥
वृष(ष)स्य मस्तकोर्ध्वे तु न्यसेचै(च)वापको(कू)र्परम् ।
हिक्कासूत्रं तथा विम कलांशं वा नवाङ्गुलम् ॥ ७ ॥

वामकौ(कू)र्परं लम्बं स्यात्तस्मात्स्तनसीमकम् ।
वृषभस्योच्चयं ख्यातं पादस्थानाद्वितादङ्गुलम् ॥ ८ ॥
वृषभोदयमाख्यातं वृषं लक्षणवत्कुरु ।
वृषमूर्ध्नि तु हस्ते तु मध्याङ्गुल्यग्रसीमकम् ॥ ९ ॥
नाभिसूत्रं समं कुर्यादङ्गुलं वा नवाङ्गुलम् ।
(अध)स्तात्तलमध्ये तु पूर्वसूत्रं यवद्वयम् ॥ १० ॥
अधोमुखं प्रकर्तव्यं तदर्धं तु प्रसारयेत् ।
दक्षिणे पूर्वहस्ते तु पार्ष्णि नाभेरधो बुधः ॥ ११ ॥
पक्षे षोडशमात्रं वा नतं तत्सिंहकर्णवत् ।
वक्त्रदण्डोत्थितं तस्मिन्कल्पयेत्तु चलाचलम् ॥ १२ ॥
स्थिताङ्घ्रिजानुरूर्ध्वास्तु हिक्कासूत्रं तु(स)मुन्नतम् ।
कनिष्ठाङ्गुलिपरीणाहमग्रं वलत्रयान्वितम् ॥ १३ ॥
लोहजं दारुजं वाऽथ वक्रदण्डेवमाचरेत् ।
अधस्तान्मणिबन्धस्तु ऊरुमूलं तदुच्चरम् ॥ १४ ॥
पञ्चपद्सप्तमात्रं वा वसुनन्दाङ्गुलं तु वा ।
जटामुकुटसंयुक्तं जटाभारस्तु लम्बितः ॥ १४ ॥
जयबन्धशिरो वाऽपि कर्तुरिच्छावशान्नयेत् ।
सर्वाभरणसंयुक्तं रक्ताभं रक्तवद्धत(वत्रक)म् ॥ १६ ॥
वामपार्श्वे उमादेवी दक्षिणे वा विशेषतः ।
स्वस्तिकं दक्षिणं पादं वामपादं तु कुञ्चितम् ॥ १७ ॥
उत्पलं दक्षिणे हस्ते वामहस्ते प्रसारितम् ।
स्त्रीमानेन विधानेन उमादेवीं च कारयेत् ॥ १८ ॥
वृषवाहनमाख्यातं नृत्तमूर्तिरथोपरि ॥ १९ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे वृषवाहनमूर्तिलक्षणं नाम
चतुःषष्टितमः पटलः ।

---

॥ अथ पञ्चषष्टितमः पटलः ॥

अथ वक्ष्ये विशेषेण नृत्तमूर्तेस्तु लक्षणम् ।
उत्साहवर्धनार्थाय उद्धृता चर्ममुण्डिका ॥ १ ॥
रुरुण्डावदनं कृत्वा स्पिक्यात्पणनितं तथा ।
हिंसोरसुकासना देवी तत्सुखासनवृद्धये ॥ २ ॥
तथा नृत्तं करिष्यति सर्वलोकहिताय वै ।
देवानां मूर्तिनाथाय राजराष्ट्रविवर्धनात् ॥ ३ ॥
नृत्तमष्टादशं ज्ञेय तेष्वादौ नवमुच्यते ।
प्रकृतौ विधिना ग्राह्यं बिम्बमानं द्विजोत्तम ॥ ४ ॥
उत्तमं दशतालेन सर्वाङ्गं परिकल्पयेत् ।
भालुरुद्रवशं चैव तुङ्गं नृत्तोन(च)तं भवेत् ॥ ५ ॥
उष्णीषान्मध्यमारसव्ये ललाटं मध्यदक्षिणे ।
नीत्वा शिवाङ्गुलं सव्ये नेत्रान्ते च पुटान्तके ॥ ६ ॥
हनोः सर्व तु हिकायां मध्ये नाभिं च मध्यमे ।
वामोर्वभ्यन्तरे लम्ब्य स्थिताङ्घ्री गुल्फमध्यमे ॥ ७ ॥
प्रभामण्डलमध्ये तु पूर्वसूत्रं तु लम्बयेत् ।
ललाटसूत्रनीत्रं तु युगार्धाङ्गुलमन्तरम् ॥ ८ ॥
गुल्फसूत्रान्तरे चैव द्वादशांशं विधीयते ।
हिकामध्यं तु सूत्रं तु सार्धसप्तनवाङ्गुलम् ॥ ९ ॥
मुकुटोध्य(र्ध्वे)कपक्षाग्रं सूत्रान्तरं तथैव च ।
ऊर्ध्वकुक्षिं स्पृशेत्पूर्वं सूत्रमेवं प्रलम्बयेत् ॥ १० ॥
तत्सूत्राद्दोल(त्पर)वावा(ह्व)ग्र मर्धाधिककलाङ्गुलम् ।
तस्मादपरबाह्वग्रं युगाङ्गुलमुदाहृतम् ॥ ११ ॥
तस्मादग्निकराग्रान्तं साष्टत्रिंशाङ्गुलं तु वा ।
चत्वारिंशतिमात्रं वा तस्माद्विगुणाङ्गुलम् ॥ १२ ॥
हिकासूत्रं समोद्धृत्य मध्यमे मध्यमाग्रकम् ।
तथास्ता(द्धस्त)तलमध्ये वा मध्याङ्गुल्यग्रपूर्वके ॥ १३ ॥

मध्यपर्वं ययाधिक्यं त्वनलं पात्रसंयुतम् ।
पार्श्वं विनाऽघ(थ)वाऽऽधिक्यं पञ्चाङ्गुलं विशालकम् ॥ १४ ॥
तुङ्गं सप्ताङ्गुलं वाऽष्टनवमात्रमथापि वा ।
त्रिपञ्चसप्तजिह्वायां कल्प्यमेवमथोच्यते ॥ १५ ॥
उक्तासु मध्यजिह्(ह्वा)यां वन्यं दक्षिणाननं कुरु ।
दक्षिणे पूर्वसूत्रं तु वाह्वग्रं विशदं कुरु ॥ १६ ॥
तस्माड्डमरुके हस्ते मणिबन्धस्य बाह्यके ।
अष्टत्रिंशतिमात्रं वा चत्वारिंशतिरेव वा ॥ १७ ॥
चत्वारिंशतिमात्रं वा वामहस्तस्य सव्ययोः ।
सथ(द्ध)स्ते मणिबन्धोर्ध्वे हिक्कासूत्रं समं भवेत् ॥ १८ ॥
डमरुं मध्यमं पिण्डयं सूचीकर्णं तु उद्धृतम् ।
तर्जन्यग्रं तु सूच्यग्रं तर्जनी रजनी भवेत् ॥ १९ ॥
अथवा चर्मसूत्रं तु पिण्डी मध्याङ्गुलोपरि ।
अनामिकोपरिष्टात्तु डमरुं परिकल्पयेत् ॥ २० ॥
डमरोर्दीर्घविस्तारं वसुपञ्चाङ्गुलं क्रमात् ।
मध्यं गुणाङ्गुलव्यासं पद्माकारं प्रकल्पयेत् ॥ २१ ॥
वलयद्वयसंयुक्तं चर्मसूत्रेण वन्धितम् ।
गव्येनाकृतबिम्बं तं तद्द्रव्येण तु कारयेत् ॥ २२ ॥
सूच्यग्रारकर्णसीमान्तं चत्वारिंशतिमात्रकम् ।
सपञ्चचत्वारिंशद्वा पञ्चाशन्मातृ(त्र)कं तु वा ॥ २३ ॥
पार्श्वसूत्रं समं सूच्या वन्यारतो मध्याङ्गुलम् ।
दक्षिणे पूर्वहस्तं तु अभयं परिकल्पयेत् ॥ २४ ॥
प्राक्सूत्रादुभये हस्ते मध्यं भानुद्वयाङ्गुलम् ।
तन्मध्यमाङ्गुलान्तं तु हिक्कासूत्रसमं भवेत् ॥ २५ ॥
सूत्रात्कूर्परनीव्रं च चत्वारिंशद्द्विमात्रकम् ।
अभयं प्रकोष्ठमध्ये तु भुजं[ग]वलयं न्यसेत् ॥ २६ ॥
प्रकोष्ठमध्यनाहं स्यात् सपादं तस्य दीर्घकम् ।
सन्सूत्रादुपरि ख्यातं फणं भान्वङ्गुलं भवेत् ॥ २७ ॥
सप्ताङ्गुलं विशालं तु घनमेकाङ्गुलं भवेत् ।
पुरःस्थितान्समीक्षेत जिह्वानीव्रं समन्वितम् ॥ २८ ॥

भुजंगवलयं ह्येवं कल्पयेत्कल्पवित्तमः ।
सूत्रात्कक्षान्तरं सव्ये पार्श्वे द्वादशमात्रकम् ॥ २९ ॥
सूत्रान्मध्योदरं वामे नवाङ्गुलमुदाहृतम् ।
नवमारिपण्डसूत्रं तु सूत्रादष्टादशाङ्गुलम् ॥ ३० ॥
सूत्रात्कुञ्चितजान्वोस्तु अन्तरं तु दशाङ्गुलम् ।
नवाङ्गुलं चाष्टमात्रं जानुनीव्रं यथाक्रमम् ॥ ३१ ॥
भानुरुद्रदशाङ्गुल्यं नतमानं तु कल्पयेत् ।
स्थिताङ्घ्रिजानुं चोर्वामं जानुनीव्रं तदाकुलम् ॥ ३२ ॥
त्रिपञ्चमनुमात्रं वा जानुद्वयन्तं तथैव च ।
स्थिताङ्घ्रिनलकामध्यादामपार्ष्ण्यन्तरं बुधः ॥ ३३ ॥
सप्तेदचत्वारिंशच साङ्गुलं प्रविधीयते ।
सप्ताष्टपञ्चचत्वारिंशत्य(द)ङ्गुलं नतं भवेत् ॥ ३४ ॥
स्थितजान्वो(नू)द्धृतं पार्ष्ण्यां चतुर्विंशतिमात्रकम् ।
त्रयस्त्रिंशतिमात्रं वा जानुपार्ष्ण्यन्तरं द्विज ॥ ३५ ॥
चद्धृताङ्घ्रिस्तु जान्वो(नू)र्ध्वं नाभिसूत्रं समं भवेत् ।
कूर्परं डोलहस्तं स्याश्नालसूत्रं दशाङ्गुलम् ॥ ३६ ॥
एकादशाङ्गुलं वाऽथ कल्पे वा(ल्पैवं)कूर्परान्तकम् ।
तद्धस्ते मणिबन्धस्तु वामजानु तु द्व्यन्तरम् ॥ ३७ ॥
दशाङ्गुलं वा कर्तव्यं नवाङ्गुलमुदाहृतम् ।
डोलहस्तं विविन्यस्तदङ्गुलाग्रं विशेषतः ॥ ३८ ॥
वामपादे तु जङ्घादि द्व्यन्तरं त्वङ्गुलं भवेत् ।
नवाङ्गुलान्तरं वाऽपि रुद्राङ्गुलमथापि वा ॥ ३९ ॥
डोलहस्ताद्वयान्तं तु द्व्यन्तरं तु दशाङ्गुलम् ।
अन्योन्ययुक्तनीव्राणि यथासौन्दर्यमाचरेत् ॥ ४० ॥
केशान्ताद्धकपक्षं स्यात्तद्वन्मष्टादशाङ्गुलम् ।
सप्तदशाङ्गुलं वाऽथ षोडशाङ्गुलमेव वा ॥ ४१ ॥
तदर्धं वा त्रिपादं वा तस्य विस्तारमेव हि ।
सुविकीर्णजटाभारं पञ्च षट् सप्त नन्द वा ॥ ४२ ॥
रुद्रसंख्या तु वा विप्र उभयोः पार्श्वयोस्तथा ।
द्वात्रिंशाङ्गुलमारभ्य चैकषष्ट्यङ्गुलान्तकम् ॥ ४३ ॥

अङ्गुलाङ्गुलवृद्ध्या तु जटादीर्घमुदाहृतम् ।
अधोजटादीर्घमेवं तस्मादूर्ध्वं तु मूर्धके ॥ ४४ ॥
कनिष्ठाङ्गुलिपरीणाहं जटानाहमुदाहृतम् ।
जटान्तपुष्पमालाभिरलंकृत्य विशेषतः ॥ ४५ ॥
नागं चैवार्कपुष्पं च धत्तूरकुसुमं तथा ।
हस्तिशिरीषकं चैव करोटिरत्नबन्धनम् ॥ ४६ ॥
सर्पं धृत्वा तु मुकुटे दक्षिणे चन्द्रशेखरम् ।
सिन्धूराकृतितोलस्तु अष्टमालाविलम्बितम् ॥ ४७ ॥
भस्मोद्धूलितसर्वाङ्गं किंचित्प्रहसिताननम् ।
यज्ञोपवीतसंयुक्तं हरसूत्रसमन्वितम् ॥ ४८ ॥
देवाङ्गनोरुदे मध्ये बाहुधामेऽप्रमिगोतिः ।
प्रभामण्डलमाश्रित्योदरबन्धाग्रको द्विज ॥ ४९ ॥
व्याघ्रचर्माम्बरोपेत ऊर्ध्वं गतिवसानरूम् ।
दोलाबाह्वोर्धृतो बन्धं व्याघ्रचर्म द्विजोत्तम ॥ ५० ॥
लम्बनं बाहुमूले तु भानुषोडशाङ्गुलम् ।
मध्यं वा त्रिपादं वा विस्तारं त(च)क्रमण्डलम् ॥ ५१ ॥
पादौ नूपुरसंयुक्तौ सर्वाभरणभूषितौ ।
हस्तपादाङ्गुलं सर्वं रत्नहेमाङ्गुलीयुतम् ॥ ५२ ॥
मध्याङ्गुलिविष्टब्ध्या तु शेषं वै मुद्रिकान्वितम् ।
दक्षिणं कुञ्चितं पादमपस्मारोपरि स्मृतम् ॥ ५३ ॥
तिर्यक्पादतलन्यासान्नृत्तं कुर्यान्महेश्वरः ।
वामपादं ततोद्धृत्य सतिर्यग्दक्षिणान्वितम् ॥ ५४ ॥
दोल्हस्तपथात्यन्तमपस्मारमिहोच्यते ।
त्रिचतुष्पञ्चमाथं वा अपस्मारस्य दीर्घकम् ॥ ५५ ॥
अष्टान्तारिंशांशं तु अपस्मारोदयं कुर ।
टार्णार्पं चरभागेन फेशान्तं च द्विधा भवेत् ॥ ५६ ॥
हृदयं नाभिपर्यन्तं नवसमं परिकीर्तितम् ।
नाभिमेद्रस्य मूलान्त मानं पञ्चान्(प)कं भवेत् ॥ ५७ ॥
मध्याङ्गुलं चोरुदीर्घं जानुदीर्घं द्व्याङ्गुलम् ।
जङ्घादि घो(चो)रुतुल्यं स्यादष्य[न्त]र चरणोदयम् ॥ ५८ ।

मन्वंशं तु करं हिक्का मध्यमाङ्गुलिसीमकम् ।
शेषं युक्त्या तु कर्तव्यं शाययेत्तु अधोमुखम् ॥ ५९ ॥
शंभोः सव्यशरीरस्थावुभौ पादौ तु कीर्तितम् ।
अपस्मारोदरोर्ध्वं तु धर्मनन्दाष्टमात्रकम् ॥ ६० ॥
तन्मुखं तु समुद्धृत्य बाललीलासमन्वितम् ।
व्यालं वै वामहस्तेन दक्षिणे तस्य चेन्द्रियम् ॥ ६१ ॥
सस्यश्यामनिभाकारमपस्मारं द्विजोत्तम ।
कलांशं पद्मपीठोर्ध्वं विस्तारं च चतुर्गुणम् ॥ ६२ ॥
सपादं सार्धपादोनं द्विगुणं वा तदायतम् ।
ऊर्ध्वपद्ममधोपद्मं पिण्डिकां नो(चो)कवद्भवेत् ॥ ६३ ॥
प्रभामण्डलसंयुक्तमनेन विधिना कुरु ।
गुणाङ्गुलं समारभ्य शतमात्रावसानकम् ॥ ६४ ॥
तावदेवाङ्गुलास्या तु कालकोनशतोदयम् ।
एकाङ्गुलं समारभ्यैकैकावयववर्धनम् ॥ ६५ ॥
पश्चारसरयासनं ख्यातं दण्डः स्यात्प्रथमस्य तु ।
तत्तदष्टांशहीनं तु ऊर्ध्वोर्ध्वं तु क्रमात्कुरुम् ॥ ६६ ॥
एकद्वित्रिचतुष्पञ्चपदसप्तयमात्रकम् ।
पुनः पुनस्तथा संख्यमुपकुर्यात्प्रकल्पयेत् ॥ ६७ ॥
कर्तुरिच्छावशात्तेषु दण्डसंख्यं तु तत्कुरु ।
नानाताद(ल)लताभिश्च नानापुष्पैश्च शोभितम् ॥ ६८ ॥
तस्योपरिष्टाद्वलिनं हस्तं वै शिखरं बुधः ।
कर्तव्यं परितो विप्र तालस्याभ्यन्तरान्वितम् ॥ ६९ ॥
भानुमण्डलं वा धीमान्प्रभामण्डलवर्तनम् ।
तस्य वामे उमा देवी प्रागुक्तविधिना कुरु ॥ ७० ॥
एतस्य प्रथमं प्रोक्तं सर्वलोकहितावहम् ।
तदेव दक्षिणे पार्श्वे जटाग्रे च विभाजिते ॥ ७१ ॥
शम्भोर्हृदान्तरं चैव षोडशाङ्गुल(संमि)तम् ।
स्त्रीमानोक्ताङ्ग[सं]युक्तं हृदयं चालिसंयुतम् ॥ ७२ ॥
एवं मानविधिं युक्तं नृत्तं युक्त्या द्वितीयकम् ।
तदेव वामपादं तु अपस्मारोपरि स्थितम् ॥ ७३ ॥

उद्धृतं दक्षिणं पादं वामपादं प्रसारितम् ।
ललाटमध्यवामे तु वामनासापुटान्तके ॥ ७४ ॥
लम्बयेद्ब्रह्मसूत्रं तु स्थितपादस्य गुल्फके ।
शेषं प्रागिव कर्तव्यं यथानृत्ततृतीयकम् ॥ ७५ ॥
अवकीर्णजटाभारजटामुकुटसंयुतम् ।
जटामण्डलसंयुक्तं विशेषप्रथनृत्तवत् ॥ ७६ ॥
चतुर्थं नृत्तमेतद्धि सर्वप्राणिहितावहम् ।
कर्णान्तमुद्धृतं सव्यपादं वामं तु कुञ्चितम् ॥ ७७ ॥
भूका(ता)ष्टकसमायुक्तमेतत्पञ्चकनृत्तकम् ।
अभयं शूलपाशं च डमरुं दक्षिणे करे ॥ ७८ ॥
कपालं चाग्निपात्रं च गण्डं हस्तिकरोपमम् ।
गजहस्तोपमं हस्तं प्रसार्यं दक्षिणानुकम् ॥ ७९ ॥
यद्वत्प्रथमनृत्तं स्यात्सर्वसूत्रं प्रसारयेत् ।
चित्तपञ्चमनृत्तं स्यादेवमेवेति नृत्यते ॥ ८० ॥
दोर्भिः षोडशसंयुक्तं वामे गौरीसमायुतम् ।
हस्ताभ्यामुद्धृतं स्कन्धे स्तनं तस्य प्रसारितम् ॥ ८१ ॥
अभयं शूलपाशं च खड्गं डमरुकध्वजम् ।
वेतालं सूचिहस्तं च टक्षमष्टकरं भवेत् ॥ ८२ ॥
अनलं गजहस्ताभं खेटकं विस्मयं तथा ।
घण्टां चैव कपालं च छुरिकां सूचिमेव च ॥ ८३ ॥
वामे स्वष्टभुजाख्यातं शेषं पञ्चमनृत्तवत् ।
एवं षष्ठमं स्यात् राजराष्ट्रसुखावहम् ॥ ८४ ॥
त्रिनेत्रमष्टहस्तं च सुविकीर्णजटाधरम् ।
कुञ्चितं वामपादं तु अपस्मारोपरि स्थितम् ॥ ८५ ॥
वामपार्श्वे शिरस्थस्य विकीर्णाङ्घ्रिश्च दक्षिणे ।
उद्धृतं दक्षिणाद्गुष्ठमग्रं संहितसङ्ख्यम् ॥ ८६ ॥
पूर्वसूत्रं तथाऽङ्गुष्ठनीत्रं मान्त्यङ्गुलं भवेत् ।
अभयं शूलपाशं च डमरुं दक्षिणे करे ॥ ८७ ॥
कपालमग्निपात्रं च तथा विस्मयहस्तकम् ।
गजहस्तोपमं वामे चतुर्थे चैवमेव हि ॥ ८८ ॥

गजहस्तोपमं सव्यं वामं व्यालसमं तु वा ।
ललाटस्य तु मध्ये तु वामे तु स्थानमध्यमे ॥ ८९ ॥
वामाङ्घ्रिनलिकामध्ये लम्बयेद्ब्रह्मसूत्रकम् ।
तत्सूत्राद्वामजान्वे(न्वन्तं) नीत्रं चैव नवाङ्गुलम् ॥ ९० ॥
नतमानं दशांशं स्याद्वामे गौरीसमायुतम् ।
सप्तमं नृत्तमाख्यातं जगद्दुःखविनाशकम् ॥ ९१ ॥
तमेव षड्भुजं भेदमभयं डमरुं तथा ।
शूलं दक्षिणपार्श्वे तु कपालं विस्मयं तथा ॥ ९२ ॥
गजहस्तोपमं वामे सूत्रं माय(प)यदष्टकम् ।
चतुर्भुजं त्रिनेत्रं वा जटामुकुटमण्डनम् ॥ ९३ ॥
अभयं डमरुं सव्ये वामेऽग्निर्गजहस्तवत् ।
अपस्मारं विना पीठे वामाङ्घ्रिकुञ्चितं स्थितम् ॥ ९४ ॥
तत्तत्पुरस्थितं पीठे सव्यपादकनिष्ठके ।
तत्पादं कुञ्चितं युक्त्या सूत्रं युक्त्या तु लम्बयेत् ॥ ९५ ॥
नवमं नृत्तमाख्यातं गङ्गाधरमतः परम् ॥ ९६ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे नृत्तमूर्तिलक्षणं नाम पञ्चषष्टितमः पटलः ।

॥ अथ षट्षष्टितमः पटलः ॥

गङ्गाधरमहं वक्ष्ये संक्षेपेणाधुना शृणु ।
स्वस्तिकं दक्षिणं पादं वामपादं तु कुञ्चितम् ॥ १ ॥
ललाटमध्यमारभ्य नीत्वा नयवान्तकम् ।
दक्षिणे चाक्षिसीमन्ते सव्यनासापुटान्तरे ॥ २ ॥
हिक्कामध्यमनाभिस्तु सव्ये द्व्यङ्गुलकं भवेत् ।
दक्षिणे मेढ्रमूलं स्यान्मध्ये वेदाङ्गुलान्तरे ॥ ३ ॥
पार्ष्ण्योश्च मध्यमे चैव हिक्कासूत्रं प्रलम्बयेत् ।
युगांशं नतमानं तु पादाङ्गुष्ठद्वयान्तरे ॥ ४ ॥
अष्टादशाङ्गुलं प्रोक्तं त्र्यंशं पार्ष्णिक्रान्तरम् ।
वसिष्ठस्य जटायन्यं वामे स्त्रीपञ्चवाननम् ॥ ५ ॥
दक्षिणे पूर्वहस्तं तु कुरु देवीस्तनाश्रितम् ।
वामेन पूर्वहस्तेन देवीमालिङ्गनं कुरु ॥ ६ ॥

दक्षिणे परहस्ते तु ज(टाजाह्नवि)संयुतम् ।
उष्णीषान्तं समुद्धृत्य वामे कृष्णयुगं ध्रुवम् ॥ ७ ॥
देवस्य वामपार्श्वे तु देवीवाहितकाननम् ।
स्वस्तिकं वामपादं तु दक्षिणं कुञ्चितं भवेत् ॥ ८ ॥
समजङ्घ(ङ्घ)नतं सूत्रं कल्पयेत्कल्पवित्तमः ।
प्रसार्य दक्षिणं हस्तं वामहस्तं तु पुष्पकम् ॥ ९ ॥
अथवा दक्षिणे हस्ते प्रकोष्ठस्य त्रिवर्गकम् ।
श्रोणिहस्ततलं लम्ब्य स्वमास्थितिमिव क्रमात् ॥ १० ॥
सर्वाहंकारसंयुक्तं सर्वालंकारसंयुतम् ।
भागीरथीदक्षिणे पार्श्वे मुनिभिः पश्यतेश्वरः ॥ ११ ॥
गङ्गाधरं हरमिति ... ततो वै त्रिपुरान्तकम् ॥१२॥

इत्यंशुमद्भेदे काश्यपशिल्पे गङ्गाधरमूर्तिलक्षणं नाम षट्षष्टितमः पटलः ।

---

॥ अथ सप्तषष्टितमः पटलः ॥

त्रिपुरान्तकमूर्त्योस्तु लक्षणं वक्ष्यते क्रमात् ।
त्रिचतुष्पञ्चमानं स्यान्नतमानं यथाक्रमम् ॥ १ ॥
अभङ्गं समभङ्गं च अतिभङ्गमिति त्रिधा ।
प्रतिमोच्चनतं भागं मानमेवं हि कल्पयेत् ॥ २ ॥
पादाङ्गुष्ठद्वयोश्चैव द्व्यन्तरं षोडशाङ्गुलम् ।
अभङ्गं मद्विजानीयादष्टादशाङ्गुलं समम् ॥ ३ ॥
विंशत्यङ्गुलमानं स्यात[म]तिभङ्गमिति स्मृतम् ।
तत्रिभागैकभागं तु पार्ष्ण्योस्तु द्व्यन्तरं भवेत् ॥ ४ ॥
उष्णीषाद्वामपार्श्वे तु नेत्रान्ते तत्पुटान्तके ।
स्तनोर्वामे समालम्ब्य दक्षिणस्तनवामके ॥ ५ ॥
नाभेर्दक्षिणपार्श्वे तु वामोरुमध्यपार्श्वके ।
दक्षिणाद्मध्येन्तु पार्ष्ण्योस्तु वामपार्श्वे तु लम्बयेत् ॥ ६ ॥
अभङ्गं सूत्रमानं स्यात् समभङ्गमथो शृणु ।
मध्यमध्यनासाग्रे पादयोः पार्ष्णिमध्यमे ॥ ७ ॥

लम्बयेत्पूर्वसूत्रं तु द्व्यन्तरं त्वेवमूह्यताम्।
तत्सूत्राद्वामपार्श्वे तु हिक्कासूत्रं शिवाङ्गुलम्॥ ८॥
अर्धाङ्गुलं तु तत्सूत्रं वा येन्द्रय मे मेढ्रं तु मध्यमे।
तत्सूत्राद्दक्षिणे नाभिमेढ्रमध्यं युगाङ्गुलम्॥ ९॥
[त]त्सूत्राद्वामजान्वन्तमर्धमात्रं विधीयते।
समभङ्गमिति ख्यातमतिभङ्गमथो शृणु॥ १०॥
उष्णीषाद्वामपार्श्वे तु नेत्रान्ते च पुटान्तके।
दक्षिणे स्तनमध्यान्तं तत्सूत्रं तु गुणाङ्गुलम्॥ ११॥
नाभिमध्ये तु वामे तु सूत्रनीत्रं गुणाङ्गुलम्।
तत्सूत्रं वामजान्वन्तमर्धमात्रं विधीयते॥ १२॥
वामाङ्घ्रिपार्ष्णिसव्ये तु पार्श्वसूत्रं प्रलम्बयेत्।
स्पर्शनं वेशनं नीत्रं स्म(स)पादरयानकोर्त(क्त)वत्॥ १३॥
एवं त्रिभङ्गसूत्रेषु संमिश्रं तु न कारयेत्।
उत्तमं चातिभङ्गं स्यात्समभङ्गं तु मध्यमम्॥ १४॥
अभङ्गमधमं ख्यातं त्रिपुरान्तकमूर्तितः।
दक्षिणं स्वस्तिकं पादं वामपादं तु कुञ्चितम्॥ १५॥
दक्षिणे पूर्वहस्ते तु द्वे नाभी सूत्रसन्तक(त)म्।
सिंहकर्णं तु तद्धस्तं बाणमध्यं तु पिण्डितम्॥ १६॥
बाणा[या]मं तु तत्सप्तत्र्यङ्गुलं तु विधीयते।
कनिष्ठाङ्गुलिपरीणाहं देवेशस्य करौ स्थितौ॥ १७॥
आस्यं पञ्चाङ्गुलव्यासमास्योर्ध्वं व्याससदृशम्।
आस्यतुङ्गं समं पूर्वं तुङ्गमन्याङ्गुलीततम्॥ १८॥
वामहस्ते धनुर्धृत्वा कक्षान्तात्तत्करोर्ध्वकम्।
एकद्वित्र्यङ्गुलं वाऽपि तस्माद्वृत्यानतं तु वा॥ १९॥
शताङ्गुली (लं) तु तुङ्गं वा पञ्चसप्तनवाङ्गुलम्।
हीनं वाऽप्यधिकं वाऽपि नयधा धनुषाऽन्वितम्॥ २०॥
पूर्णमुष्टि तु नाहं स्यान्मध्यमाग्रौ कृशौ कुरु।
त्मग्रं मध्याङ्गुलव्यासं दृचवर्णं विचित्रकम्॥ २१॥
बाणनाहं त्रिभागैकं रज्जुनाहं तु तन्तुना।
धनुर्दीर्घाष्टभागे तु सप्तांशं रज्जुदीर्घकम्॥ २२॥

तद्दीर्घस्यानुकूलं तु धनुर्वक्रमुदाहृतम् ।
त्रिवक्रं सहितं वाऽथ बालचन्द्रो भवेत्तथा ॥ २३ ॥
धनुषा(रा)कृतिरेवं स्याल्लौहजं दारुजं तु वा ।
कर्तरीपरहस्तौ द्वौ टङ्कं कृष्णमृगान्वितम् ॥ २४ ॥
टङ्कं दक्षिणहस्ते तु वामहस्ते मृगो धृतः ।
जटामुकुटसंयुक्तं सर्वाभरणभूषितम् ॥ २५ ॥
प्रवालसदृशमस्य्यं वामे गौरीसमायुतम् ।
त्रिपुरान्तकमूर्तिस्तु प्रथमं लक्षणान्वितम् ॥ २६ ॥
देवस्य वामपादं तु अपस्मारोपरि स्थितम् ।
शेषं प्राग्विग कर्तव्यं द्वितीयं लक्षणं भवेत् ॥ २७ ॥
स्वस्तिकं वामपादं तु दक्षिणं कुञ्चितं भवेत् ।
शेषं प्राग्विव कर्तव्यं सूत्रादितरपार्श्वकम् ॥ २८ ॥
तृतीयं लक्षणं प्रोक्तं चतुर्थं लक्षणं शृणु ।
तदेव वामपादं तु अपस्मारशिरःस्थितः ॥ २९ ॥
प्राग्विवैवावशेषं तु चतुर्थं लक्षणं हितम् ।
कटौ बाणधरे हस्ते मध्यरेखाकलाङ्गुलम् ॥ ३० ॥
तुर्यांशं मनुमात्रं वा त्रयोदशाङ्गुलं तु वा ।
भानुरुद्राङ्गुलं वाऽथ द्व्यन्तरं षड्विधं भवेत् ॥ ३१ ॥
तत्परं कूर्परं नीत्रं श्रोणिपार्श्वं तथा भवेत् ।
कक्षार्द्धनुर्धनुर्हस्ते मणिबन्धान्तरं ततः ॥ ३२ ॥
तत्करे कूर्परोद्धारं हृदयान्तमुदाहृतम् ।
एकद्वित्रिचतुष्पञ्चमात्रं तन्मानकं तु वा ॥ ३३ ॥
सर्वेषामपि सामान्यं द्व्यन्तरं कथितं मतम् ।
तदेव पूर्वहस्तौ द्वौ कटकौ हृदयस्थितौ ॥ ३४ ॥
वामे दक्षिणहस्तं तु क्रमाद्द्वंद्वयोर्मुद्रा ।
बाणमूलं धृतं सव्यं वामं बाणाग्रकं धृतम् ॥ ३५ ॥
परहस्ते दक्षिणे टङ्कं धनूंषि वामहस्तके ।
सव्ये पार्श्वे मृगर्वोऽस्य वामे गौरीसमायुतम् ॥ ३६ ॥
अपस्मारं विना पादं नतसूत्रं च पार्श्वयोः ।
एवं चतुर्भुजोपेता मूर्तिः पञ्चविधा भवेत् ॥ ३७ ॥

अतिभङ्गं नतो भेदमष्टहस्तसमन्वितम् ।
बाणं च परशुं खड्गं वज्रं वै दक्षिणे करे ॥ ३८ ॥
धनुषी विस्मयं खेटं मृगहस्तमथापि वा ।
वामहस्तमिदं ख्यातं पूर्वहस्तात्करान्तकम् ॥ ३९ ॥
यथाशोभं तथा तुङ्गं कल्पयेद्गौरिसंयुतम् ।
षष्ठमप्येवमाख्यातं सप्तमं च अथोच्यते ॥ ४० ॥
बाणं चक्रं तथा शूलं टङ्कं वज्रं च दक्षिणे ।
धनुः शङ्खं तथा सूचिं विस्मयं खेटकं तथा ॥ ४१ ॥
वामे षड्करं ख्यातमतिभङ्गस्तथोपरि ।
तथैव दक्षिणं जानुं वामोपरि निधापयेत् ॥ ४२ ॥
तत्पूर्वे पा(वा)मपादं तु तले न्य[स्य] रथोपरि ।
रथं तु मुकुलोपेतं मुकुलं रज्जुनाऽऽवृतम् ॥ ४३ ॥
मुकुलाभ्यन्तरे ब्रह्म चतुर्वक्त्रं चतुर्भुजम् ।
तस्य दक्षिणहस्तौ द्वौ वेणुदण्डकमण्डलुम् ॥ ४४ ॥
कुण्डिका पद्मपाशं च वामहस्तद्वयोर्धृतम् ।
रथस्य मुकुलाधस्तादष्टपभं चातिवर्णकम् ॥ ४५ ॥
रथं याप(पूर्वे)णमार्गेण कल्पयेत्कल्पवित्तमः ।
त्रिपुरान्तकमाख्यातमष्टभेदं द्विजोत्तम ॥ ४६ ॥
प्रवालसदृशं मणा(ख्यं) सत्त्वराजसमुश्रु(संयु)तम् ।
सर्वाभरणसंयुक्तं मेघवर्णं त्रिनेत्रकम् ॥ ४७ ॥
तस्य वामे स्थिता देवी प्रागुक्तविधिना कुरु ।
सामान्यलक्षणं कार्यं त्रिपुरान्तकमूर्तिनः ॥ ४८ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे त्रिपुरान्तकमूर्तिलक्षणं नाम सप्तषष्टितमः पटलः ।

---

॥ अथाष्टषष्टितम पटल ॥

---

अथ कल्याणमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना ।
ललाटमध्यवामे तु वामनेत्रावसानके ॥ १ ॥

२९

वामनासापुटान्ते च हिक्कामध्ये चलं भवेत् ।
दक्षिणं नाभिमध्ये तु देवहत्वा(स्ता)ङ्गुलं भवेत् ॥ २ ॥
नीत्वा स्थिताङ्घ्रिगुल्फः स्यान्मध्ये सूत्रं प्रलम्बयेत् ।
द्व्यन्तरं नतमानं च समभङ्गं यथाक्रमम् ॥ ३ ॥
स्वस्तिकं वामपादं तु दक्षिणं कुञ्चितं भवेत् ।
दक्षिणं पूर्वहस्तं तु गौरीदक्षिणहस्तधृत् ॥ ४ ॥
वरदं वामहस्तं तु परहस्तद्वयोस्त्व(र्व)रम् ।
दक्षिणे परशुं चाऽथ वामे कृष्णमृगं तथा ॥ ५ ॥
जटामुकुटसंयुक्तं सर्वाभरणभूषितम् ।
देवं प्रवालवर्णाभं पार्श्वे तस्य विशेषतः ॥ ६ ॥
सस्यश्यामनिभा देवी प्रागुक्तमानादिसंमताम् ।
उत्पलं वामहस्ते तु धृतदक्षिणहस्तकम् ॥ ७ ॥
शंभोर्दक्षिणसंग्राहलज्जालग्नसमन्वितम् ।
पूर्वस्यात्तुगुणं शीघ्रं सर्वाभरणभूषितम् ॥ ८ ॥
हस्ताभ्यां संस्पृशेद्देवौ गौ(गौ)र्याधरस्तु कटिं द्विजाः ।
देवाग्रे कारयेत्कुण्डं हेमकर्म प्रजापतिः ॥ ९ ॥
शंभोर्वै रत्नसीमान्तं प्रमेशस्योर्ध्वं भवेत् ।
चतुर्भुजं चतुर्वक्त्रं सर्वाभरणभूषितम् ॥ १० ॥
अजिनं चाक्षमाला च वामहस्तेऽधरे पु(प)रे ।
दक्षिणं पूर्वहस्तं तु धृतवामकरः क्रमात् ॥ ११ ॥
उत्तराभिमुखासीनः पद्मपीठे प्रजापतिः ।
प्रभाग्रे देवीदेवेशो देवी देवस्य दक्षिणे ॥ १२ ॥
दक्षिणाभिमुखो विष्णुर्हेमयोचरादिकृस्थितः ।
शंभोर्वै नासीसीमान्तं श्रेष्ठायामं रत्नान्तकम् ॥ १३ ॥
तयोर्मध्येऽष्ट वा भजय नवधा केशवोदयम् ।
श्यामवर्णं शमं भागं शङ्खचक्रं परे करे ॥ १४ ॥
हिरण्यपरकोणापा पूर्वहस्तद्वयोपरि ।
संग्राह्य वरदे हस्ते सुतीर्थोदकपूर्वकम् ॥ १५ ॥
अनादिगोत्रसंभूतं श्रीभैवं परमेश्वरम् ।
आदिगोत्रा उमा गौरी सर्वेषामिन्द्रादिग्भ्यहम् ॥ १६ ॥

इत्युक्त्वा वरदे हस्ते दद्यात्तीर्थोदकं हरिः ।
अष्ट लोकेशविद्येशसिद्ध(य)श्च गणाढ्यः ॥ १७ ॥
ऋषयश्चैव गन्धर्वा अप्सराश्च सदैवताः ॥ १८ ॥
इत्यंशुमद्भेदे काश्यपशिल्पे कल्याणमूर्तिलक्षणं नामा-
ष्टषष्टितमः पटलः ।

॥ अथैकोनसप्ततितम पटल ॥

अर्धनारीश्वमूर्तेस्तु लक्षणं वक्ष्यते शृणु ।
चतुर्भुजं षड्भुजं च द्विभुजं परिकीर्तितम् ॥ १ ॥
समभङ्गं स्थानकस्योक्तमार्गेणैवानतादयः ।
स्वस्तिकं दक्षिणं पादमितरं कुञ्चितं भवेत् ॥ २ ॥
वामार्धं पार्वतीरूपं दक्षिणार्धं महेश्वरम् ।
अभयं परशुं सव्ये हस्ते वह्निं शिवांशके ॥ ३ ॥
वृषभं मूर्तिकन्यस्तकूर्परं वामहस्तके ।
तदन्यद्वामहस्ते तु कटकं पुष्पसंयुतम् ॥ ४ ॥
द्विभुजे वरदं सव्ये वामहस्ते तु पुष्पधृत् ।
शिवार्ध(वरयाऽऽ)भरणं सव्ये वामे श्रीभूषणान्वितम् ॥ ५ ॥
पुस्तकं दक्षिणे पार्श्वे वामे स्त्रीणां पयोधरम् ।
अथवा कुञ्चितं सव्यं पादं वामं तु स्वस्तिकम् ॥ ६ ॥
सव्यं शूलधरं हस्तं वामे पुष्करकं भवम् ।
वरदं दक्षिणं हस्तमन्योऽक्षिशिरपूर्वकम् ॥ ७ ॥
कपालं दक्षिणे हस्ते वामहस्तं प्रसारितम् ।
दक्षिणे रौद्रदृष्टिः स्याद्वामे पार्श्वे तु शीतलम् ॥ ८ ॥
दुकूलं चोरुमध्यान्तं सव्यं गुल्फान्तमन्यकम् ।
एवं विस्तारतः प्रोक्तमर्धनारीश्वरं परम् ॥ ९ ॥
इत्यंशुमद्भेदे काश्यपशिल्पेऽर्धनारीश्वरलक्षणं नामैकोनसप्ततितमः पटलः ।

॥ अथ सप्ततितम पटल ॥

अथ वक्ष्ये विशेषेण गजहामूर्तिलक्षणम् ।
ललाटमध्यनासाग्रं वामे तु स्तनमध्यमात् ॥ १ ॥

वामद्विपिण्डमध्यात्तु पूर्वसूत्रं प्रसारयेत् ।
तत्सूत्राद्दक्षिणे वामे पादपार्ष्ण्यन्तरं द्विज ॥ २ ॥
साष्टविंशतिमात्रं वा षड्विंशत्यङ्गुलं तु वा ।
तत्सूत्राद्वामनो(तः) सव्यपादाङ्गुष्ठान्तरं द्विज ॥ ३ ॥
एकविंशतिमात्रं वा एकोनविंशदेव वा ।
चतुर्हस्ताष्टहस्तं वा सर्वाभरणसंयुतम् ॥ ४ ॥
चतुर्भुजं चेत्पाशं च भे(ग)जचर्म च दक्षिणे ।
गजास्यं गजचर्म स्याद्वामपार्श्वकरद्वयम् ॥ ५ ॥
चतुर्दोर्विधमाख्यातमष्टहस्तमथोच्यते ।
गजस्य मस्तके पाशं गजचर्म च दक्षिणे ॥ ६ ॥
गजशृङ्गं कपालं च गजचर्म च विस्मयम् ।
वामपार्श्वे तु चत्वारो हस्तमे(स्ता ह्ये)वं प्रकीर्तितम् ॥ ७ ॥
शंभोर्वामाङ्घ्र्यधस्तात्तु गजस्यैव तु मस्तकम् ।
मुकुटस्योपरिष्टात्तु गजपुच्छं प्रकाशयेत् ॥ ८ ॥
पार्श्वयोगे जयायां तु यथा युक्त्या तु कारयेत् ।
प्रभामण्डलवच्छेषं गजचर्म प्रकल्पयेत् ॥ ९ ॥
शूलखड्गपरं चर्म गजशृङ्गं च दक्षिणे ।
कपालं खेटकं खड्गं गजचर्म च वामके ॥ १० ॥
ललाटमध्यनासाग्रं दक्षिणस्तनमध्यमात् ।
सव्यपीठस्य मध्यं तु लम्बयेद्ब्रह्मसूत्रकम् ॥ ११ ॥
स्वस्तिकं वामपादं तु गजस्य मस्तकोपरि ।
उद्धृतं दक्षिणं पादं वामयुक्त्यादिकं भवेत् ॥ १२ ॥
तदङ्घ्रिपार्ष्ण्योः स्फिक्पिण्डादूर्ध्वान्तरं चतुरङ्गुलम् ।
तज्जानुवामकक्षस्य असिसूत्रं समं नयेत् ॥ १३ ॥
एवं द्विविधनीत्या तु गजहामूर्तिरुच्यते ।
दक्षसुतादुमा देवी शंभोर्वामोभयान्वितम् ॥ १४ ॥
एवं हि कल्पितं बिम्बम्(म्बं रा)जाविजयमाप्नुयात् ॥ १५ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे गजहामूर्तिलक्षणं नाम
सप्ततितमः पटलः ।

---

## ॥ अथैकसप्ततितम पटल ॥

अथ वक्ष्ये विशेषेण पाशुपत[स्य] लक्षणम् ।
समपदस्थानकं प्रोक्तं चन्द्रशेखरमूर्तिवत् ॥ १ ॥
त्रिनेत्रं च चतुर्बाहुं मूर्धकेशं महायतुम् ।
अभयं शूलहस्तं च दक्षिणे तु करद्वये ॥ २ ॥
वरदं चाक्षमाला च वामपार्श्वकरद्वये ।
प्रवालसदृशमस्यं सौम्यनेत्रं तु शीतलम् ॥ ३ ॥
सर्वाभरणसंयुक्तं किंचित्प्रहसिताननम् ।
नित्योत्सवस्थबिम्बार्थं स्थानकं वासनं तु वा ॥ ४ ॥
तदेवाग्निसमं वर्णं रक्ताक्षं कुटिल(भ्रु)वम् ।
तीक्ष्णनेत्रस्य(नैश्च) संयुक्तं व्यालयज्ञोपवीतिनम् ॥ ५ ॥
ज्वालानलशिखाकारमतिरत्ननिवासधृक् ।
शूलं तयो(त्वधो)मुखं धृत्वा कपालं वरदोद्धृतम् ॥ ६ ॥
अथवाऽभयं विना शूलं मूलं धृत्वा तु तत्करे ।
शूलाग्रं वरदेनैव गन्यतिर्यग्गते ध्रुवम् ॥ ७ ॥
दक्षिणे वरदे हस्ते टङ्कं खड्गं तु वामके ।
कौतुकं पाशुपतनं वलिलिङ्गे तु पूज्यते ॥ ८ ॥
ध्यानपूजानिमित्तायामेतन्मूर्तिं वदाम्यहम् ।
एतन्मूर्तिं सकृद्ध्यायेत्सर्वशत्रुविनाशनम् ॥ ९ ॥
एवं तु रौद्रमूर्त्ये(र्तिं) तु प्रतिमां नैव कारयेत् ॥ १० ॥

इत्यंशुमद्भेदे काश्यपशिल्पे पाशुपतमूर्तिलक्षणं नामैकसप्ततितमः पटल ।

## ॥ अथ द्विसप्ततितम पटल ॥

अथ कंकालमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना ।
पादौ तु पादुकोपेतौ भिक्षुकंकाललक्षणम् ॥ १ ॥
रक्षार्थं परिवारार्थं मोक्षार्थं तु विधीयते ।
स्थानकं गमनं ग्राह्यं द्वाविंशं तु प्रवक्ष्यते ॥ २ ॥

स्थानकं मूलबेरं च गमनं चोत्सवं भवेत् ।
दारुजा लोहजा वाऽथ सुधामृन्मयशर्करा ॥ ३ ॥
शिला च चित्रं वा कुर्यात्प्रतिमां वा यथाविधि ।
एवं च प्रतिमां कुर्यान्मानोन्मानप्रमाणवित् ॥ ४ ॥
प्रमाणमङ्गैर्वा कृत्वा मानं संग्राह्य बुद्धिमान् ।
अङ्गुलैर्यवसंयुक्तैर्हस्ततालवितस्तिभिः ॥ ५ ॥
आयादि शुभं संग्राह्यं मानं शुद्ध्यर्थकं भवेत् ।
पादाधिष्ठानमानं द्वारतुङ्गसमेऽपि वा ॥ ६ ॥
मूललिङ्गसमोत्तुङ्गं सार्धं द्वित्रियवं तु वा ।
तयोर्मध्याष्टभागं तु नवधा तुङ्गमानकम् ॥ ७ ॥
उत्तमोत्तममानेन समस्तविधिरुच्यते ।
वामपादस्थितं चैव दक्षिणं गम्य वक्ष्यते ॥ ८ ॥
पार्ष्णी पादधृतौ चैव भवेद्दक्षिणकुञ्चितम् ।
पार्ष्ण्यूर्ध्वदृग्भवेत्पूर्वं ब्रह्मसूत्रं प्रलम्बयेत् ॥ ९ ॥
पूर्वहस्तं कृतं वाऽपि दक्षिणे कर्पके धृतम् ।
हिरण्यस्य कृते वाऽपि तर्जन्यङ्गुष्ठसृक्पया ॥ १० ॥
योनिसीमावसानेन दूर्वाकार ए(इ)वापि वा ।
अथ वामकरे पात्री(त्रं) नाभिसीमावसानकम् ॥ ११ ॥
डमरुं पू(वा)हमस्ते तु हनुसीमावसानकम् ।
वामे शूलस्य हस्तं वा शिखिपिच्छखण्डसंयुतम् ॥ १२ ॥
कङ्कालं च तदग्रे तु बन्धयेद्धृदयोपरि ।
बाहुसीमावसानेन तत्कन्यान्यविकं भवेत् ॥ १३ ॥
एकद्वित्रिचतुर्मात्रं नताधिक्यादिमेव हि ।
स्थानके पूर्वसूत्रं वा भङ्गमानमथो शृणु ॥ १४ ॥
ललाटवामपार्श्वे तु नेत्रान्ते च पुटान्तके ।
हनोर्वामे तु हिक्कायां हृदये कालकोलकम् ॥ १५ ॥
नाभेश्च दक्षिणे सूत्रं पश्चादङ्गुलमिति त्रयम् ।
योनिनीव्रं तु सूत्रं वा दक्षिणे युगमात्रकम् ॥ १६ ॥
वामपादस्थितं वाऽपि द्विपादान्तरमध्यमे ।
स्थानकं ह्येवमाख्यातं गमनेषु विधीयते ॥ १७ ॥

गमनेषु तु सूत्रं वा ललाटे वामपार्श्वके ।
वामाङ्घ्रिगुल्फमध्ये तु द्विपार्श्वके सूत्रकं भवेत् ॥ १८ ॥
सूत्रं ललाटमध्ये च दक्षिणे तु द्व्याङ्गुलम् ।
वामे च पुटपार्श्वे तु हिक्काहृदयमध्यमे ॥ १९ ॥
नाभिवामे द्व्याङ्गुल्यं योनिवामे युगाङ्गुलम् ।
वामाङ्घ्रिगुल्फसूत्रं स्याद्गमनस्य तु सूत्रकम् ॥ २० ॥
अभङ्गस्योक्तमार्गेण नतमानं च बुद्धिमान् ।
गमने सूत्रकं वाऽपि हस्तयोर्नीव्रमेव वा ॥ २१ ॥
सव्यहस्ततृणं कुर्यात्सूत्राद्व्यन्तरमंशकम् ।
द्वाविंशतिद्व्यङ्गुलं वाऽपि त्रयोविंशतिरेव च ॥ २२ ॥
मणिबन्धे मध्यमा तु बाह्ये चैव तथैव हि ।
नीव्रं तत्त्रिविधं चैव पाने वामकरेऽपि वा ॥ २३ ॥
कलासप्तदशं चाष्टमानानो चा(नतश्चा)पि नीव्रकम् ।
नाभिसीमावसाने तु कूर्परं तस्य नीव्रकम् ॥ २४ ॥
म(प)ञ्चाङ्गुल्यमथो वाऽपि तिथिषोडशमेव वा ।
दक्षिणं तृणकं हस्ते योनिसीमावसानके ॥ २५ ॥
एकद्वित्रिचतुर्मात्रं मृगसस्य(सूत्रं) प्रलम्बयेत् ।
ज्ञानमुद्रासिंहकर्णौ यथासौन्दर्यमाचरेत् ॥ २६ ॥
वामहस्ते परे शूलबाहुसीमावसानके ।
पूर्वसूत्रं तथैव स्याद् शिखाबद्धस्य नीव्रकम् ॥ २७ ॥
चत्वारिंशतिमात्रं वा शूलं तु खगु(ड्ग)तोपरि(मरे) ।
शूलाग्रो धातुको पीवा कङ्कालं बन्धयेत्सुधीः ॥ २८ ॥
दक्षिणे परहस्तेन डमरुं कटिकेऽपि वा ।
तु(क)टिदीर्घस्य विस्तारं नवाशीतिकेऽपि वा ॥ २९ ॥
मण्डं क्षीण गुणाङ्गुल्यं पद्माकारं द्विपार्श्वके ।
वल्यद्वयसंयुक्तं तर्जनी ऋजुतो भवेत् ॥ ३० ॥
तर्जन्या सूत्रमेवं हि हनुसीमावसानकम् ।
मणिबन्धस्य नीव्रं तु पूर्वसूत्रं तथैव च ॥ ३१ ॥
चत्वारिंशतिमेवाष्टमंशाधिकमथापि च ।
वामे कपालपात्रं वा मान्वत्रं रसनीव्रकम् ॥ ३२ ॥

घनं मेघाद्दुलं वाऽपि सुवृत्तंनिर्व्रणं भवेत्।
मकरकुण्डलमेवं हि शङ्खपत्रं तु वामके ॥ ३३ ॥
जटामण्डलमेवोक्तं विकीर्णं केशमण्डलं।
दक्षिणे तु शेखरं वा पार्श्वान्विर्वामकेऽपि वा ॥ ३४ ॥
करोटिमन्द्वन्यं च धुत्तूरकुसुमावृती।
घषत्पक्षं तथैवोक्तमर्कपुष्पैश्च दूर्वकैः ॥ ३५ ॥
पिका(ना)किजगत्रन्यं च करौ रुद्राक्षमालिका।
नाग कङ्कणं कोष्ठेषु नानारत्नविभूषितम् ॥ ३६ ॥
व्याघ्रचर्माम्बरधरं रुद्रधक्रममकाशितम्।
भस्मोद्धूलितदिव्याङ्गं किंचित्महसिताननम् ॥ ३७ ॥
एतत्कङ्कालनामास्ति वामस्कन्धोपरि त्यजेत्।
अनेकभूतैर्जायाभिः सेवितं वन्दितं च तैः ॥ ३८ ॥
बलिपात्रधृतं भूतमग्रे गे(हे)मसमन्वितम्।
दत्त्वा स्वकं तु तत्पात्रे निधायाकृतिजायया ॥ ३९ ॥
किंचित्प्रकाशितं योनिसंयुक्तं नत(व)वाससा।
संभूता मनसोपेता जायाः सर्वतने(श्चैने)कशः ॥ ४० ॥
दक्षिणे कटिपार्श्वे तु क्षुरिकाश्चैव बन्धयेत्।
क्षुरिकाहेमसंकाशाक्षुपबन्धसमाश्रिता ॥ ४१ ॥
उभयोः पार्श्वयोर्हस्ते नानानागैर्विभूपिताम्।
ऋषिभिर्देवगन्धर्वैः सिद्धविद्याधरादिभिः ॥ ४२ ॥
हृदयं फलिसंयुक्तं संभ्रान्तमनसाश्रितैः।
सर्वानित्यसदानन्दं सेविताद्यैः सुपूजितम् ॥ ४३ ॥
वीथी संमार्जयेद्वायुः पर्जन्यो जलसेचनम्।
पुष्पवृष्टिकृतो देवा ऋषयः स्तोत्रपाठकाः ॥ ४४ ॥
ऋग्यजुःसामाथर्वाणः स्तुतिं कुर्युः परे परे।
चर्मबन्धं च कांसं च वीणा सुषिरमेव च ॥ ४५ ॥
शङ्खध्वनिसमायुक्तं पञ्चवाद्यं महा(समा)रभेत्।
तुम्बुरुनारदाद्यैश्च जयवाद्यं सलक्षणम् ॥ ४६ ॥
चन्द्रादित्यादिचित्रोजाया(श्चजया)प्सरा दिव्ययोषितः।
सर्वलोकोपकारार्थमिन्द्रस्य राक्षनादिषु ॥ ४७ ॥

वाभूतागमनादेवा योन्येवा(निसीमा)वसानकम् । (?)
पञ्चतालेन भूतं च मानोन्मानप्रमाणकम् ॥ ४८ ॥
भूते तु शिरसो(सः)पात्रं द्विहस्तं स्पर्शं एव वा ।
पात्रह(वि)स्तारके वाऽपि विंशतिरङ्गुलं तु वा ॥ ४९ ॥
निम्नमानं दशाङ्गुल्यं खनमेकाङ्गुलं भवेत् ।
हिरण्यं दक्षदिग्भागे जानुसीमावसानकम् ॥ ५० ॥
मूर्धन्यादिपदान्ते च हारिणीं तुङ्गमेव च ।
देवस्य पूर्वसूत्रे तु स्पर्शमानं तथैव हि ॥ ५१ ॥
नासाग्रे लम्बयेत्सूत्रं वामाङ्गुष्ठस्य मूलके ।
जटाग्रे विंशदङ्गुल्यं त्रयोविंशदथाङ्गुलम् ॥ ५२ ॥
स्पर्शनं कुक्षिनासाग्रमङ्गुष्ठमूलं लम्बयेत् ।
सूत्रवामे तु नीवान्तमष्टाङ्गुल्यपराङ्गुलम् ॥ ५३ ॥
तत्सूत्राद्दक्षिणाङ्गुष्ठे नीवकं तु नवाङ्गुलम् ।
दशरुद्राङ्गुलं वाऽथ द्वादशाङ्गुलमेव च ॥ ५४ ॥
सूत्रस्थानं तु निम्नं वा सव्यपार्ष्ण्यन्तरेऽपि वा ।
द्वाविंशदङ्गुलं वाऽपि त्रयोविंशतिमेव वा ॥ ५५ ॥
सूत्रात्पार्श्वे तु सीमान्तं दक्षिणाङ्गुष्ठनिम्नकम् ।
एकद्वित्रिचतुष्पञ्चरसाङ्गुल्यं तु नीव्रकम् ॥ ५६ ॥
पीठे दक्षिणपार्ष्ण्ये(र्ष्णे) तु वेदपञ्चरसाङ्गुलम् ।
पादुकायामकं वाऽपि पादतालायसीम(वसान)कम् ॥ ५७ ॥
उत्सेधेन गुणाङ्गुल्यमूर्ध्वमानं तु पद्मकम् ।
तर्जन्यङ्गुष्ठयोर्मध्ये मुकुलाकृति बन्धयेत् ॥ ५८ ॥
द्व्यङ्गुलं कुमुदोत्सेधं सुवृत्तं सुन्दरं भवेत् ।
कैलासशिखरे रम्ये श्रीगन्धे देवनायकम् ॥ ५९ ॥
ऋषीणां संगमे भीत्या भगवान्परमेश्वरः ।
दण्डकारण्यलीलायां मुनीनां सर्वशान्तये ॥ ६० ॥
तेषां श्रीणां च पौरन्ध्रा(न्ध्र्ये) विघाताय च लीलया ।
भिक्षास्वरूपं नग्नेन कटिसूत्रविवर्जितः ॥ ६१ ॥
इत्ययं परमेशानः कैलासे वैविनीयतम् ।
भिक्षां करोम्यहं विप्र कङ्कालस्य तु मोक्षणम् ॥ ६२ ॥

काश्यप उवाच—

त्वया वै वर्णितं चास्य कङ्कालस्यो(स्य) फलं कथम् ।

शिव उवाच—

इदानीं पुरतो विप्र कथ्यते तत्सविस्तरम् ॥ ६३ ॥
तदहं भुवनादीनि याचेऽभयपुरस्करः ।
कम्पितस्तु समस्तानि भुवनान्यधिवासितः ॥ ६४ ॥
प्रार्थयेद्यस्तु मां भिक्षां मासं भयनिवृत्तये ।
अण्डानां सुस्थितार्थं च सर्वलोकोपकारकम् ॥ ६५ ॥
कङ्कालमोचनान्तं तु तद्गुणैवमहं द्विज ।
भिक्षान्ते मोचयेदेतत्कङ्कालमभयं भवेत् ॥ ६६ ॥

काश्यप उवाच—

एवं कङ्कालमाख्यातं करिरर्थ(हरमर्धहरि) शृणु ॥ ६७ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे कङ्कालमूर्तिलक्षणं नाम द्विसप्ततितमः पटलः ।

---

॥ अथ त्रिसप्ततितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण हरिर(म)र्धहरं परम् ।
आर्जवं स्वस्थि(स्ति)कं स्थानं स्थानकं समपादकम् ॥ १ ॥
दक्षिणे चाभयं वामे(मे) कटकं पूरिमाश्रितम् ।
परशुं दक्षिणे वामे (भागे) शङ्खायुधधरं परम् ॥ २ ॥
सव्ये वामे च मुकुटे जटाकिरीटमण्डितम् ।
प्रवालं श्यामरूपं तु तस्यो(न्छो)माभरणान्वितम् ॥ ३ ॥
दक्षिणे तूग्रदृष्टिः स्याद्वामे दृष्टिः स(सु)शीतलम् (लां) ।
किंचित्प्रकाशितार्थं च दृष्ट्या तु तल्ललाटके ॥ ४ ॥
सर्वाभरणसंयुक्तं त्रिशस्त्रसमन्वितम् ।
स्त्रियक्रमसमायुक्तं तस्य लक्षणमुच्यते ॥ ५ ॥

रुद्रांशकविशालं तु तद्भागांशेन वर्धितम् ।
घनं सुवृत्तचक्रं च पद्माकृतिम(अ)थापि वा ॥ ६ ॥
शिरश्चक्रविशालं तु सप्तभागैकभागिकम् ।
शिरसश्चक्रनालस्य विस्तारं द्विजसत्तम ॥ ७ ॥
चक्रवामत्रिभागैकं चक्रदं शिरसोन्नतम् ।
अग्रे ललाटपट्टस्य शिरश्चक्रस्य नालकम् ॥ ८ ॥
चक्रं तर्जनीपालम्ब्य पुष्पमालां च मध्यमाम् ।
सर्वेषां देवदेवीनामेवमेव समाचरेत् ॥ ९ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे हर्यर्धहरलक्षणं नामत्रि-
सप्ततितमः पटलः ।

---

॥ अथ चतुःसप्ततितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण भिक्षाटनमहेश्वरम् ।
पादौ पादुकसंयुक्तौ वामपादं तु स्वस्तिकम् ॥ १ ॥
ईषदुद्धृत्य सव्यं तु पादं तुङ्गं नवोत्सवम् ।
ललाटमध्यमासव्ये नवाङ्गी वा यवान्तरे ॥ २ ॥
नासाग्रेद(त्व)न्तरे वामे हिक्कामध्यं तु वामके ।
हृन्मध्यनाभिसव्ये तु षोडशं तु यवान्तरम् ॥ ३ ॥
स्वस्त्याङ्घ्रिगुल्फमध्ये तु पूर्वसूत्रं प्रलम्बयेत् ।
अभङ्गं सततं कार्यं समभङ्गमथापि वा ॥ ४ ॥
पादौ पादुकसंयुक्तौ पादुकारहितौ तु वा ।
सुविकीर्णजटाभारो जटामण्डल एव वा ॥ ५ ॥
भ्रणमं च जटाभारं नग्नरूपं नतानननम् ।
ललाटपट्टसंयुक्तं करोटार्धं तु शेखरम् ॥ ६ ॥
सर्वाभरणसंयुक्तं कटिसूत्रविवर्जितम् ।
शुद्धश्वेतानिभं प्रोक्तं मानं नागविभूषितम् ॥ ७ ॥
दक्षिणे पूर्वहस्तं तु मृगस्याऽऽसक्तकं भवेत् ।
वामे तु पूर्वहस्तं तु वरदं स्यात्कपालधृत् ॥ ८ ॥

दक्षिणे परहस्ते तु डमरुं च धरेद्द्विज ।
वामे तु शिखिपिञ्छं च कर्तव्यं शीतलं धृतम् ॥ ९ ॥
सितवस्त्रोत्तरीयं तु नागेन कटिवेष्टितम् ।
श्वेतयज्ञोपवीतं तु नीलवर्णत्रिपुण्ड्रधृत् ॥ १० ॥
पद्मपीठोपरिष्टात्तु शेषं कङ्कालमूर्तिवत् ॥ ११ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे भिक्षाटनमूर्तिलक्षणं नाम
चतुःसप्ततितमः पटलः ।

---

॥ अथ पञ्चसप्ततितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण चण्डेशानुग्रहं परम् ।
उमासहितवत्सर्वं वामे किंचिन्नतानतम् ॥ १ ॥
दक्षिणे त्वभयं वर्ज्य तथा त्वाभरणं भवेत् ।
मवा(तद्वा)मे पटकं न्यस्य अधस्ताच्चण्डमूर्तिनाम् ॥ २ ॥
हृदयाञ्जलिसंयुक्तौ हस्तौ तदभिसंयुतम् ।
आसनादिसुखासीनं चण्डेशं वर्णसंनिभम् ॥ ३ ॥
देवीदेवेश्वरी मध्ये स्कन्दमूर्तिं विना बुधः ।
चण्डेशानुग्रहं ख्यातं दक्षिणं कीर्तितं परम् ॥ ४ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे चण्डेशानुग्रहो नाम
पञ्चसप्ततितमः पटलः ।

---

॥ अथ षट्सप्ततितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण दक्षिणामूर्तिलक्षणम् ।
लम्बयेद्दक्षिणं पादं वामाङ्घ्रिनन्द्[का]ग्रकम् ॥ १ ॥
सव्याङ्घ्र्यग्रं निधातव्यं वामपादं तु शाययेत् ।
लम्बाद्दक्षिणे सव्ये नेत्रान्तं तत्पुटान्तके ॥ २ ॥
यवत्रयान्तरं नीत्वा लम्बय नाभेस्तु मध्यमे ।
मेढ्रमूलं तु मध्ये स्यात्पूर्ववत्सूत्रं प्रलम्बयेत् ॥ ३ ॥

नतमत्यर्थमात्रं स्याच्चतुर्भुजसमन्वितम्।
दक्षिणे पूर्वहस्ते तु अक्षमालाधरं परम्॥ ४॥
वरदं पूर्वहस्त स्याद्दण्डहस्तमथापि वा।
वामजानूपरिष्टाच्च वरदे तलपृष्ठकम्॥ ५॥
वामजानूपरिष्टात्तु दण्डके कूर्परान्न्यसेत्।
वामे चापरहस्तं तु वह्निर्वा व्यालमेव वा॥ ६॥
अर्धेन्दुवक्त्रं सर्वाङ्गं मम दास्यति कोपकम्। (?)
विकीर्णमूर्धजं वाऽपि जटामण्डलमेव वा॥ ७॥
वामे धत्तूरनागौ च दक्षिणे चन्द्रशेखरम्।
हसितं वक्त्रसंयुक्तं सर्वाभरणभूषितम्॥ ८॥
सितवस्त्रोत्तरीयं च सितयज्ञोपवीतिनम्।
त्रिनेत्रं धवलं वामे सव्ये मकरकुण्डलम्॥ ९॥
कर्णौ तु पत्रशङ्खं स्यात्कुण्डलैर्वाऽथमण्डितम्।
रुद्राक्षे(क्षैः) कण्ठमालाभा द्(भिर्हे)म्नाभ्यां च
विभू(लाभिश्च भू)षितम्॥ १०॥
व्याघ्रचर्माम्बरोपेतं सर्वक्लेशविवर्जितम्।
नारदो जमदग्निश्च वसिष्ठो भृगु दक्षिणे॥ ११॥
भरद्वाजश्च शुनकश्चागस्त्यो वामपार्श्वके।
वन्दितं किन्नराद्या(द्यै)स्तु वटवृक्षसमाश्रिताः(तैः)॥ १२॥
अपस्मारोपरिष्टात्तु लम्बपादतलं न्यसेत्।
सूत्रं तत्पादपार्ष्ण्यं तु वेदं स्यान्मनुमानकम्॥ १३॥
सूत्रं तत्पादजान्वोस्तु द्व्यन्तरं मानुमानकम्।
श्यामवर्णमपस्मारं नागलीलासमन्वितम्॥ १४॥
धर्मव्याख्यानमित्येवं कल्पयेत्तल्पवित्तमः।
तदेव वामपादेनत्वु[त्कुट्टा]सनसंयुतम्॥ १५॥
पूर्वहस्तद्वयोर्वीणाधृतं युक्त्या द्विजोत्तम।
शेषं प्रागिव कर्तव्यमेतद्वीणाधरं परम्॥ १६॥
तदेव वीणाहीनं तु ज्ञानमुद्राभयान्वितम्।
वाम प्रसारितं हस्तं वामजान्वोर्ध्वको(कू)र्परम्॥ १७॥
दक्षिणे तु परे चाक्षमाला वामेऽब्जमुत्पलम्।
शुद्धस्फटिकसंनिभं वर्ण शेषं पूर्ववदाचरेत्॥ १८॥

ज्ञानमूर्तिरिति ख्यातं सर्वालंकारसंयुतम् ।
अन्योन्याङ्घ्रितलं विप्र रिपत्रिपण्डाय (यः) प्रकल्पयेत् ॥ १९ ॥
ज्ञानमुद्रा दि(ह)दिस्थरि(ने) त्वभ्यन्तरधृतं करम् ।
वरदं वामहस्ते तु मेढ्रपीठोपरि न्यसेत् ॥ २० ॥
दक्षिणे चाब्जमालां(वा) मालाऽब्जं वामहस्तके ।
नासाग्रं तु समीक्ष्याथाचार्जवं सूत्रभेदकाः ॥ २१ ॥
अपरे तु जटालम्बमृषिभिः सेवितं परम् ।
योगमूर्तिरिति ख्यातं ध्याने दुःखनिवृत्तिदम् ॥ २२ ॥
लम्बयेद्दक्षिणं पादं वाममुत्कुटिकासनम् ।
योगपट्टं तथा बद्ध्वा देहं चोत्कुटिकाङ्घ्रिके ॥ २३ ॥
प्रसार्य वामहस्तं तु वामजानूपरि द्विज ।
प्रागिवैव कृतं शेषं तदपि योगमूर्तिवे(वत्) ॥ २४ ॥
ऊरू मूर्ध्नि समायुक्तौ अन्योन्यं पादपार्ष्णिकौ ।
योगपट्टिकयोपेतं जङ्घामध्यं द्विजोत्तम ॥ २५ ॥
प्रसार्य पूर्वहस्तौ तु जानूपरि निधापितौ ।
अपरे दक्षिणे चाक्षो वामक्ष(क्षमाला वा)मे कमण्डपः(लुः) ॥२६॥
जटामण्डलसंयुक्तं करोष्या(टया) चन्द्रशेखरम् ।
नीलग्रीवासमायुक्तं अट्टहासकुन्देन्दुसंनिभम् ॥ २७ ॥
अपरे चार्पयेद्वक्षः नानासर्पविभूषितः ।
हैन्मालाकर्णमालाद्यादूर्ध्ववक्षोविराजितम् ॥ २८ ॥
वटवृक्षं समाश्रित्य ऋषिभिः सेवितं परम् ।
योगमूर्तिरिति ख्यातं सर्वपापहरं परम् ॥ २९ ॥
एवं [चा]निकभेदेन दक्षिणामूर्तिलक्षणम् ॥ ३० ॥

इत्यंशुमद्भेदे काश्यपशिल्पे दक्षिणामूर्तिलक्षणं नाम षट्सप्ततितमः पटलः ।

---

॥ अथ सप्तसप्ततितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण कालहामूर्तिलक्षणम् ।
वसुनन्दं तु देर्घ्यं वा न(भाग)मानं द्विजोत्तम ॥ १ ॥

सूत्रं भान्वङ्गुलं वाऽथ नेत्रसूत्रं मयोच्यते ।
ललाटदक्षिणे सव्ये तन्त्रमध्ये तथैव च ॥ २ ॥
हिक्कासूत्रं च वामे तु वामस्तनाक्षं दक्षिणे ।
नाभिमध्ये तु वामे तु सूत्रान्तरं यवाष्टकम् ॥ ३ ॥
मेढ्रमूलस्य मध्ये तु वामे षडङ्गुलं न्यसेत् ।
स्थिताङ्घ्रिगुल्फमध्ये तु पूर्वसूत्रं प्रलम्बयेत् ॥ ४ ॥
देवस्य दक्षिणं पादं पद्मपद्मोपरि स्थितम् ।
प्रथमं नृत्तमूर्तिस्तु दक्षिणे स्थितपादवत् ॥ ५ ॥
वामपादं प्रसार्यास्य कुञ्चितं तलमुद्धृतम् ।
अङ्गुष्ठमुद्धृतं चाग्रे कालस्य हृदयं न्यसेत् ॥ ६ ॥
सुदंष्ट्रः स्यात्त्रिनेत्रं च जटामुकुटमण्डितम् ।
चतुर्भुजसमायुक्तमष्टहस्तमथापि वा ॥ ७ ॥
दक्षिणे पूर्वहस्तं तु शूलं खट्वाङ्गमुद्धृतम् ।
दक्षिणे परहस्तं तु परशुं वरदं तथा ॥ ८ ॥
वामे पूर्वकरं नाभिसीमान्तं सूच्यतो(धो)गतम् ।
सूच्यग्रं पूर्वसूत्रान्तं कलाम(प)ञ्चाङ्गुलं तु वा ॥ ९ ॥
कर्णशूलधरे हस्ते मणिबन्धान्तरं बुधः ।
वामे तु परहस्तं तु विस्मयं परिकल्पयेत् ॥ १० ॥
हिक्कासूत्रं समं टङ्काकरद्वयान्तरं मुखम् ।
उष्णीषान्तं समुद्धृत्य विस्मयोऽनामिकाग्रकम् ॥ ११ ॥
कण्ठान्तं मणिबन्धान्तं शूलहस्ते समान्तरम् ।
चतुर्देवे(र्हस्ता)स्यमारव्यातमष्टहस्तमथ शृणु ॥ १२ ॥
शूलं परशुवज्रं च खड्गं दक्षिणहस्तके ।
द्विभुजं वा द्विपादं वा सुदंष्ट्रं पादपाणिकम् ॥ १३ ॥
करण्डमुकुटोपेतं मसूर्यारास्यानिर्गमम् ।
महाभव्यसमायुक्तं सपाशं हृदयं चलम् ॥ १४ ॥
विकीर्णकेशकं दृष्ट्वा शाययेदूर्ध्ववक्त्रकम् ।
कालहामूर्तिमेवं हि प्रोक्तं लिङ्गोद्भवे तथा ॥ १५ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे कालहामूर्तिलक्षणं नाम
सप्तसप्ततितमः पटलः ।

॥ अथाष्टसप्ततितमः पटलः ॥

अथ वक्ष्ये विशेषेण लिङ्गोद्भवमिदं शृणु ।
लिङ्गाकारस्य मध्ये तु चन्द्रशेखरमूर्तिवत् ॥ १ ॥
नलका पाद(काऽङ्घ्रि)तलाविम लिङ्गगूढसमन्वितम् ।
पितामहस्वरूपेण ऊर्ध्वाङ्गं वामपार्श्वके ॥ २ ॥
विष्णुवाहनरूपेण दक्षिणांशं तथागतम् ।
विष्णुर्दक्षिणपार्श्वे तु वामपार्श्वे पितामहः ॥ ३ ॥
हृदयाञ्जलिसंयुक्तौ स्थितौ तु लिङ्गमुच्यते ।
रक्तश्यामहिरण्याभं लिङ्गविष्णुपितामहम् ॥ ४ ॥
एवं लिङ्गोद्भवं ख्यातं वृक्षसंग्रहणं शृणु ॥ ५ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे लिङ्गोद्भवलक्षणं नामा-
ष्टसप्ततितमः पटलः ।

॥ अथैकोनाशीतितमः पटलः ॥

अथ वक्ष्ये विशेषेण वृक्षसंग्रहणं परम् ।
देवानां चैव देवीनां शूलार्थं वृक्षमुच्यते ॥ १ ॥
स्त्रीपुंनपुंसकं चेति वृक्षभेदं त्रिधा भवेत् ।
*सुषिरं स्निग्धभूमौ वाऽऽकर्णवीर्यं दृढं स्वस(न)म् ॥ २ ॥*
अल्पगन्धसमायुक्तं फलं पुष्पं दृढं घनम् ।
शीतलोष्णं च संमिश्रं ल(म)नोहरसमन्वितम् ॥ ३ ॥
एतत्पुल्लिङ्गमाख्यातं देवानां तदिहोच्यते ।
स्निग्धे स्निग्धं च भूमौ वा त्वार्जयित्वाऽतिमार्दवम् ॥ ४ ॥
मूलादग्रात्क्रमात्क्षीणं पुष्पं चैव मलम्बनम् ।
अतिमार्दवसंयुक्तमतिशीतलसंयुतम् ॥ ५ ॥
अतिस्नेहसमायुक्तं रसश्चैव समाश्रयेत् ।
एतत्स्त्रीवृक्षमाख्यातं देवीनां शूलयोग्यकम् ॥ ६ ॥

क्षीणमूलं समारयातं फलशुष्पं तथैव च ।
अतिदुर्बलमारयातं यत्तत्पण्ड(ण्ढ)मुदाहृतम् ॥ ७ ॥
चन्दनं चम्पकं चैव रक्तचन्दनमेव च ।
चालं च खादिरं चैव सोमशीर्षादिदुक्तकम् ॥ ८ ॥
अर्धनारीशिवं चैव राजातं च मयूरकम् ।
पद्मकं कुटजं चैव सप्तपर्णं च सत्वकम् ॥ ९ ॥
शूलयोग्यं क्रमात्ख्यातं तेष्वन्यस्यद्दं ग्रहेत् ।
जीर्णपर्णान्तभिस्याबाऽगिरशून्याग्निशिखिना ॥ १० ॥
स्वयं पतितवृक्षं च स्वयमेव तु शोषितम् ।
फटकाठरसंयुक्तं व्यालपक्ष(क्षि)समाश्रितम् ॥ ११ ॥
नृपमन्दिरमाश्रित्य कर्मकारालयान्वितम् ।
अग्निदग्धाश्च वृक्षाश्च कर्मान्तरनियोजिताः ॥ १२ ॥
वर्जयेत्तु प्रयत्नेन गृहीते कर्मनाशनम् ।
तस्मात्सर्वप्रयत्नेन दोषाढ्यान्परिवर्जयेत् ॥ १३ ॥
शास्त्रपक्षार्कवारेषु शास्त्रवृक्षाश्च संग्रहेत् ।
आचार्यः शिल्पकर्ता च वृक्षस्थानं तु संव्रजेत् ॥ १४ ॥
वृक्षादधस्ताक(तृ)णादि व्यपोह्य लेपनं कुरु ।
एतन्मन्त्रं समुच्चार्य अष्टदिक्षु बलिं क्षिपेत् ॥ १५ ॥
एतद्वृक्षाश्रिता देवा दानवाश्च पिशाचकाः ।
नागा गरुडगन्धर्वाः सिद्धविद्याधराश्च ये ॥ १६ ॥
अयं बिम्बार्थवृक्षस्तु गच्छन्त्वं र(स्व)हिताय वै ।
इत्यु(क्त्वा) च बलिं दद्यादध्यर्जात(घ्योदनं) सपुष्पकम् ॥ १७ ॥
रक्तचन्दनसंयुक्तं गन्धतोयसमन्वितम् ।
वृक्षस्यैशानदिग्भागे पिता(कर्ता) होमं समाचरेत् ॥ १८ ॥
स्थण्डिलं सैकतं कुर्याद्धस्तमात्रप्रमाणकम् ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ १९ ॥
समिदाज्यचरुभिस्तु होमं कृत्वा शिवं द्विजः ।
समिधो हृदयेनैव मूलेनाज्यं च होमयेत् ॥ २० ॥

अघोरेण चरुं हुत्वा मत्येनाष्टशताहुतीः ।
जयादिरभ्यातानैश्च राष्ट्रभृच्चैव(भृद्भिश्च) होमयेत् ॥ २१ ॥
ततस्त्वग्निं समुद्धारय वृक्षं प्रोक्ष्य शिवाम्भसा ।
शिवात्मनेतिमन्त्रं तु जपाद(पन्त्य)न्तं स्पृशेद्बुधः ॥ २२ ॥
वृक्षस्य पूर्वभागे तु मुखं पृष्ठं तु पश्चिमे ।
दक्षिणं सव्यपार्श्वं स्याद्वामपार्श्वं तथोत्तरम् ॥ २३ ॥
शास्त्रैवाऽऽलक्षयित्वा तु तस्य च्छेदनमाचरेत् ।
अस्त्रमन्त्रं जपेत्पुण्यं मूलं त्रिरछेन्नलक्षयेत् ॥ २४ ॥
क्षीरतोयद्रुप(म)श्चेष्टस्तुबस्तुवार्थे तु शोभनम् ।
अस्त्रस्तुवेण मन्त्रेण शान्तिहोमं समाचरेत् ॥ २५ ॥
वृक्षमूलं तु शेषं तु स्थपतिर्जपयेत्क्रमात् ।
पूर्वे चोत्तरदेशे तु वृक्षस्यातप(स्य पत)नं शुभम् ॥ २६ ॥
अन्यदिक्पतितं वृक्षं वर्जयेत्तु प्रयत्नतः ।
स्कन्ट(न्ध)च्छेदं ततः कुर्यादञ्जयश्चान्तरं कुरु ॥ २७ ॥
गन्धैर्गन्धोदकैः स्नाप्य गन्धमाल्यैरलंकृतम् ।
नववस्त्रेण संछाद्य दर्भाभि(णा) सूक्ष्मरज्जुना ॥ २८ ॥
स्यन्दने शिबिका रोप्य स्कन्धे धृत्वाऽथवा बुधौ(धः) ।
धृत्वा शशब्दं तत्वा कर्ममण्डपमाविशेत् ॥ २९ ॥ (?)
मण्डपमार्जनं कृत्वा गोमयालेपनं कुरु ।
गन्धैर्गन्धोदकैः मा(मा)ल्यगन्धमाल्यैरलंकृतम् ॥ ३० ॥
द्विप(पिष्ट)चूर्णैरलंकृत्वा तन्मध्ये पूर्णवा बुधः ।
स्थण्डिलं कारयेद्विद्वान्मूलदीर्घसमायतम् ॥ ३१ ॥
विस्तारार्धं तदर्धं वा चतुरङ्गुलमुत्तमम् ।
प्रागग्रैः शा(अं स्या)मयेत्तस्मिन्स्थू(न्छ्र)न्तृशस्य(म)घोपुरवम् ३२
आशुष्के रक्षयेद्विद्वान् समं पक्षमथापि वा ।
पक्षादूर्ध्वं तु कर्तव्यं त्वरितं तु न कारयेत ॥ ३३ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे वृक्षसंग्रहणं नामै-
कोनाशीतितमः पटलः ।

---

॥ अथाशीतितम पटल ॥

अथ वक्ष्ये विशेषेण शूललक्षणमुत्तमम् ।
शुद्धकायश(स)मं वेश्म दण्डदीर्घमुदाहृतम् ॥ १ ॥
मध्योदरं विशालं स्याच्चतुर्भागैकविस्तरम् ।
मूलादष्टांशहीने तु तस्याग्रस्य समं भवेत् ॥ २ ॥
नाभ्यन्तं चतुरश्रं तु हिक्कान्तं वसुकोणकम् ।
तदूर्ध्वे हस्तमारयातं शेषं वृत्तं तथैव च ॥ ३ ॥
द्वात्रिंशदङ्गुलायामं चैकदण्डायतं भवेत् ।
विस्तारं सार्धपञ्चाङ्गं सार्धसप्ताङ्गुलं तु वा ॥ ४ ॥
विस्तरार्धं घनं ख्यातं पक्षदण्डान्तमुच्यते ।
अग्रं युगाङ्गुलं ख्यातं मध्यादग्रं क्रमात्कृशम् ॥ ५ ॥
पक्षदण्डस्य मध्ये तु छिद्रं चाऽर्धं गुणाङ्गुलम् ।
हिक्कासूत्रोदयस्यार्धं यावद्वेद(द)शाङ्गुलम् ॥ ६ ॥
पक्षदण्डोर्ध्वसीमा स्याद्वंशदण्डे तु योजयेत् ।
षोडशाङ्गुलमायामं कटिदण्डस्य देशिकः ॥ ७ ॥
वस्वङ्गुलं तु तत्तारं घनं वेदाङ्गुलं भवेत् ।
मध्ये युगाङ्गुलं छिद्रं तारं पञ्चाङ्गुलोदयः ॥ ८ ॥
कटिदण्डोर्ध्वसीमाद्या द्वंशदण्डे तु योजयेत् ।
पक्षदण्डाद(श्र)यो विप्र कटिदण्डाश्रयोऽपि वा ॥ ९ ॥
यथाबलकाशकं कुर्यादनेन विधिना कुरु ।
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टकरं तु वा ॥ १० ॥
द्विमुखोऽपि तु कारि यत्तु संख्या वक्त्रिशिरान्वितम् । (?)
द्व्यङ्गुलं तु शिखायाममस्तं संख्योचितस्तु तम् ॥ ११ ॥
पक्षदण्डे विशालं तु हस्तसंख्या तु भाजिते ।
शिलान्यासं तदेवाग्रं मान्ताग्रे तु क्रमात्कृशम् ॥ १२ ॥
कटिदण्डाश्रयं द्व्येकं शिखायामं गुणाङ्गुलम् ।
सार्धाङ्गुलं तु तत्तारं वृत्तं तत्समतद्घनम् ॥ १३ ॥

स्थानकं सकलं चेत्तु मा(ऊ)रुदीर्घपरिद्विज ।
अष्टाङ्गुलं समारोप्य ऊरुमूलायतं भवेत् ॥ १४ ॥
सुवीतं सकले चोरुदीर्घादूर्ध्वाष्टमातृ(त्र)कम् ।
ऊरुमूलसुषिं कृत्वा कटिदण्डाग्रयोर्बुधः ॥ १५ ॥
शिखायां तु समायोज्य यावद्धल(ना)न्तरं यथा ।
जानुमात्रं द्विधा कृत्वा ऊरुजङ्घान(न्त)योरपि ॥ १६ ॥
आरोहयेच्छिखामानं तस्मादारोपयेद्बुधः ।
गुणाङ्गुलं शिखामानं जङ्घादीर्घोरुपर्युत्तम् ॥ १७ ॥
मध्यबिन्दुसमायुक्तमूर्ध्वाग्रं तु शिखान्वितम् ।
जङ्घानागेफताभ्यासं उदाहृतम् ॥ १८ ॥
ऊर्ध्वाश्रयोजस्निग्धासाग्रहस्थ(स्त)शिखरं बुधः ।
गुणाद्गुलं शिखामानं जानुसंधिछिनावधा(ध्युच्छ्रितावधि ॥१९॥
संधिमिभाश्रशूलं तु एक एव विधीयते ।
जङ्घादीर्घोपरिष्टात्तु तले मानं तु रोपयेत् ॥ २० ॥
ऊरमध्ये त्रिभागैनमूरुदण्डस्य विस्तृतम् ।
तस्याग्रं तु त्रिपादं स्याज्जङ्घामूलं च तत्समम् ॥ २१ ॥
ङ्घामूलत्रिभागैकं हीनं जङ्घाग्रविस्तृतम् ।
क्रियापादतलायामं कृत्वा भागं च वाऽऽयतम् ॥ २२ ॥
तल्लाग्रविस्तृतं द्वित्रिद्व्यर्धं (तु) रिस्तृतान्वितम् ।
एतत्पादतलव्यास जङ्घायतापरेस्थितम् ॥ २३ ॥
कर्तव्यं सुषिरं तत्तु जङ्घाग्रास्थ(स्त् )त्रिकायुतम् ।
योज्य त्रिधं दृढं कृत्वा पद्गिगूल्मयोन्यते ॥ २४ ॥
बाहुमूलविशालं तु गुणाद्गुलमुदाहृतम् ।
अग्रद्व्यद्गुलं व्यासं प्रोष्ठमूलं च तत्समम् ॥ २५ ॥
सार्धद्व्याद्गुलं वाऽथ प्रोष्ठमूलविशालकम् ।
तन्मूलविस्तृतार्थ(र्धं) स्यात्प्रकोष्ठाग्रविशालकम् ॥ २६ ॥
बाहुप्रकोष्ठयोश्चैव कूर्परा जानुवद्भवेत् ।
द्व्यद्गुलं तु शिखामानं योजयेत्तद्दृढं यथा ॥ २७ ॥
पार्श्वयोरर्धनं चैव प्रोष्ठदण्डे तु योजयेत् ।
अनिपसान्तरं दीर्घं तद्व्यासं तु गुणाद्गुलम् ॥ २८ ॥

वंशदण्डसमानश्च ऊर्ध्वकायस्तथान्वितम् ।
अग्रे तु पक्षदण्डे तु मूलदण्डे तु योजयेत् ॥ २९ ॥
स्वाग्रमूले तदा तस्य पार्श्ववंशे द्वयोपरि ।
हस्तपादतलाग्रेऽत्र ताम्रपात्रेण योजयेत् ॥ ३० ॥
आर्जयेद्वस्त्रबिम्बे वा शूलश्चैवावदं कुरु ।
देवानां शूलमेवं स्यादम्बराणां तु वक्ष्यते ॥ ३१ ॥
मध्योदरं त्रिभाज्यैव एकांशं वंशविस्तरम् ।
अष्टांशं हीनमग्रं स्याद्विशालं तस्य सूत्रकम् ॥ ३२ ॥
बाहुपर्यन्तविस्तारं वा तन्य(स्या)र्धमिवार्जितम् ।
पक्षदण्डायतं शेषं तस्यार्धं विस्तृतं भवेत् ॥ ३३ ॥
तदर्धं बाहुदं स्यात्तं कटिदण्डमथोच्यते ।
कटितारेण भूतांशं युगांशेनान्तदीर्घकम् ॥ ३४ ॥
शेषं प्रागिवकर्तव्यं कथ्रहेपमथ शृणु ।
आसने वंशदण्डं तु षडङ्गुलं तु रेखयेत् ॥ ३५ ॥
युगांशं पृष्ठमानं तु शेषं कतेशुपोशनम् ।
जङ्घादण्डान्त वि(प)ण्मात्रं देवयेत्स्थानके बुधः ॥ ३६ ॥
गर्भाग्रं तु भवेधं तु ततोऽधस्थं तु सङ्गवेत् ।
शूलमेवं समाख्यातमुपशूलमथोच्यते ॥ ३७ ॥
भित्तिमध्यं समारभ्य पक्षदण्डकरान्तकम् ।
उपशूलायतं प्रोक्तमष्टाङ्गुलं नतं भवेत् ॥ ३८ ॥
वेदाङ्गुलं तु तन्नीत्रं शूलयोग्यं समे बुध. ।
शूलव्याससमं बध्याच्छिद्रं तद्द्विशदान्वितम् ॥ ३९ ॥
भित्तिमध्यं तु मूलं स्यान्मूलं बध्वा दृढं बुधः ।
पक्षदण्डं कटीदण्डं धृत्वा शूलाख्यशूलकम् ॥ ४० ॥
छिद्रे दृढतरं बद्ध्वा तत्परे कीलबन्धितम् ।
उपशूलविधानं च पक्षदण्डपुरं समम् ॥ ४१ ॥
उपशूलशिखायां तु वंशाग्रे सुषिरं कुरु ।
लोहजं दारुजं वाऽथ कीलकं योजयेद्दृढम् ॥ ४२ ॥

त्रिम्बार्थे शूलमाख्यातं तस्मादुक्तं समाचरेत् ।
शूललक्षणमाख्यातं शूलस्थापनमुच्यते ॥ ४३ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे शूललक्षणं नामा-
शीतितमः पटलः ।

॥ अथैकाशीतितमः पटलः ॥

अथ वक्ष्ये विशेषेण शूलस्थापनमुत्तमम् ।
कर्मणा[शुद्धि]ति मासे रि(ऋ)क्षे वारे सुलग्नके ॥ १ ॥
निश्चित्य स्थापनं तस्य पुरः कृत्वाऽङ्कुरार्पणम् ।
प्रासादस्याग्रतो देशे मण्डपं चतुरश्रकम् ॥ २ ॥
पञ्चसप्तकरं वाऽथ पदत्रयसमायुतम् ।
षोडशस्तम्भ[सं]युक्तं द्वादशस्तम्भसंयुतम् ॥ ३ ॥
तलमष्टाङ्गुलोत्सेधं प(भि)त्तिव्यासवितुङ्गकम् ।
यथालाभं परीणाहं वामकं नीव्रणं दृढम् ॥ ४ ॥
वलयं वेदनासाढ्यं नालिकेरफलादिभिः ।
स्था(स्था)पयेत्तु विधानेन मुक्ताग्रं दर्भमालिका ॥ ५ ॥
तरङ्गवेष्टनोपेतं वरतोरणसंयुतम् ।
चतुर्द्वारसमायुक्तं स्तम्भवेष्टनसंयुतम् ॥ ६ ॥
चतुर्द्वारं विनाऽन्यच्च निश्छिद्रं जालकं तु वा ।
मण्डपस्य त्रिभागैकं वेदिकोदयमुच्यते ॥ ७ ॥
गुणाङ्गुलं विनाऽन्येश(षं) मध्यायोद्धतवेदिका ।
दर्पणोदरसंकाशं कृत्वा स्थं दृढं लिखेत् ॥ ८ ॥
परितश्चाग्निकुण्डानि अनेन विधिना कुरु ।
चतुरश्रं चतुर्वृत्तं पद्मपूर्वादिदिक्षु च ॥ ९ ॥
प(प)श्चिमशान्योर्मध्ये वृत्तकुण्डं प्रकल्पयेत् ।
कुण्डमेवं समाख्यातं केवलानां विशेषतः ॥ १० ॥
गोरीगणादिबिम्बं चेदन्यत्रोणेपर्पचक्रयत् ।
कुण्डानि चान्यथेच्छेपं शार्गिवत्र प्रकल्पयेत् ॥ ११ ॥

कुण्डलक्षणवत्कुर्यात्सर्वकुण्डानि देशिकः ।
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् ॥ १२ ॥
ब्राह्मणान्भोजयेत्तस्मिन्पुण्याहं वाचयेत्ततः ।
महेन्द्रस्तु पदं यावद्धोमं कृत्वा विधानतः ॥ १३ ॥
वेदिका (चा)श्चाग्निकुण्डं च पर्यग्निकरणं कुरु । ।
निर्दिष्टादिवसात्पूर्वे रात्रौ (त)दधिवासनम् ॥ १४ ॥
स्थण्डिलं वेदिकाया तु अष्टद्रो(णै)श्च शालिभिः ।
कर्तव्यं नालिकेरस्य साष्टपत्रं सकीर्ण(कर्णि)कम् ॥ १५ ॥
तण्डुलैस्तिलदर्भैश्च रा(ला)जपुष्पैरलंकृतम् ।
शयनं चाहतेनैव वस्त्रेणैव प्रकल्पयेत् ॥ १६ ॥
धूपदीपैः समायुक्तं पुष्पगन्धैः समर्चयेत् ।
मण्डपं यो(स्यो)त्तरे पार्श्वे स्नानशुभ्रं प्रकल्पयेत् ॥ १७ ॥
तन्मध्ये दारुपीठं तु न्यस्या(स्येत्त)स्योपरि द्विज. ।
प्राङ्मुखं स्थापयेच्छूलं पञ्चगव्याभिषेचितम् ॥ १८ ॥
शुचि ह्व्येति मन्त्रेण कृत्वा गन्धोदके(दै)दः ।
स्थापयेद्देवं देवी च गन्धपुष्पैः समर्चयेत् ॥ १९ ॥
कौतुकं बन्धयेद्देवास्ततो दक्षिणहस्तयोः ।
स्वर्णकार्पाससूत्रैर्वा कवचैरेव बन्धयेत् ॥ २० ॥
लम्बकूर्चसमायुक्तं वाद्यध्वनिसमायुतम् ।
शयनं स्था(स्था)पयेच्छूलं प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥ २१ ॥
तस्य वामे ह्युमादेवी शूलं वै शाययेत्सुधीः ।
तयोः शिरोऽग्निके देशे स्थापयेत्तु पट्टद्वयम् ॥ २२ ॥
सूत्रं सर्वाभिधानं च सकूर्चं धस्त्रवेष्टनम् ।
द्रोणकुम्भाम्बुसंपूर्णं शिवकुम्भं तदुच्यते ॥ २३ ॥
तस्यार्धं तोयसपूर्णं प्राग्वत्सूत्रादिभिर्युतम् ।
गौरीबीजसमायुक्तं गोत्र(गौरी)कुम्भमिदं परम् ॥ २४ ॥
तन्मूलमन्यमं कुम्भं न्यस्य कुम्भा(गन्धा)दिभिर्यजेत् ।
गौरीकुम्भे तु तस्यारतु मन्त्रं न्यस्य विशेषतः ॥ २५ ॥
परितोऽष्टघटान्न्यस्य सूत्राद्यैश्च समन्वितान् ।
विद्येशान्मूलमन्त्रैश्च स्थाप्य गन्धादिभिर्यजेत् ॥ २६ ॥

वास्तुहोमादिकुण्डे तु अग्निं संस्थाप्य देशिकः ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ २७ ॥
अग्न्यर्थं पूर्वकुण्डे तु वह्निमाग्नेयगोचरे ।
याम्ये चौदुम्बरं ख्यातं खादिरं नै(र्ऋ)र्ति द्विज ॥ २८ ॥
बिम्बं पश्चिमभागे तु मयूरं वायुगोचरे ।
पर्टं वै सौम्यकुण्डे तु खादिरं वास्तु देशिकः ॥ २९ ॥
प्रधाने ब्रह्मवृक्षः स्यात्समिद्धोरि(द्गौरी)समन्वितम् ।
विद्याकुण्डेषु कुण्डानि गौरीहीनानि कारयेत् ॥ ३० ॥
समिदो हृदयेनैव पुरुषेण घृताऽऽहुतीः ।
अघोरेण चरुं हुत्वा दा(स्वा)र्वां वामे तु होमयेत् ॥ ३१ ॥
चरुस्मिन्शाण(मीशान)मन्त्रेण तिलं वै शिरसाहुतिः ।
सर्षपं कवचेनैव शिखामङ्गलमुच्यते ॥ ३२ ॥
गलमस्त्रेण मन्त्रेण मत्यहं जुहुयाच्छतम् ।
पच्यते व्याहृतिं हुत्वा देवदेव्युचितं समम् ॥ ३३ ॥
जयादिभि(र्ये)रभ्यातानेश्च राष्ट्रभृद्भैव(द्भिश्च) होमयेत् ।
दिशास्वध्यायतं वेदांस्तोत्रैस्तु[हि]शिखामुखैः ॥ ३४ ॥
अध्यानं कृततोदग्रमुपांशुं होमयाचरेत् ।
देवदेवीशयोर्मूलमन्त्रैरष्टादशाऽऽहुतीः ॥ ३५ ॥
घृताहुतीस्तु कर्तव्यं भस्मस्नानमतः परम् ।
शुक्लवस्त्रोत्तरीयं च शुक्लयज्ञोपवीतधृत् ॥ ३६ ॥
शुक्लमाल्यानुलेपाद्यैस्त्रिषु पञ्चाङ्गभूषणैः ।
पवित्रपाणिनोपेतः सकलीकृतविग्रहः ॥ ३७ ॥
आचार्यः सुप्रसन्नात्मा (त्मा) शिवद्विजकुलोत्तमः ।
प्रविश्य गर्भगेहे तु एकाशीतिपदं कुरु ॥ ३८ ॥
मण्डूकाग्न्यपदं वाऽथ सप्तसप्तांश एव वा ।
गर्भगेहे तु कर्तव्यं ज्ञात्वा ब्रह्मोदयं परम् ॥ ३९ ॥
स्थानकं दैविकांशे तु आसनं मानुषे पदे ।
गर्भगेहपदे भागे स्थापयेद्देशिकोत्तमः ॥ ४० ॥
आसनं भद्रपीठेन स्थानकं वेदिकोपरि ।
मागुक्तविधिना पीठव्यासायामो(मो)दयान्वयः ॥ ४१ ॥

कर्तव्यं सुन्दरं तस्मिन्नाधाराख्याशिलां न्यसेत् ।
पीठग्राह्यत्रिपादं तु आसा(धा)राख्यशिलातलम् ।। ४२ ।।
समग्रमायतं वाऽपि तदर्धं तद्धनं भवेत् ।
स्थानकं सकलं चेत्तु पादाधस्ताद्द्विजोत्तम ।। ४३ ।।
आधाराख्याशिलायां तु रत्नाङ्गुल्यं प्रकल्पयेत् ।
निम्नं षडङ्गुलं ख्यातं कर्तव्यं सगुणाङ्गुलम् ।। ४४ ।।
मूले तु नवरत्नं वा होमपात्रं विनिक्षिपेत् ।
शूलपादतलाधस्तात् षण्मात्रं वाऽऽयतान्वितम् ।। ४५ ।।
प्रागेव कल्पयेद्धीमान्स्थापनार्थं वलान्वितम् ।
प्रवेशेग(विशेद्र)भेगेह(हं) तु मूलमन्त्रं समुच्चरन् ।। ४६ ।।
स्थापयेत्तु पदे शूलं मूलमन्त्रं दृढं तथा ।
अष्टबन्धं दृढं कृत्वा सुधया च विशेषतः ।। ४७ ।।
तस्य वामे तथा स्थाप्यं गौरीशूलं विशेषतः ।
आधाराख्याशिलायां च गर्भभाजनमाग(य)तम् ।। ४८ ।।
पञ्चपदसमात्रं वा गर्तन्यासं तथा तस(सम)म् ।
गर्भन्यासं तु तत्रैव गर्भभाजनसंयुतम् ।। ४९ ।।
प्रागुक्तविधिना सम्यग्गन्धपुष्पादिभिर्यजेत् ।
स्थापयेत्पूर्ववच्छूलं मूलं वै द(ग)र्भभाजनम् ।। ५० ।।
अथाशेषं तु यत्कर्म शिल्पिभिस्तु विशेषतः ।
कर्तव्यं लक्षणोपेतं स्थपतिः शिल्पिरुच्यते ।। ५१ ।।
स्थपतिः शिल्पकर्मा च योग्या त्व(ग्यस्त्व)न्यस्तु कारयेत् ।
कृतं चेदन्यथा विप्र कर्तुरिच्छा भविष्यति ।। ५२ ।।
आचार्यः पूजयेत्तत्र पञ्चनिष्कं हिरण्मयम् ।
शूलस्थापनमाख्यातं रज्जुबन्धमथ शृणु ।। ५३ ।।

इत्यंशुमद्भेदे काश्यपशिल्पे शूलपाणिलक्षणं नामै-
काशीतितमः पटलः ।

---

॥ अथ द्व्यशीतितम पटलः ॥

अथ वक्ष्ये विशेषेण रज्जुबन्धं सविस्तरम् ।
सर्वशूलस्य बन्धस्तु ताम्रपत्रैः सुवेष्टयेत् ॥ १ ॥
शूलेऽप्यन्यमालिप्य रज्जुबन्धं ततः कुरु ।
श्रीवेष्टकं तुरुष्कं च गुग्गुलं च गुडं तथा ॥ २ ॥
सर्जरं गैरिकं चैव घृततैलेऽप्यबन्धनम् ।
श्रीवेष्टकं चतुर्भागं कुन्दुरुष्कं गुणाक्षरम् ॥ ३ ॥
गुग्गुलं पञ्चभागं स्यादेकांशं गुलमुच्यते ।
सर्जरः स तु वस्वशं गैरिकं तु गुणाह्वलम् ॥ ४ ॥
षडेते सूक्ष्मचूर्णं तु कृत्वाऽऽज्यतलमिश्रताः ।
मृत्पात्रे तु विनिक्षिप्य पचेत्क्षोदादियं वरम् ॥ ५ ॥
तथैव शूलमालिप्य रज्जुबन्धं ततः कुरु ।
रज्जुबन्धस्तु नाडि तु मध्यं स्यादूर्ध्वगं त्रिधा ॥ ६ ॥
सुषुम्ना मध्यमा ख्याता पिङ्गला तस्य दक्षिणा ।
इडा वै तस्य वामस्था प्रधानेनाभ्येयास्तिमे(नोर्ध्वगास्त्विमाः)॥७॥
द्व्यङ्गुलं तु परीणाहं युक्तास्ता वै त्रिवर्तिकाः ।
तेषां नाडीत्रयाणां तु मूलमेढावसानकम् ॥ ८ ॥
तेनास्थिमूलवक्त्रिश्रा नाडीयो(नाड्यो)ऽष्टादशस्तथा ।
विमला घोषिणी शायसचाहहसितेजसा ॥ ९ ॥ (?)
वायाग्निर्गतसी चैव मर्दिनी घोषिणी तथा ।
रसवती मृदङ्गी च स्तिसनी च तथैव च ॥ १० ॥
शब्दस्पर्शादिपूर्णा च सुसिद्धी वारिधारिणी ।
वाहिनीति समाख्याता त्रिपद्संख्या विधानतः ॥ ११ ॥
मस्थरं त्रियवव्यासा त्रिभिर्वर्तिद्विवर्तिका ।
तेष्वादौ रसनाडी तु सर्वपादैकमूलकम् ॥ १२ ॥
उरमूलैः समावृत्त्या परितो नाभिरान्तरम् ।
लम्बितास्ते समाख्याताः सा वै पिङ्गलमूलकम् ॥ १३ ॥
शब्दादीनि [तु] षट्संख्या इडामूले समुद्भवा ।
एषा रं रसनाडीना वामपार्श्वे तु सन्त्यजत् ॥ १४ ॥
नग्नाग्रसमावृत्त्या षण्णामग्रसवर्तिता ।
सुषुम्ना मूलगाः शेषा सव्यपार्श्वाङ्गसंहिताः ॥ १५ ॥

पक्षदण्डोपरिष्टं तु(ष्टात्तु) तिर्यग्बाहुगतारित्वमे ।
गगनी मर्दनी चैव रोहिणी दक्षिणे करे ॥ १६ ॥
रसावादि(वर्ती)मृदङ्गी च सृक्किसना(सिंसनी) वामबाहुका ।
बाहुमूले समाहृत्य त्रिप्त्वग्रं चैव(क)बन्धयेत् ॥ १७ ॥
तस्याग्रे द(अ)ष्टशाखासु दक्षिणे दक्षिणे तथा ।
बाहुमूलं तथान्तं तु नाड्योऽष्टौ प्रसारिते ॥ १८ ॥
तेषामग्रैकविप्राणिबन्धैकप्रणवावृतम् ।
एवं वामे तु दृष्टं स्याद्धस्तं प्रणवमाचरेत् ॥ १९ ॥
एवं हि प्रतिमानं तु नाडीनामष्टविंशतिः ।
प्रधाना नाड्यस्त्वेवं कल्पयेत्तन्त्रवित्तमः ॥ २० ॥
तेषु भिन्नास्तथा विप्र अष्टाष्टौ नाड्यस्तथा ।
तस्मात्तदेकनं नाडी सर्वाङ्गं तु समावृतम् ॥ २१ ॥
चतुःसप्तसहस्राणि नाड्यः परिकीर्तिताः ।
नाडिहस्तावृताः शूला जीर्णकः शूलपात्रवत् ॥ २२ ॥
नालिकेलफलैः पक्वैः घृतकल्पलयान्वितम् ।
चर्मासारं गृहीत्वा तु सारादन्यात्त्ववाहृता ॥ २३ ॥
नाड्यः स्वा हि संकल्प्य पश्चादावृतनाडिकाः ।
षड्यवं तु परीणाहं रज्जुमापातयेद्दृढम् ॥ २४ ॥
पश्चात्तु रज्जुरज्जुभ्यां बन्धयेद्दक्षिणावृतम् ।
हृत्पद्मसाष्टपत्रं तु रज्जुना बन्धयेद्बुधः ॥ २५ ॥
तस्य नालं तु नाभ्यन्तं सुषुम्णा(म्ना) सह साधितम् ।
चीत्मस्थानं तु सत्यधर्मित्युक्तं हि प्रयत्नतः ॥ २६ ॥
मूलमन्त्रमनुस्मृत्य रज्जुबन्धं ततः कुरु ।
रज्जुबन्धमिति ख्यातं मृत्संस्कारमतः परम् ॥ २७ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे रज्जुबन्धलक्षणं
नाम द्व्यशीतितमः पटलः ।

---

॥ अथ त्र्यशीतितमः पटलः ॥

---

मृत्संस्कारमहं वक्ष्ये संक्षेपाच्छ्(च्छृ)णु सुव्रत ।
जाङ्गलं जानुरूपं च संमिश्रं मृत्त्रिधा भवेत् ॥ १ ॥

अंशत्वेन खनेत्पार्कं सुश्रीहिजाङ्कलं भवेत् ।
तनुवालुकसंयुक्तं तनुत्वेगात्खनक्षमम् ॥ २ ॥
त्रिहस्तं मनोरमं सन्तु(न्तु) दृष्टं वत्सानुरूपकम् ।
तयोर्मिश्रविमा(मिवा)कारं मिश्रलं तदुदाहृतम् ॥ ३ ॥
तेषु शेप्या जवोपेता शुद्धभूमौ मनोरमे ।
नदीतीरे तटाके वा श्वेतारक्तपीतकृष्ण वा(ला) ॥ ४ ॥
पङ्कं संग्राह्य पात्रेषु जलयाप्लावयेत्तु वा ।
पात्रस्थं शोपयेत्पङ्कं यावत्पदढान्वितम् ॥ ५ ॥
तावद्दृश्या च वालाक्षिताम्भसं विप्र मर्दयेत् ।
ईषद्द्रवसमायुक्तं पिण्डं कृत्वा तु तन्मृदा ॥ ६ ॥
पिण्डहस्ते नले रेखा दृष्टे पिष्टे तथा कुरु ।
यवतारापकेणैताः कल्प्यमानं तलेन तु ॥ ७ ॥
रुद्राङ्गुलीपरीणाहे मस्ते(स्थे) युक्तमुदाहृतम् ।
सिकतं च शिलापूर्णं सदृशं कल्पयेद्बुधः ॥ ८ ॥
मृत्तं चैकं तु(त)देकांशं योजयेत्तु मृदा स हि ।
फलं भोगिसमं दद्याद्दशाहे वाऽप्यसमके ॥ ९ ॥
यवगोधममाषं च तत्वसीचूर्णसंयुतम् ।
मृदेऽष्टांशं समायोज्य नालिकेलफलोदकैः ॥ १० ॥
पात्रे वा मर्दयेद्धस्म देशहातृकमे ततः ।
श्र(श्री)वेष्टं गुग्गुलं चैव कुन्दुरुष्कं तथैव च ॥ ११ ॥
तथा सर्जरसाचूर्णं मृत्कालांशं शिवांशकम् ।
पात्रे मृदा समायोज्यं दधिना मर्दयेत्सुधीः ॥ १२ ॥
चूर्णा च पिप्पली चैव मरीची रसनी तथा ।
समचूर्णं तु कर्तव्यं उद्धेशांशैः सुसंयुतम् ॥ १३ ॥
मधुक्षीरघृतेनैव मृदं पात्रेण मर्दयेत् ।
कपित्थबिल्वनिर्यासचूर्णौ द्वौ समतां कुरु ॥ १४ ॥
मृदे पञ्चदशांशे वा तैलचूर्णसमायुतम् ।
मर्दयेत्क्रमसाम्पार्श्व(र्ध) कुक्षीरितलालकम् ॥ १५ ॥

चन्दनागरुकर्पूरगोषु गोरोचनं समम् ।
आर्द्रं चूर्णं तु कर्तव्यं मुक्ता(क्तां)श्रांशसमन्वितम् ॥ १६ ॥
अतसीस्नेहसंयुक्तं मर्दयेद्देशिकोत्तमः ।
सुपर्णराजिताचूर्णं चापल्ये गुलिकावहे ॥ १७ ॥
दिग्दिगन्तादि सस्यादि सागरे च हलस्तले ।
गजदन्ते वृषशृङ्गे गोमूत्रैश्च विशेषतः ॥ १८ ॥
यथालाभं तु कर्तव्यं नानागन्धसमन्वितम् ।
कपित्थं चैव निर्यासं मधु वा मर्दयेद्बुधः ॥ १९ ॥
पञ्चरात्रमितीकृत्य नारिकेलफलं तथा ।
त्वक्सारं तु परीगृह्य एकसारं द्व्याद्गुलम् ॥ २० ॥
सार्धद्व्याद्गुलं वाऽथ मानेन च्छेदयेद्बुधः ।
मूत्रचतुर्थसमायुक्तं मध्यमे वा त(स)मारभेत् ॥ २१ ॥
राज्यं धेनुमूर्दं लिप्य ततोऽपि ऋजुवेष्टनम् ।
तदुरुज्जुं नरं विप्र एकद्वित्र्यद्गुलं तु वा ॥ २२ ॥
ततो वै मृत्समालिप्य यावच्छोपणकं द्विन ।
तावन्निरीक्ष्य कर्तव्यं मृल्लेपं तु शनैः शनैः ॥ २३ ॥
मूलवाह्यागतव्यासचतुर्भङ्गविभाजिते ।
एकांशावधिकं लिप्य अनुरूपमुदाहृतम् ॥ २४ ॥
द्व्यंशावगतमिश्रं स्याद्भागेन त्वनलावधि ।
तत्तद्देशमृदैनैव तत्तद्योग्यं समालिपेत् ॥ २५ ॥
शेषं कालेन संपूर्य वेदं शेषं सवल्कलम् ।
शेषं कार्पासतन्त्वादि युक्तं कल्के तु कल्पयेत् ॥ २६ ॥
मृत्संस्कारमिदं स्यात्तं कल्कसंस्कारमुच्यते ॥ २७ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे मृत्सकारलक्षणं नाम
त्र्यशीतितमः पटलः ।

## ॥ अथ चतुरशीतितमः पटलः ॥

---

अथ कल्कविधानं तु वक्ष्ये संक्षेपतः क्रमात् ।
नद्यां वाऽपि तटाके वा दीर्घिकायामथापि वा ॥ १ ॥
सरूपक्षेत्रेऽथवा विप्र माणिरूपे जले भवेत् ।
सुदृढा शुद्धजलजा स्थूलवालुकमुद्रिता ॥ २ ॥
संग्राह्या शर्करा क्षेपा तस्याः प्रक्षालनं कुरु ।
शर्कराशोषणं कृत्वा सूक्ष्मचूर्णं तु तत्कुरु ॥ ३ ॥
तिलोदकसमं पिण्डं कृत्वा तच्छोषयेत्क्रमात् ।
अथ गन्धनिर्यासजलं त्रिविधं प्रोच्यते द्विज ॥ ४ ॥
पञ्चगुणं तु निर्यासं सपद्वेतु षड्गुणम् ।
स्वच्छलं स्वाचलं चैव सैकतं च क्रमोदितम् ॥ ५ ॥
स्वच्छ सेकजले पिण्डं वेष्टयेत्तु यथाक्रमात् ।
कार्पासतन्तवश्चापि मृदं कृत्वा सुपोषयेत् ॥ ६ ॥
त्रियवं कल्कभित्ते तु कदलीभिस्तदर्थवत् ।
एतत्कल्कं यथायोग्यं कल्प एव हि निर्यसा ॥ ७ ॥
त्रिगुणं मध्यमं चात्र कन्यसं तु चतुर्गुणम् ।
ग्रन्थनद्धं जलं ह्येवं त्रिविधं परिपठ्यते ॥ ८ ॥
तैप्त्वाद्यौ गुडजलेन मर्दयेत्तु पुनः पुनः ।
क्रमेण लेपयेत्कल्कं व्यचक्रिया यवं घनम् ॥ ९ ॥
शनैः शनैर्लेपनं कृत्वा भिन्नच्छिद्रविवर्जितम् ।
पममासं त्रिसमासं वा मासं वा शोषयेत्पुनः ॥ १० ॥
कुश्चव्याश्चको विप्र पेषितो पोषयेत्क्रमात् ।
ततः स्वच्छं जलेकं च प्रमाणं तं तु लेपयेत् ॥ ११ ॥
बाहुकूर्चप्रमाणं तु शोध्यमानसमं नयेत् ।
अङ्गोपाङ्गं च प्रत्यङ्गं कल्पयेल्लक्षणान्वितम् ॥ १२ ॥
करचरणोदयाद्यथ अङ्गमित्यभिधीयते ।
उपाङ्गं भूषणं ख्यातं प्रत्यङ्गं चाद नार्हणा ॥ १३ ॥
कपित्थनिर्यासरसं सार्धत्रिगुणांशकम् ।
वनच्छाद्रं चतुर्भागं कल्कमालेपयेत्ततः ॥ १४ ॥
ततस्कल्कं तु पञ्चांशाह्लादपरस्ततम् ।
योस्स(यः स)न्ततो च(तश्च) कूर्चेन प्रोक्ष्यं तु पोषयेत् ॥ १५ ॥

मस्तानान्वितमिन्द्रं यत्रस्थयेलक्षण ... . ।
.... ... ... ... ... ॥ १६ ॥
इत्येते कल्कसंस्काराः मोच्यते(क्ताश्च) सकलस्य तु ॥ १७ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे कल्कसंस्कारलक्षणं नाम
चतुरशीतितमः पटलः ।

---

॥ अथ पञ्चाशीतितमः पटल ॥

---

अथ वक्ष्ये विशेषेण वर्णसंस्कारलक्षणम् ।
शिवात्परमसद्भावं द्व्यकाच्छक्तिसंभवम् ॥ १ ॥
शिवाच्छक्तिः समुत्पन्ना तस्या नादः समुत्थितः ।
तस्मात्सर्वं समुत्पन्नं तस्मादनिलसंभवः ॥ २ ॥
अनिलादापः संभूतं तस्माद्वै क्षिति संभवम् ।
श्वेतं रक्तं तथा पीतं कृष्णं चेतिचतुर्विधम् ॥ ३ ॥
जले सच्छ्वेतमग्नौ च रक्तं निभवेद्भवम् । (?)
भुवने पीतवर्णश्च नीले कृष्णस(स्य) संभवः ।
विष्णुर्महेश्वरो गौरी रुद्रो वर्णाधिपाः क्रमात् ।
विप्रक्षत्रियविट्शूद्राः सितवर्णादयः क्रमात् ॥ ५ ॥
श्वेतं रक्तं च पीतं च कृष्णं चैव चतुर्विधम् ।
श्वेतं चैव तु शुक्लं च धवलं च विनाशकम् ॥ ६ ॥
मुक्ताभं चेदुवर्णाभं श्वेतवर्णमिदं सितम् ।
शङ्खवर्णसमं शुक्लं प(व)र्णमित्युतमा(समं)मया(तम्) ॥ ७ ॥
रजताभं च गोक्षीरसदृशं धवलं भवेत् ।
तारकासमवर्णं । अतारकमुदाग्रतः ॥ ८ ॥
अरुणं रक्तशोणं च अग्निएदं(रेवं) चतुर्विधम् ।
अरुणं शोकनाभं तु पद्मपुष्पाभरत्नकम् ॥ ९ ॥
शोणकं शुकपुष्पाभं राक्षसानां तु पाटलम् ।
स्वर्णपिङ्गं च पीतं च हरितालं चतुर्विधम् ॥ १० ॥
स्वर्णवर्णवपुं पुण्ड्रं विसङ्गजनिसारवत् ।
हरितालं च पीवरय हरितं रज्जुमन्त्रवत् ॥ ११ ॥

नीलं श्यामं च कालं च कृष्णं चैव चतुर्विधम् ।
मेघवर्णसमं नीलं श्यामं वै नलया समम् ॥ १२ ॥
शिखिवर्णसमं कालं कृष्णं च भृगुपत्रवत् ।
एवं षोडशभेदं तु वर्णभेदं रवजन्त्रकम् ॥ १३ ॥
धरणीजसमुच्छिष्टं रक्तं त्रासाग्रसंभवम् ।
अथवा जातिलिङ्गं तु रक्तमासं द्विधा स्मृतम् ॥ १४ ॥
गोदावर्यां तु संस्कृतं हल्लालवमुदाहृतम् ।
अतसीपुष्पसंकाशं रजावत्ताभ्यमुच्यते ॥ १५ ॥
श्यामपपाणसारं तु श्याममित्यभिधीयते ।
दिवेसनरजोत्पू(टीपोत्पन्नरजोव)र्णं कृष्णवर्णमुदाहृतम् ॥ १६ ॥
एवमादिकलावर्णास्तस्मिंस्तस्मिन्ननेकधा ।
मिन्छेत लक्षसारं च दिवोद्भूतरजस्तथा ॥ १७ ॥
ऊर्ध्वं चापिमिनीलायां तुरन्याभिधीयते ।
एवं स्वतः मयाणं तु वर्णविन्यासकामतम् ॥ १८ ॥

---

इति काश्यपे वर्णसंस्कारलक्षणम् ।

---

यंलाकामादर्कं वर्णां वक्ष्ये संक्षेपतः क्रमात् ।
पीताभ्यासं तु पीतं स्यात्तादृशं पूर्ववत्कृतम् ॥ १९ ॥
नारिकेलोदकैर्मिश्रं टङ्करक्तनिभं भवेत् ।
तत्सुधाकर्मरक्तस्य शवे दीर्घसिता भवेत् ॥ २० ॥
राजावर्तं च श्यामं च पाषाणौ द्वौ च पूजितौ ।
जनासनं वशक्ताः स्युः सुधाकर्मसु सुव्रत ॥ २१ ॥
अयःसंस्कारवर्णं तु वक्ष्यते द्विजसत्तम ।
सितं रक्तं समं मिश्रं गौरं च विरुदाहृतम् ॥ २२ ॥
सितं पीतं समं मिश्रं यत्तत्पूरकं भवेत् ।
सितरक्तं कृष्णसंमिश्रं समावर्णनिभं भवेत् ॥ २३ ॥
श्वेतं कृष्णं च पीतं च समभागं तु मिश्रितम् ।
धारं च निरिदं श्यामं वर्णकर्मसु चो(रूढ)कृतम् ॥ २४ ॥

श्वेतं रक्तं च पीतं च संमिश्रकमुदाहृतम् ।
रक्तं पीतं समं मिश्रं वकुलस्य फलाकृति ॥ २५ ॥
ज्वलनच्छविरि(नाभामि)दं ख्यातमग्निवर्णमिदं परम् ।
पीतस्य द्विगुणं रक्तं मिश्रं तत्त्वतिरक्तकम् ॥ २६ ॥
उभयात्समभन्येन द्विवर्णमित्युच्यते तु वामया ।
रक्तस्य द्विगुणं विषमिश्रितं गुल्()वर्णकम् ॥ २७ ॥
पीतस्य च तदर्धं तु मिश्रितं कपिलं भवेत् ।
सितवेदांगरक्ताढ्यं खर्परस्य समं भवेत् ॥ २८ ॥
तदेवानिलमाधिक्यधान्याङ्कुरमुदाहृतम् ।
श्यामस्यारितलाढ्यं च कुङ्कुमा(मा)रितलाभकम् ॥ २९ ॥
मिश्रितं स्यात्तस्यमस्याः कृष्णालाक्षं च संमितम् ।
जम्बूफलसमं त्वेतद्वर्णमित्युच्यतेऽथवा ॥ ३० ॥
जातीफलं समं लाक्षासारं लोहितमुच्यते ।
कृष्णं नीलं समं मिश्रं केशवर्णमुदाहृतम् ॥ ३१ ॥
सत्यश्यामं च रक्तं च मिश्रं मञ्जिष्ठवर्णकम् ।
कृष्णं पीतं समं मिश्रं मधुवर्णमुदाहृतम् ॥ ३२ ॥
कृष्णस्य द्विगुणं पीतं मानुषं वर्णमुच्यते ।
मानुषं रक्तमाधिक्यं हरितं मयताभश्याम् ॥ ३३ ॥
निहोपेतदातृवर्णमुदाहृतम् .... ... .... ।
तेषु यत्तस्यमल्पेन बाहुमानसमन्वितम् ॥ ३४ ॥
बाहुसामेति तरख्यातं द्रव्याल्पादिच मानितम् ।
अल्पसारमिदं ख्यातं सलेपाकल्पितं विदुः ॥ ३५ ॥
वर्णानामानुकूल्यस्य सममेव समाश्रितम् ॥ ३६ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे वर्णसंस्कारलक्षणं
नाम पञ्चाशीतितमः पटलः ।

॥ अथ षडशीतितमः पटलः ॥

अथ वक्ष्ये विशेषेण वर्णलेपनमुत्तमम् ।
शैलकासपिष्टकार्हा नि(त्रि)धा वै वर्णलेपनम् ॥ १ ॥

शैलजे वर्णपेक्षा चेदङ्गोपाङ्गशिलामयेि ।
उपरिष्टाचायतः स्यात्तन्नकला प्रावयेत् ॥ २ ॥
श्वेतवर्णस्तु तदूर्ध्वे चित्यर्ण लिप्यश्वेतश्वेतवर्णाटमस्तु (?) ।
विम्बोचिरत्तिमतिष्ठासम्यगगाचरेत् ॥ ३ ॥(?)
अथवा शैलजे विम्बे पद्मान्ऽङ्क विनोश्रितः ।
यथमानं तु लिप्याचित् . ...नमः ॥ ४ ॥
श्वेतं च बिम्बवर्ण च क्रमेणोचितं लिपेत् ।
शिलागर्भमिदं स्यात् पर्णहीनाममेव वा ॥ ५ ॥
शूलस्थापनकर्मादि दारुगर्भ तु पूर्ववत् ।
चित्रं वाऽप्यर्धचित्रं वा पत्तेष्टकस्मयान्वितः ॥ ६ ॥
अङ्गं समं कर्णकं कृत्वा पत्रं छादयेत्ततः ।
सर्वोष्टानि च सर्वाणि शैलजे तु यथा तथा ॥ ७ ॥
कर्तव्यमिष्टगर्भ तु दारुमिदं तु तन्तु वा ।
एवं त्रिविधनित्य तु वर्णलेपमुदाहृतम् ॥ ८ ॥
आदौ श्वेतनिभं लिप्य सवास्यस्यजमेव वा ।
क्रमेण श्वेतवर्ण तु त्रिभक्त्या वा तु लेपयेत् ॥ ९ ॥
तदूर्ध्वे पाजवर्ण तु लेपयेद्द्विजसत्तमः ।
सितनिम्ननिभं चैव समं मिश्रं तु वाक्प(रतु)वत् ॥ १० ॥
सितं वर्णेन निम्बानां मधुवर्णनिभं भवेत् ।
रक्ष्यार्द्रीनिभारपानां पाण्डुवर्ण प्रकल्पयेत् ॥ ११ ॥
पद्मसंचं च मैत्रं च एवं [तत्तु] त्रिधा भवेत् ।
कपित्थनिर्यासेनेव त्रिसंध्यं तु प्रकल्पयेत् ॥ १२ ॥
स्वच्छतो लेपभारयातं मध्यमं मधुसदृशम् ।
तरुणं दधिसादृश्यं स्निग्धं श्रेष्ठतरं भवेत् ॥ १३ ॥
मेदुरेण भवेच्छ्रिष्टं [त्वेवं] संधानमाचरेत् ।
कल्पमर्दनमार्य तु धारयेच्छ्रप्रसारिणा ॥ १४ ॥
दल्पस्त्स्वच्छजलेनैव पेषणं तु समाचरेत् ।
सुपार्श्वसल्पेपिते महापेषेणधर्मयोः ॥ १५ ॥

पर्यासारं तु बद्धं स्याज्जलपात्रैका भवेत् ।
जलपात्रविना यत्र तत्र कापित्थज द्विजः ॥ १६ ॥
निर्यासजलसंबन्धयुक्तमन्यन्न कारयेत् ।
कल्कं षोडशधा भज्य पट्पञ्चचतुरं तु वा ॥ १७ ॥
कपित्थनिर्यासेनैव स्वच्छं नैव जलं भवेत् ।
सक्तुचिक्कणलेपं तु कारयेद्द्विजसत्तमः ॥ १८ ॥
चिक्कणं कल्कसारं च द्विविधं चिक्कणं भवेत् ।
जलपात्रं सुधाकुम्भे चिक्कणं शर्करद्रवम् ॥ १९ ॥
चिक्कणं द्विविधं चैव कल्पयेत्तु यथोचितम् ।
चिक्कणं कल्कबन्धं तु दशभागविभाजिते ॥ २० ॥
एकांशरहितं बद्धं भित्तिपवनं तु (लालेपन)योग्यकम् ।
चिक्कणे बन्धतुल्यं वा सितलेपनकर्माणि ॥ २१ ॥
सितवन्धसमं वाऽथ तद्दशांशं विहीनकम् ।
पार्श्वावर्णस्य बद्धस्य स्त्री(त्रिः)कृत्वा पांसु(सु)लेपनम् ॥ २२ ॥
षड्वर्णं तु ततो लेप्यं यथाक्रमेण देशिकः ।
बिम्बसर्वतवर्णं तु षट्कृत्वः सालिपेत्तया ॥ २३ ॥
पांसुवार्णे तु विंशांशे त्वंसहीनं तु वर्जयेत् ।
षट्पपादिकवर्णस्य बन्धामित्युच्यते मया ॥ २४ ॥
तदानीं वर्णबन्धं तु विंशांशेऽशविहीनकम् ।
द्वितीयं वर्णबन्धं स्यात्तत्वत()द्बन्धनं ततः ॥ २५ ॥
षण्णामपि सवर्णाद्या बन्धमेवं क्रमोद्यतम् ।
प्रथमेत्युच्यते बन्धे षड्विधं च लिपेत्क्रमात् ॥ २६ ॥
पत्रे बन्धं च मन्वन्तं न तथा .... .. ।
प्रवर्तय षडेतानि वर्णलेपकर्म विदुः ॥ २७ ॥
दीर्घपत्रमिति ख्यातं ततोऽन्यच्च द्विभाजितम् ।
स्वर्णचूर्णसमायुक्तं वर्णलेपप्रवर्तकम् ॥ २८ ॥
षड्वर्णक्रममेवं हि लेपयेत्तु परस्परम् ॥ २९ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे वर्णलेपनं नाम
षडशीतितमः पटलः ।

॥ अथ सप्ताशीतितमः पटलः ॥

अथ वक्ष्ये विशेषेण भक्तानां लक्षणं परम् ।
सर्वेषामपि भक्तानां पदं चतुर्विधं भवेत् ॥ १ ॥
सालोक्यं चैव सामीप्यं सायुज्यं च तथैव च ।
सारूप्यं च वि(प)दं विप्र चतुर्भेदमुदाहृतम् ॥ २ ॥
पुरुषो वा स्त्रियो वाऽथ तेषु यत्पादमाश्रितम् ।
तत्तत्पादानुकूल्यं वा सालोक्यपदमाश्रितम् ॥ ३ ॥
तदा सामीप्यदेशश्च मम(रु)चिराकृतिस्तु वा ।
ममचिरादिभिः कुर्याच्छेपाद्दे पादमाश्रिताः ॥ ४ ॥
बालश्च यौवना वृद्धस्त्रिविधस्य मिया ता(था) ।
त्रिविपादाकलाशब्दं तपसाचालसञ्जिता ॥ ५ ॥
तस्मात्सप्ततिवर्षं वा या सा यौवनान्विता ।
तदूर्ध्ववयसोपेतं वृद्धा तु निन्द्वन्धनम् ॥ ६ ॥
बालास्तु पञ्चतालेन ज्ञेया वसुमयेन वै ।
स्थानकं चासनं चैव यानमुत्तम एव च ॥ ७ ॥
चतुर्भेदेन कर्तव्यं भक्तानां मानुपाद्बुधः ।
अभङ्गं समभङ्गं वा अतिभङ्गमथापि वा ॥ ८ ॥
सव्यं वामस्य पादं तु कुञ्चितं त्वितरस्थितम् ।
द्वौ स्वजानुचितां धृत्वा हृदयेऽञ्जलिस्तेऽथ वा ॥ ९ ॥
लम्ब्यं दक्षिणपादं तु हस्तं पूर्ववदेव हि ।
आसनं पञ्चसप्तं वा नवमं तु शिखोपरि ॥ १० ॥
त्रयोदशपरिवाथ प्रकीर्णकं तु ततो भवेत् ।
महेन्द्रग्रहरसेते पुष्पदन्ते तथैव च ॥ ११ ॥
मल्लाटक्यां भवे वाथामेवं परिकल्पयेत् ।
प्राङ्मुखानामयीन्द्रः स्यादुदगग्रं तथैव च ॥ १२ ॥
मनुपक्षकल्ला चाऽथ सत्पादशयं तु वा ।
नन्द्यावर्तमिदं पञ्चमेदमत्र विधीयते ॥ १३ ॥

महेन्द्रादिर्ग्वंशकेष्वेव भवेशस्तु प्रकीर्णवत् ।
प्राङ्मुखं रसवीथी स्यादुदग्वक्त्रेव विंशतिः ॥ १४ ॥
अष्टाविंशतिकाया वा तावदेव विवर्धनात् ।
एवमष्टाविधं स्यात्तं श्रीपतिं तल्लक्षितम् ॥ १५ ॥
एतद्द्वाराष्टकोपेतमुपद्वाराष्टकं भवेत् ।
अथवा वेदवेदांशं वारईशं [illegible] भागिन ॥ १६ ॥
दण्डकं न्यस्तवस्तूनां भेदमेकमनेकधा ।
ग्रामादीनां तु विस्तारं भानुजन्माष्टसप्तधा ॥ १७ ॥
भूतवेदांशकं भूत्वा नन्दसप्तगुणांशकम् ।
भूतवेदाग्निभागं तु ग्रामे वमवि(वी)थी भवेत् ॥ १८ ॥
मानसूत्राद्बहिर्वप्रादन्तरं पद्मविधं भवेत् ।
एकद्वित्रिचतुष्पञ्चहस्तं वा वमविस्तरम् ॥ १९ ॥
त्रिपञ्चसप्तहस्तं वा नवरुद्रकरं तु वा ।
त्रयोदशकरं वाऽथ वमतुङ्गमुदाहृतम् ॥ २० ॥
त्रिचतुष्पञ्चषट्सप्तवस्वंशं वा विशेषतः ।
वममूलतलं कृत्वा एकांशेनाग्रविस्तरम् ॥ २१ ॥
शिलाभिर्वेष्टकाभिर्वा मृदा वा परिकल्पयेत् ।
छत्रदण्डाम्बुदाभं वा कृकलासपराकृतिः ॥ २२ ॥
इहास्यपरिवह्वाऽथ समविषममाचरेत् ।
करालमुद्गगुलमासकल्कचिक्कणकर्मवान् ॥ २३ ॥
लाक्षां समालिपेदूर्ध्वे पिष्टकाश्ममयूरपि ।
मनुयो दारुभिः पत्रैश्छादयेत्तु तृणादिभिः ॥ २४ ॥
तद्बाह्येऽभ्यन्तरे चैव खलु रेचेष्ट मानतः ।
वासार्थे स(श)कटादीनां तक्षकाणां विशेषतः ॥ २५ ॥
तद्बाह्येऽभ्यष्टमानेन पञ्चभूम्याः परं भवेत् ।
तद्बाह्येऽभ्यष्टमानेन परिखां परिकल्पयेत् ॥ २६ ॥
वमस्याभ्यन्तरे विप्र देवतास्थापनं भवेत् ।
शिवहर्म्ये च मातृणां सद्मबाह्ये तु वा भवेत् ॥ २७ ॥
परिखस्य तु बाह्ये वा तौ संकल्प्य द्विजोत्तमः ।
आदित्यांशे तु मानोथ आग्नेय्यां कालिकोष्ठकम् ॥ २८ ॥

भृशांशे विष्णुगृहं स्याद्याम्ये षण्मुखमन्दिरम् ।
शास्तुर्गृहं अगांशे तु नैर्ऋत्यां केशवालयम् ॥ २९ ॥
सुग्रीवांशे गणाध्यक्षं पुष्पदन्तपदेऽथवा ।
वारुण्यां विष्णुगेहं स्यात्सुग्रीवांशे हलालयम् ॥ ३० ॥
भृङ्गराजांशके पाशयक्ष्मे चैव विनाशकौ ।
मदिरालयं तु वायव्ये मुख्ये तु यमभूयकम् ॥ ३१ ॥
मातृणामालयं सौम्ये वायव्यां करणेऽपि वा ।
ईशाने शिवहर्म्यं स्यादीशानानन्तरेषु वा ॥ ३२ ॥
पर्जन्यांशे जयांशे वा हेन्द्राचान्भोगमे वा ।
मारुते केतुना विप्र कर्तव्यं तु शिवालयम् ॥ ३३ ॥
शिवालयं मातृकोष्ठं कर्तव्यं तु बहिर्मुखम् ।
अभ्यन्तरमुखं विष्णुं विवस्वान्पश्चिमाननम् ॥ ३४ ॥
शेषाः पूर्वमुखाः सर्वे कारयेद्विधिपूर्वकम् ।
सूत्रसंन्धौ चतुष्के तु शूले चैवाष्टकेऽपि वा ॥ ३५ ॥
षट्के चैव तु वीथ्यग्रे देवालयं द(हि)कारयेत् ।
वापीकूपतटाकादीन्सर्वत्र परिकल्पयेत् ॥ ३६ ॥
भ्रशांशे क्षेपभस्थानं वारुणे हरिमन्दिरम् ।
याम्ये चैव कुलालानां नापितानां तु शंकरे ॥ ३७ ॥
दक्षिणे शैदसीनां तु कारणां चैव तत्र वै ।
मत्स्योपहिंसितानां तु पश्चिमे वासमुच्यते ॥ ३८ ॥
उत्तरे चैव किरातां अपरे तत्समीपके ।
तद्बाह्ये श्वपाले वा कर्मकारा तथानले ॥ ३९ ॥
बाह्ये स्वल्पदूरे तु रजकानां गृहं भवेत् ।
तद्बाह्ये क्रोशमात्रे च चण्डालावासमुच्यते ॥ ४० ॥
शंकरे परिखा सत्र(द्व)न्द्वतद्दण्डे श्मशानकम् ।
वायव्यां च श्मशानं तु मातुलेन विशेषतः ॥ ४१ ॥
अपरे मानसूत्रं तु बाह्ये सालान्तरे भवेत् ।
महेन्द्रस्य(न्द्राद)प्रिभागान्तं भोजनं च विधीयते ॥ ४२ ॥
दण्डदक्षिणपार्श्वे तु पश्चिमे कुसुमविशालयम् ।
धर्मेणापि कर्तव्यं(?)दण्डस्यान्यपंक्तम् ॥ ४३ ॥

उत्तरे लवणं चैव तैलगन्धं तु पुष्पकम्।
होमं रक्तादयश्चैव सर्वत्रैकाहकं भवेत्॥ ४४॥
ग्रामादिलक्षणं प्रोक्तं गृहविन्यासलक्षणम्॥ ४५॥

इत्यंशुमद्भेदे काश्यपशिल्पे ग्रामादिलक्षणं नाम
सप्ताशीतितमः पटलः।

---

॥ अथाष्टाशीतितमः पटलः॥

---

अथ वक्ष्ये विशेषेण गृहविन्यासलक्षणम्।
शूले सूत्रे च सन्धे च चतुष्के चाष्टके तथा॥ १॥
आलयाग्रे सभाग्रे च चैत्यवृक्षसमीपके।
श्मशाने पर्वताग्रे च क्षारभूमौ तथैव च॥ २॥
भुजङ्गनिलये चैवरन्यावासं न कारयेत्।
वास्तुमध्ये स्तम्भं मन्तु पुरीषस्य हृदिर्भवेत्॥ ३॥
चतुष्कर्णगताः सूत्राः सिरा इत्यभिधीयते।
मातर्मुखस्य सूत्राणि स्थानसंज्ञा प्रकीर्तिता॥ ४॥
गुणस्य सूत्रयोगं तु संधिरित्यभिधीयते।
तदेव सूत्रयोगं यत्तच्चतुष्कमुदाहृतम्॥ ५॥
रससूत्रप्रयोगं यत्तदष्टकमुदाहृतम्।
चतुष्कौ सिरयोगश्च शूलमित्यभिधीयते॥ ६॥
केवलं सहजं चैव जगृहक्ष्मविधिर्भवेत्।
समन्त्रं केवलं स्यातं बाह्ये स्वावृतवीथिकम्॥ ७॥
तद्बाह्ये स्वावृद्दीमान्दासीदासनिवासका।
विधिनावेशनीत्रं सतिकाकारवद्भवेत्॥ ८॥
आस्यावृतग्रहादीनि ग्रामवास्तुवदाचरेत्।
आलयावृतवीथ्यादि हीनाकीलवलं गृहम्॥ ९॥
यत्तद्गृहवद्वास्तु स्यात्कूर्करिष्टचानुकूलकम्।
केवलं तु गृहक्षेत्रे वाऽऽरामादिषु वा कृते॥ १०॥

नन्दांशं वर्जयेत्क्षेत्रे सिरसूत्रसमन्वितम् ।
अजांशमध्यमे वर्ज्यं पुष्यादित्रिऋक्षभागतः ॥ ११ ॥
राशयस्त्विति विख्याताः प्राग्वदाक्षिण्यमेव च ।
तेषु कर्कधनुर्मीनं मिथुनं चैव वर्जयेत् ॥ १२ ॥
शेषेष्विष्टं गृहं कर्म भानुकूलान्वितं गृहम् ।
ग्रामादिगृहश्रेणीषु राजा च सहजं भवेत् ॥ १३ ॥
भूपरीक्षामायसर्वं प्रागिवैव समाचरेत् ।
कर्षणे ह्य(ह्यु)दितं ऋक्षं तिथिवारस्तदुक्तकम् ॥ १४ ॥
दर्शनं चोभयं सर्वं शुभयुक्तं परिग्रहेत् ।
गृहारम्भं तु कर्तव्यं गर्भन्यासपुरःसरम् ॥ १५ ॥
गर्भन्यासं प्रकर्तव्यं प्रागुक्तविधिना बुधैः ।
भल्लाटांशे महेन्द्रांशे गृहक्षतपदे तथा ॥ १६ ॥
पुष्पदन्तपदे चैव पूषादिषु चतुर्ग्रहे ।
द्वारस्य दक्षिणे पार्श्वेऽग्नियोगमूले तथा बुधः ॥ १७ ॥
गर्भन्यासं प्रकर्तव्यं तस्योर्ध्वे प्रथमेष्टका ।
गृहदेवमिति ख्यातं देहगर्भमिति स्मृतम् ॥ १८ ॥
सगर्भं सर्वसंपत्स्यादगर्भं सर्वनाशनम् ।
पद्कौशिके जीवयुक्ता विधेया गर्भिणी भवेत् ॥ १९ ॥
गृहिणी गर्भिणी चेत्तु गर्भनाशं न कारयेत् ।
गर्भस्योपरि गर्भः स्यात्कर्तव्यांशो विनश्यति ॥ २० ॥
जीर्णे गृहे पुनर्वाऽपि गर्भं पूर्ववदाचरेत् ।
विजयं त्वि(त्व)तिकान्तं च सुकान्तं वर्धमानकम् ॥ २१ ॥
शृ(श्री)कांतं वसुकान्तं वा वर्धमानावषा(सा)नकम् ।
श्रीकरं चातिभद्रं च गृहभेदं तु पड्विधम् ॥ २२ ॥
विपन्वे(विजयं त्वे)कश(शा)ला स्याद्द्विशाला त्विविकान्तः
त्रिशाला वसुकास्या(न्तं) वा अथवा(वर्धमा)नं चतुःस्त्यतत्तु
श्रीकरं सप्तशाला स्याद्दशशालाऽतिभद्रकम् ।
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् ॥ २४ ॥
नन्दकर्मकरान्तं तु युग्मयुग्मं चतुश्चतुः ।
अष्टुरा विजयमाम्य(यं भोक्तं) द्विशाला विसि(त्वति)कान्तव

स्वितिकान्तमथोच्येत द्विद्विहस्तविवर्धनात् ।
मन्दकर्मकरारभ्य द्विद्विहस्तविवर्धनात् ॥ २६ ॥
सप्तसप्ताष्टषट्‌यन्तं वर्धमानं तु षड्विधम् ।
तेष्वादौ मनुभेदौ तौ सप्ततकर्णकं ग्रहम् ॥ २७ ॥
दशषड्वात्रिंशद्भेदाविहत्तकर्णकान्वितम् ।
वर्धमानतयं व्यासायामयुक्तं सपञ्चिकम् ॥ २८ ॥
दक्षिणे दक्षिणे चाऽपि वर्धमानस्य पार्श्वके ।
सुकान्तसहितं यत्तच्छ्रीकरं स्विति विद्यते ॥ २९ ॥
पार्श्वयोर्वर्धमानस्य शुकान्तौ तौ विराजितौ ।
अतिभद्राविति ख्यातौ मूलगेहान्तरस्थितौ ॥ ३० ॥
विस्तारसदृशः कायः सद्विहस्तं च भाति(जि)तौ ।
विस्तारसदृशाद्देहस्तं चौन्नत्यं भवेत् ॥ ३१ ॥
मकल्पं पद्कराधिक्यं माशाभासाष्टकारधीः ।
क्षुद्रादीन्हस्तमानाख्यं पङ्क्तिमानमथ शृणु ॥ ३२ ॥
विस्तारसदृशं याति व्यन्दं भागद्वयाधिकम् ।
चतुर्भागाधिकायश्च चिदमेवं द्विधा भवेत् ॥ ३३ ॥
देवद्विजमहीनाथो जि(त्ति)व्यात्यायमायतम् ।
राजारसन्युक्तं नाभिचतुर्जातिगृहं शुभम् ॥ ३४ ॥
शेषाणामपि सर्वेषां त्रिचाद्दीनि सुखावहम् ।
सर्वं पूर्वोदितानां तु योग्यवृद्धिकरं भवेत् ॥ ३५ ॥
विजयादिगृहाणां तु जाघा(त्या)यामं सर्वं भवेत् ।
हस्तमानेन या(जा)त्यादिभागं चैव समाचरेत् ॥ ३६ ॥
न कुर्यात्संकरं तेषु संकरं तत्तु नाशनम् ।
आद्यद्विहस्तमानं तु व्यासपङ्क्तिसमं तु वा ॥ ३७ ॥
पदत्रयं स्वस्तिकं तु व्यसदायतनद्विश्चेत् । (?)
पदहीनं न कर्तव्यं सर्वसंपद्विनाशनम् ॥ ३८ ॥
एकबन्धं त्रिबन्धं वा अथवाऽनेकबन्धनम् ।
कल्पिते मानसूत्रात्तु नीव्रं परात्तु वा भवेत् ॥ ३९ ॥
सर्वेषां विजयादीनां विन्यासं तु वदामि ते ।
देवभागं तु विस्तारे आयामे तु रसांशकम् ॥ ४० ॥

पक्षांशे ग्रीवविस्तारं मेखलेन्द्रं च तत्समम् ।
गुणांशं ग्रहदीर्घं तु गुरुदीर्घं तु तत्समम् ॥ ४१ ॥
परितः कुड्यसंयुक्तं द्वारनेत्रादिके द्विज ।
कल्पितं तु ग्रहं स्यातं रङ्गं पादोत्तरान्वितम् ॥ ४२ ॥
दक्षिणे तु ग्रहं तन्त्रीरङ्गमायुष्करं भवेत् ।
सौख्यं तु दक्षिणे गेहं रङ्गपुत्रविवर्धनम् ॥ ४३ ॥
ग्रहं व्यासे गुणांशे तु अंगणं एकभागया ।
द्विभागं ग्रहविस्तारं आयामं पूर्ववत्स्त्वेत् ॥ ४४ ॥
ग्रहायामे तु नन्दांशे इन्द्रांशं दक्षिणे त्यजेत् ।
गुणांशं वामपार्श्वं च विशेद्वेश्म तदन्तरे ॥ ४५ ॥
पडंशे च विशाले तु आयामे दशभाजिते ।
द्विभागं ग्रहविस्तारं च क्रमेण द्विभागया ॥ ४६ ॥
मुखद्वारविभागेन कल्पयेत्तु यथाक्रमम् ।
पार्श्वयोस्तु गुणांशेन गृहायामं विधीयते ॥ ४७ ॥
तयोर्मध्ये गृहांशे तु गमपादोत्तरान्वितम् ।
हरेग्रहारग्रंशे तु नवांशेंऽशद्वयं त्रिभिः ॥ ४८ ॥
युगांशैः पुरतोऽलिन्दे क्रमेणैव प्रकल्पयेत् ।
आयामार्धं ग्रहारामं कृतं मध्येकाभित्तिकम् ॥ ४९ ॥
भूतादि नन्दरुद्रांशं चरणव्यासभाजिते ।
अनलादितिमध्ये तु सव्येनैव क्रमान्वितम् ॥ ५० ॥
यथाक्रमेण नित्यां तु स्थापयेन्मध्यमद्घ्रिमान् ।
गृहाङ्घ्रिमध्यभित्तेस्तु चतुष्के गृहमध्यगम् ॥ ५१ ॥
हस्तरामग्न्यगुपेतवक्रपादुक एव वा ।
त्रिद्वचातिग्रहाणां तु सामान्यं कुड्यविस्तृतम् ॥ ५२ ॥
अथवाऽद्वत्रिविशालेन त्रिचतुष्पक्ष एव वा ।
एवं मध्यविशालं तु पड्विधं परिकीर्तितम् ॥ ५३ ॥
अधिष्ठानादिवशतः प्रासादवल्लक्षितम् ।
विजयाग्न्यत्य नेत्रे द्वे उभयोः पार्श्वयोः कुरु ॥ ५४ ॥
महानाग्निमिथारामं नेत्रद्वयं प्रकल्पयेत् ।
मुखे मुखे चालनाद्यं त्रिरन्ध्रगवान्वितम् ॥ ५५ ॥

कल्प्यैव गोपुराकारं विजयाख्यगृहं भवेत् ।
सभारशिरोवापि लुनिराहाशिर्षं भवेत् ॥ ५६ ॥
पार्श्वयोश्चैकभागेन मालिनं च समावृतम् ।
पुरतो भद्रयुक्तं वा चतुर्वेशायतरततम् ॥ ५७ ॥
त्रिजयं स्त्वेनमाख्यातंमतिकान्तमथोच्यते ।
नेत्रत्रयसमायुक्तामतिकान्तं प्रकल्पयेत् ॥ ५८ ॥
देवभूसुरभूपानां योग्यं नैवान्यवर्गिणाम् ।
कतिधाकृतिवंशाग्रं चतुर्नेत्रयुतं तु वा ॥ ५९ ॥
एकानेकतलं वाऽथ प्रासादवदलंकृतम् ।
कर्तुरिच्छानुसारेण स्थानविन्यासमाचरेत् ॥ ६० ॥
विस्तारं धर्मभागं च धर्मभागविवर्जिते ।
ग्राह्ये वारं शिखांशेन पक्षांशग्रहविस्तृ(स्तृ)तम् ॥ ६१ ॥
गृहाग्रे वारमेकांशं कर्णतुङ्गं युगांशकम् ।
शेषभागं खलरिः स्यात्परितः कुड्यसंयुत ॥ ६२ ॥
एतदेवाङ्कणं विप्र मण्डपं परिवाच्यते ।
तदावृतांशाथ स्यात्पक्षांशेन खलरिका ॥ ६३ ॥
शेषं पूर्ववदुद्दिष्टं साङ्गोपाङ्गं द्विजोत्तम ।
अथवा मण्डपं वर्ज्यं प्रागिवैव प्रकल्पयेत् ॥ ६४ ॥
मध्यरङ्गसमायुक्तं मुख्यलोहं द्विवासकम् ।
शालास्थिरशिखरस्थाने कुड्यपञ्जरं प्रयोजयेत् ॥ ६५ ॥
जात्यादाभासपर्यन्तमेवमेवाङ्कणालहिः ।
शेषांशमङ्कणं स्यात् वाह्यालिन्द्रं विना तु वा ॥ ६६ ॥
महेन्द्रे ग्रहक्षते चैव पुष्पदन्ते तथैव च ।
भल्लाटम्यां अर्के चैव सर्वेषां द्वि(द्वा)रमुच्यते ॥ ६७ ॥
द्वारं नैयोपद्वारं च तेष्वेकांशेषु कल्पयेत् ।
जयन्ते जलनिष्ठान्तं मुख्यांशे वा विशेषतः ॥ ६८ ॥
द्वारस्य वामयोगस्य जलनिस्रं च दक्षिणे ।
पश्चिमे उत्तरे चैव जलमार्गं न कारयेत् ॥ ६९ ॥
यदि द्वोमेन कर्तव्यं कर्तुर्मरणमादिशेत् ।
प्रागुदग्भागवत्स्यगुदग्वाहान्तिकान्तिके ॥ ७० ॥

अथि(ति)क्रान्तमिति ख्यातं इतरं सौम्यमुच्यते ।
अतिक्रान्तमिति ख्यातं सुक्रान्तमथ वक्ष्यते ॥ ७१ ॥

गृहायामे षडंशे तु द्विभागं ग्रहविस्तृतम् ।
वेदांशे चाङ्कणं विद्यात्द्व्यंशेनैव खलूरिका ॥ ७२ ॥
चतुर्णेत्रसमायुक्तं बाह्ये वारयुतं तु वा ।
षडष्टांशे तदायामे द्विभागं ग्रहविस्तृतम् ॥ ७३ ॥
मुख्यगेहस्य चाग्रे तु अलिन्द्रं च शिवांशकम् ।
षडंशं चाङ्कणं ख्यातं द्व्यंशाग्रे तु खलूरिका ॥ ७४ ॥
रसधर्मांशके तारे चायामे च प्रकल्पयेत् ।
द्विभागं ग्रहविस्तारं मुखालिन्द्रं द्विभागया ॥ ७५ ॥
अष्टांशे चाङ्कणं ख्यातं शेषांशे तु खलूरिका ।
रसभागे कृते व्यासे भान्वंशे वा तदायमे ॥ ७६ ॥
द्विभागं ग्रहविस्तारं द्विद्व्यंशं चाङ्कणं भवेत् ।
अलिन्द्रं तु शिवांशेन दशांशं स्वङ्कणं भवेत् ॥ ७७ ॥
भागेनैव खलूरिः स्यात्सर्वेषां बाह्यवारकम् ।
मानसुभाटहिस्त्वेवं गृहमानं सदा भवेत् ॥ ७८ ॥
वस्वंशे तु तदायामे पक्षांशं ग्रहविस्मृ(स्तृ)तम् ।
गेहानामग्रतोऽलिन्द्रं एकांशेन विधीयते ॥ ७९ ॥
वेदांशेनाङ्कणं कुर्याद्वस्वंशेन खलूरिका ।
परितोऽवहितं कार्यं शेषांगणं भवेत् ॥ ८० ॥
वसुधर्मततायामे द्विभागं ग्रहविस्मृ(स्तृ)तम् ।
अङ्कणं च शिवांशेन मुख्याग्रेऽशं तु वारकम् ॥ ८१ ॥
पार्श्वयोस्तु तथावारं वस्वंशं स्वङ्कणं भवेत् ।
द्व्यंशेनैव खलूरिः स्यात्पार्श्वाग्रे द्वारहीनकम् ॥ ८२ ॥
अङ्कणं त्रिंशदंशेन कल्पयेत्कल्पवित्तमः ।
धर्मैकांशे तदायामे अष्टाविंशतिमङ्कणम् ॥ ८३ ॥
शेषं पूर्ववदुद्दिष्टं खलूरिं चैव पूर्ववत् ।
वसुपञ्चांशतदायामे द्विभागं ग्रहविस्तृतम् ॥ ८४ ॥
अङ्कणं च द्विभागेन द्वारं तदग्रमुच्यते ।
मुख्यगेहाग्रतोऽन्यस्य पारं चङ्क्रमणं भवेत् ॥ ८५ ॥

चतुर्विंशतिभागेन अङ्कणं परिकल्पयेत् ।
द्व्यंशेनैव खलूरिः स्यादायामे तु कलांशके ॥ ८६ ॥
मुख्यगेहाग्रतो वारं गुणांशेनैव कल्पयेत् ।
अष्टाविंशतिभागेन अङ्कणं तु प्रकल्पयेत् ॥ ८७ ॥
शेषं पूर्ववदुद्दिष्टं युक्त्या सर्वांशसंयुतम् ।
कर्मभिः पार्श्वयोः कल्प्यं द्वारं कुर्यामुच्यते ॥ ८८ ॥
परितः कुड्यसंयुक्तं प्रागुद्द्वाराजलोद्गमम् ।
रसभागे तु विस्तारे दशभागे तदायते ॥ ८९ ॥
वस्वंशेनाङ्कणं विद्यात्तदायामो द्व्यंगुलम् ।
अनालयस्य चाग्रे तु द्वारं येनांशकेन तु ॥ ९० ॥
शेषं पूर्ववदुद्दिष्टं वाह्यवारं च भागिव ।
गेहस्य सेतुवस्वंशे छायामे तु तदंशके ॥ ९१ ॥
ग्रहाङ्कणं युगांशेन वारं तस्य दृतांशकम् ।
द्विभागं ग्रहविस्तारं मुख्यं वेद्दंशभित्तिकम् ॥ ९२ ॥
कुड्याभद्वारसंयुक्तं परितः कुड्यसंयुतम् ।
विस्तरे वसुभागे तु दशभागे तदायते ॥ ९३ ॥
चक्राणां तु विभागेन शेषं पूर्ववदाचरेत् ।
अथवा चर्कणं मध्ये वस्वंशेनाङ्कणं भवेत् ॥ ९४ ॥
गृहव्यासे ॥ वस्वंशे भान्वंशे तु तदायते ।
पूर्वे वा ग्रहचक्रे च द्व्यंशं चंक्रमणं भवेत् ॥ ९५ ॥
पुरस्तान्मुख्यगेहस्य द्वारं व्योमांशमुच्यते ।
अङ्कणं चाष्टविंशांशं कल्पयेत्कल्पवित्तमः ॥ ९६ ॥
मुख्यगेहस्य मध्ये तु रङ्गयोः पार्श्वयोर्गृहम् ।
नेत्रं कुड्यसमीपे तु गेहे वेशदुदाहृतम् ॥ ९७ ॥
वसुमन्वंशके व्यासे चाऽऽयामे च कर्मकृते ।
अङ्कणं वेदवस्वंशं पुरा चेग्रे तु वारकम् ॥ ९८ ॥
अथवा पार्श्ववासाग्रे वारं चङ्कांशमानतः ।
द्विभक्तिविसृताष्टांशदीर्घं चैवाङ्कणं भवेत् ॥ ९९ ॥
अथवा चापराष्टांशं पक्षवारांशचांशकम् ।
अङ्कणं भानुभागेन विस्तारं यद्द्वयं रसम् ॥ १०० ॥

षोडशांशे गृहायामे विस्तरे वसुभागके ।
द्विभागं गृहविस्तारं कल्प्यांशं चाङ्कणं भवेत् ॥ १०१ ॥
अङ्कणाद्बहिर्वारं तु शून्यांशेन प्रकल्पयेत् ।
पुरे पुरेऽग्रहारे तु शिवांशं चाङ्कणं भवेत् ॥ १०२ ॥
इतराश्रयगृहाणां तु वासं वासवकारकम् ।
नरांशे विस्तृतायामे युगांशं त्वङ्कणं भवेत् ॥ १०३ ॥
परितोऽलिन्द्रमेकांशं द्विभागं गृहविस्तृतम् ।
बाह्येऽलिन्द्रं शिवांशेन चतुर्दिग्भद्रसंयुतम् ॥ १०४ ॥
चतुर्विभक्तिविस्तारं नीव्रस्य भद्रमस्तकम् ।
मुखभद्रं कर्णं लिप्य सोपानं भद्रपार्श्वयोः ॥ १०५ ॥
पुरतो भद्रपोपेतं मण्डपोपेतविन्नतः ।
सर्वेषामपि सामान्यं मध्यभद्रे च मण्डपम् ॥ १०६ ॥
मन्वंशे तु तदायामे स्वंशं स्वंचाङ्कणं भवेत् ।
शेषं पूर्ववदुद्दिष्टं षोडशान्वे तदायते ॥ १०७ ॥
चक्रमाणं द्विभागेन कल्प्यंशे तु भागिना ।
अपद्भागे तदायामे प्रमुखे वारकद्वयम् ॥ १०८ ॥
शेषं पूर्ववदुद्दिष्टमेकानेकतलान्वितम् ।
भानुभागे च मन्वंशे कल्प्यांशेऽष्टादशांशके ॥ १०९ ॥
विंशे द्वाविंशदंशे च गृहव्यासविभाजिते ।
जात्यात्रा भासपर्यन्ता यामेष्वष्टसु यामतम् ॥ ११० ॥
बाह्यभ्रमंकणादीनि परितः प(प)रिकल्पयेत् ।
एकं वा द्वित्रिभागं वा बाह्यवारं प्रकल्पयेत् ॥ १११ ॥
गृहव्यासं द्विभागेन तथा च चङ्क्रणाद्रुतम् ।
शेषाद्भद्रकर्णं स्थानं छिद्रिदं चांशुपाननम् ॥ ११२ ॥
इष्टदीर्घदण्डं च यस्यं कुड्यं तथा भवेत् ।
पक्षनेत्रनलं वाऽथ भासाद्भवदलंकृतम् ॥ ११३ ॥
उत्तरं वाजनं सान्तरेषणं क्षुद्रवाजनम् ।
स्तूपान्तस्थानं चैव कल्प्यास्तरणं तथा ॥ ११४ ॥
मृतगुल्मागमन्त्यं च प्रमनेव मध्यन्दे प्रति ।
महावर्त्म तु सोपानं कर्णाग्रध्वजमेव वा ॥ ११५ ॥

विजयादिग्रहाणां तु अङ्गयुक्त्या त्वनेन वै ।
विस्तारसदृशं तुङ्गमेकभूमौ विधीयते ॥ ११६ ॥
तस्माद्विभज्यदीर्घे तु .... रोहितोन्नतम् ।
त्रितलस्थं तु भागं तु पञ्चभूमौ रसांशकम् ॥ ११७ ॥
अष्टभागांशकं व्यासात्पञ्चभूमोदयं भवेत् ।
दशांशे नवभूमौ च मन्वंशं सप्तभूमिके ॥ ११८ ॥
सप्तभूमोपरिष्टात्तु मर्त्यानामालयं नहि ।
एकद्वित्रि च भूमौ वा शूद्राणां तु विधीयते ॥ ११९ ॥
वैश्यानां पञ्चभूम्यन्तं चतुर्भूम्यन्तमेव वा ।
भूपानां च सुराणां च सप्तभ्यूम्यन्तरं परम् ॥ १२० ॥
एकभूमोदयं चाष्टभागोर्ध्वं तु धरातलम् ।
द्विभागं चरणोर्ध्वं तु मस्तरोर्ध्वं शिवांशकम् ॥ १२१ ॥
सार्धांशं तु गलोत्सेधं शिखरोर्ध्वं द्विभागया ।
आर्धांशं तु शिखामानं क्रमेणैव तु योजयेत् ॥ १२२ ॥
शिखाविमानं चरणे मस्तरे शिखरे तु वा ।
गलवर्गे तु वा योज्यं त्रिष्वङ्गेषु समं तु वा ॥ १२३ ॥
रुद्रांशे द्वितलोर्ध्वं तु व्योमांशं तु धरातलम् ।
पक्षांशं चरणायामं शेषं पूर्ववदाचरेत् ॥ १२४ ॥
मन्वंशे त्रितलोच्चं तु अधिष्ठानं शिवांशकम् ।
अक्षांशमङ्घ्रितुङ्गं तु शेषं पूर्ववदाचरेत् ॥ १२५ ॥
सप्ताधिकं शिवांशं तु चतुर्भूमोदये कृते ।
पक्षजन्यंशके स्तम्भतलं शेषं तु पूर्ववत् ॥ १२६ ॥
पञ्चभूमौ तु विंशांशे शिवांशं तलमानकम् ।
अश्विन्यंशं तु पादोर्ध्वं शेषं प्रागिव कल्पयेत् ॥ १२७ ॥
त्रयोविंशांशके त्वंशतलं पादन्तु तद्द्वयम् ।
शेषं पूर्ववदुद्दिष्टं सप्तभूमोदयं ततः ॥ १२८ ॥
षड्विंशांशे त्रिपक्षांशे धरायां चरणं क्रमात् ।
सप्तभूमं समाख्यातं अथवा विस्तमानसः ॥ १२९ ॥
सप्तह्रस्तं तु स्तूप्युच्चं तद्द्वयं शिखरोदयम् ।
द्विहस्ताङ्गुलमानं च मञ्चं स्तूपिसमं भवेत् ॥ १३० ॥

शीर्षे च समपादस्थं स्थलं पञ्चसमं भवेत् ।
उपानोच्चं तु षण्मात्रमेवमेव तलं विदुः ॥ १३१ ॥
एतद्दे बाहुभूमौ तु ऊर्ध्वे भूमिरुदाहृता ।
ऊर्ध्वभूचरणोच्चं तु अधमं नष्टवा भवेत् ॥ १३२ ॥
एकांशाधिकमानं तु द्वितीयस्थलपादकम् ।
अथ द्विभूमिभागं तु कृत्वैकाधिकं तु तत् ॥ १३३ ॥
तृतीयभूमिपादो च तथा कुर्यात्तलं मति ।
एकभूमौ स्थलोच्चं तु मञ्चोच्चं द्वितलस्य तु ॥ १३४ ॥
स्तम्भवामे हितांशं तु मञ्चमानतिलं मति ।
भवभूम्येऽसितुङ्गार्धश्वरातालोदयं भवेत् ॥ १३५ ॥
सर्वेषामपि सामान्यं प्रागुक्तपादुकोन्नतम् ।
सप्ताष्टनन्दधर्माशरुद्रांशं वाङ्घ्रिकोदयम् ॥ १३६ ॥
कृते मूलपादस्य तर्क ... .... ... ...
स्तम्भानां भूषणं विप्र प्रागुक्तविधिना कुरु ॥ १३७ ॥
पादबन्धतलं तेषां अङ्गं तेषु तलं भवेत् ।
अनपेक्षमनङ्गेषु सापेक्षाङ्गेषु योजयेत् ॥ १३८ ॥
गृहोच्छेदकच्छेदष्ट्यहा ... वा भवेत् ।
संपूज्य जगरग्राह्ययुग्मदस्त .... सङ्ग्रहेत् ॥ १३९ ॥
ओजार्थपूरणार्थं च यन्मानं योजितं मतम् ।
अधिष्ठानादिवर्गेषु संमिश्रकर्पयत्कृते ॥ १४० ॥
पुरोक्तमानेनैव भवेत्मानं नान्यं विभावयेत् ।
वामतो जालकं कुर्यान्तर्विहृतपादुकम् ॥ १४१ ॥
जालकं च कवाटं च द्वारस्थाने प्रकल्पयेत् ।
पादोपरि भवेत्पादं कुड्यं कुड्योपरि स्मृतम् ॥ १४२ ॥
विपरीतविपत्येव तस्मादुक्तं समाचरेत् ।
अकरीयंशमान्याग्र अष्टांशं वा चतुर्गुणम् ॥ १४३ ॥
कुण्डं वा शीर्षकं विप्र मण्टपं मण्डपाकृतिः ।
यथारुचि यथाशोभं तथा कुर्याद्गृहं बुधः ॥ १४४ ॥
दक्षिणे मूलगेहार्थं मण्डपत्पुरस्तोन्नतम् ।
स्वामात्रागं तु वा विंशादिष्टभूमां तु वासकम् ॥ १४५ ॥

तस्योत्तरे विधावासं नैर्ऋत्यां सूतिकालयम् ।
उत्तरे भोजनस्थानं शांकरे पाचनालयम् ॥ १४६ ॥
किंचिल्लक्षणयाऽऽवासा .... .... .... वरे ।
जलद्रोणिघटं चैव पर्जन्ये वा जयन्तके ॥ १४७ ॥
ऐन्द्रे वा भोजनस्थानं पश्चिमे वा विशेषतः ॥
श्रीकरं प्राङ्मुखं भित्तिरायुष्यं दक्षिणाननम् ॥ १४८ ॥
पश्चिमाभिमुखं ऋद्धिरुत्तराग्रं क्षयं भवेत् ।
प्राक्पुरःशयनं संपद्दक्षिणादायुवर्धनम् ॥ १४९ ॥
पश्चिमे शक्तिसंतापमुत्तरे व्याधिपीडनम् ।
वंशस्यानुगतद्वारं शयनं चाग्रमृत्युदम् ॥ १५० ॥
तस्माच्छिवायामे चैव शनासत्यतो हितौ ।
पापयक्ष्मांशके व्याधिः कर्तव्यं पचनालयम् ॥ १५१ ॥
गृहाज्जेष्ठकनिष्ठान्तं दक्षिणादुत्तरान्तकम् ।
पत्न्योस्तुत्रिपूर्वं तेषां हि सद्मानि वै ॥ १५२ ॥
श्रेणीष्वेवं समाख्यातं .... ... ... ।
शेषाणां परितो वाऽपि कर्तव्यं येन युक्तितः ॥ १५३ ॥
अग्रे वाग्रे पुरस्तात्तु गोशाले दक्षिणेऽपि वा ।
हयेनावासतद्वत्स्यादुष्ट्रङ्गं तथैव च ॥ १५४ ॥
वापीकूपतटाकादि सर्वत्रैवाविरोधितम् ।
पश्चिमे वै स्त्रियादत्ताय पुत्राणामुत्तरे गृहम् ॥ १५५ ॥
अनुजानां च तत्रैवं मर्त्यानां पुरतो हितम् ।
कर्तुरिच्छानुसारेण अनुक्तं तु समाचरेत् ॥ १५६ ॥
हस्तस्तम्भं क्षुपादीनि उभमेव परिग्रहेत् ।
व्यासहस्तगुणप्राप्यनागद्वारे तु योनिकम् ॥ १५७ ॥
कुटिनस्त्वायहस्तवस्तुब्रह्मपक्षयन्तने ।
.... जन्मामात्रं तु यथादीर्घं नागं नवगुणैः ॥ १५८ ॥
दशभूतनमृणमिदं नाहं दतग्रजानि .... ... ... ।
नेत्रगन्धं तु हरिणं पक्षणमिदं गृह ॥ १५९ ॥
प्रमणामुदिशं वादशादयादि कल्पितम् ।
ग्रहाणां पुरे पुरे वाऽपि दक्षिणे दक्षिणेऽपि वा ॥ १६० ॥

शंकरे वा विधानेन कूटं कुर्यात्सुसुन्दरम् ।
गृहव्यासान्तरा नित्यं द्विगुणं त्रिगुणं तु वा ॥ १६१ ॥
चतुष्पञ्चगुणव्यासं ह्यन्तरं गृहकूटयोः ।
नायोरेवमेवं तु परे वाहं च वच्मृणु ॥ १६२ ॥
गृहायामसमं वाऽथ द्विगुणं त्रिगुणं तु वा ।
चतुष्पञ्च वाऽथ ग्रहकूटान्तरं भवेत् ॥ १६३ ॥
ग्रहस्य सकलदीर्घं च गृहं वा पार्श्वयोः पुरे ।
पुरे कल्पं च कूटं चेदिष्टदीर्घायतनं ग्रहेत् ॥ १६४ ॥
ग्रहव्यासानुगुणं कूटं कल्पयेतिसुमना ।
पञ्चहस्तं समारभ्य द्विद्विहस्तविवर्धनात् ॥ १६५ ॥
एकविंशतिहस्तान्तं नवधा कूटविस्तृतम् ।
विस्तारसदृशोत्सेधहस्तं वाऽष्टकारकम् ॥ १६६ ॥
अष्टहस्तं तु वाऽधिवयकूटायामं प्रकल्पयेत् ।
विस्तारद्विगुणं मध्ये कूटायामं प्रकल्पयेत् ॥ १६७ ॥
कूटानां भागमानेन जात्यादिनियमं कुरु ।
हस्तमानेन कूटानां जात्यादिनियमं विना ॥ १६८ ॥
चतुर्भित्तिविशालं तु यथामङ्गं तथा भवेत् ॥ १६९ ॥

---

इत्यंशुमद्भेदे काश्यपशिल्पे ग्रामलक्षणं नामाष्टाशीतितमः पटलः ।